( वर्द्धतां ) । एतेन तदधीनसमृद्धेरात्मनः समृद्धिमाशंसमानेन नाशंसनीया गुरव इति दोषो न स्यात् । स कः यो विमलमतिर्हेलं यथा स्यादेवं विविधमात्रासागर-पारं प्राप्तोपि । अपि सभावनाया अवधारणे इति प्राचः । विविधमात्रा गुरुलघु-रूपा सैव सागरो दुर्विज्ञेयत्वात् । मात्राशब्देनात्र वर्णस्यापि ग्रहणं तस्य मात्राघटि-तत्वात् । तथाहि, एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यंजनं चार्धमात्रिकं ॥ निर्मलबुद्धया अनायासेन गुरुलघुरूपमात्रावर्णसमुद्रस्य पारं तीरं श्च ( I ) शेषज्ञत्व गतः । इह ग्रथे आदौ मात्रोत्कीर्तनान्मात्राया एव प्राधान्यादत्रोपन्यास इत्यन्ये । प्रथममादौ भाषातरंडः भाषा लौकिकपदप्रयोगः भाषा एव तरंडा नौर्यस्य सः । तथा भाषाकवित्वे पिंगल एव आद्यकविरिति-प्रसिद्धमेव । मात्राभाषाशब्दयोः ह्रस्वत्वं । पादालिनी तरंडा नौरिति हारावली । तथा च प्रसिद्धिः । बुभुक्षोर्गरुडस्य पुरस्तात् प्रबोधवचनेन प्रस्तारलिखनव्याजेन एकदैकत्र लिखित द्वितीयस्थाने दृश्यते तदैव गरुत्मता पिंगलो भोक्तव्य इति व्यवस्थापय ( ता ) षड्विंशत्यक्षरप्रस्तारं कृत्वा समुद्रे निर्म्मज्य पार गत्वा आत्मान रक्षितवान् । ततो हेतोरर्थान्तरमपि । पिंगलो जयति । यो विमलमतिर्हेलं यथा स्या-देवं विविधमात्रासागरमपि प्राप्तः नानाविधमात्रैव सागर इत्युमानपूर्वपदः कर्मधारय एव, उपमानानि सामान्यवचनैरिति समासः । अवधारयितुमशक्यतया मात्रासाग-रयोः साम्यं । कथंभूतः णायो ज्ञातः अर्थाद्गरुडेन । अपिशब्दात् ब्राह्मणव्याजन ( व्याज ) वेषधारी भिक्षुकः शेषनागत्वेन ज्ञातः । ज्ञो ण इति णत्वं यथा राज्ञी राणी । तर्हि सागरपारं कथं प्राप्त इत्याह । प्रथम भाषातरंडः आदौ प्रबोधवचनमेव तरंडा नौका यस्य स तथोक्तः ॥

२. ननु गुरुलघुरूपमात्रासागरे को गुरुः को लघुरित्याह दीहो इति दीर्घः संयुक्तपरो बिन्दुयुतः पातितश्चरणाते स गुरुर्वक्रो द्विमात्रो अन्यो लघुर्भवति शुद्ध एककलः । अयमर्थः । स गुरुर्भवति किमात्मकः द्विमात्रो मात्राद्वयघटितः कीदृशो लेखनीयः वक्रोदात्ताकारः । वक्रादिषु चेत्यनुस्वारः । स कः दीर्घो ह्रस्वेतरः । तेन प्लुतोपि गुरुः । आकारादिकप्रभृति सध्यक्षराणि गुरूणि । अपरः तथा बिंदुयुतो वर्णो गुरुः । सयुक्तः परो यस्येति बहुव्रीहिः । यथा वृषध्वज इत्यत्र षकारस्य गुरुत्वं । बिंदुभ्यां बिंदुना वा युत इति समासादनुस्वारविसर्गयोर्ग्रहणं । विसर्गांतस्यापभ्रंशे ऽसंभवात्तद्विशिष्य नोक्त । सस्कृते तथाप्युपकरिष्यति । पातितश्च चरणाते, च शब्दो विकल्पार्थः । तेन पादाते वैकल्पिकोयं विधिः । उक्तादन्यो वर्ण एकमात्रारूपो वा एकमात्रो वा लघुर्भवति । स चैककलात्मकः । कथ लिख्यतामित्याह । शुद्धः सरलो दंडाकार इति यावत् ॥

३. उदाहरणेन तत्स्फुटीकरोति माई इति सख्योरालापः । हे मातः त शभुं

कामयमाना सा गौरी गर्हितत्वं (? अहिल्त्वं) करोति। वरगुणरहितं पतिमिच्छं-तीत्यर्थः। तं क यो देवमात्राख्यप्रसिद्धो रूपेण सौंदर्येण हेयो विरूपाक्षत्वात्। हीनोऽकुलिनो अलक्षजन्मत्वात्। जीर्णो जरातुरो रोगादिना कंठस्थितविषत्वाद्वेति शेषः। महावृद्ध इत्यर्थः कदाचिद् ब्रह्मणोप्याद्यत्वात्॥

४. गुरोरपवादमाह कत्थवि इति। कुत्रापि संयुक्तपरो वर्णो लघुर्भवति दर्शनेन लक्ष्यानुरोधेन। यथा उदाहरति परिस्खलति चित्तधैर्यं। तरुणीकटाक्षे निर्वृत्त सगत। उद्दत्वादित्युल्व। परिल्हसइ इत्यत्र संयुक्तपरतया गुरुत्वे गाथालक्ष-णविरोधापत्तेः॥

५. गुरुताविकल्पमाह इहिआरा इति। इकारहिकारो विंदुयुक्तो, एओ शुद्धौ वर्णमिलितावपि लघू। रहव्यंजनसंयोगे परतः अशेषमपि सविभाषं। एतदशेषं सविभाषं सविकल्प लघु भवति यथासन्निवेशं लघु गुरु च भवती-त्यर्थः। एतत् कतमत् इकारहिकारौ सानुस्वारौ ए ओ इत्येतौ अचौ शुद्धौ केवलौ चकारादौ मिलितावपि च लघू भवतः। रह इत्येताभ्यां हलभ्या यः संयोगस्तस्मिन् परतः पूर्वमक्षरं च अथवा परत्र पदाते अशेषमपि सविकल्प गुरुत्वमापद्यते। सिंहिणी छंदः।

६. उदाहरति यथा माणिणि इति। सखी वदति। मानिनि, मानैः किं फल, एष यदि चरणे पतितः कांतः। एओ जे इति वारेंद्री भाषा। एष यदीत्यर्थः। अत्रार्थांतरन्यासः। सहजेन भुजंगमो यदि नमति तदा मणिमंत्रौ किं कुरुतः। तावन्मानः प्रकर्तव्यो यावत्पादानतो भवेदिति भरते मानकालः प्रियप्रणिपातपर्यंतः कथितः।

७. रहव्यंजनसंयोगे यथा उदाहरति, चेउ इति। हे चेतः, सहजेन त्वं चंचलसुन्दरि(? री)हृदये वलत् सत्। खुल्लणा इति देशीयभाषा अत्र वर्तते। हे अत्र पदमपि न ददासि क्रीडसि पुनरुल्लसत्। वैकल्पिकी विभाषा।

८ अपर विशेषमाह, जइ इति। यदि दीर्घोपि च वर्णो लघुजिह्वया पठितो भवति सोपि लघुः। वर्णोपि त्वरितपठितो यदि तदा द्वौ त्रीनपि वर्णानेकं जानीत। गाथा छंदः।

९. उदाहरति अरेरे इति। हे कृष्ण, क्षुद्रा नावं वाहय सचाल्य दुखं न देहि! त्व अस्यां नद्या संतार्य यत्प्रार्थयसि तद्गृहाण। नाविकबुद्ध्या रे इति संबोधनं युक्तं। प्रथमप्रतीके लघुजिह्वया एतत् लघुत्वं। द्वितीयप्रतीके डगमगेत्य-नुकरणशब्दार्थोयमकारगकारमकाराणा त्वरितपठितानामेकवर्णता।

१०. किमनेन परिश्रमेणेत्यत आह। जेम ण इति। यथा न सहते कनक-तुला तिलतुलनामर्द्धार्द्धेन इत्थं न सहते श्रवणतुला अपच्छंदं छंदोभंगेन। यथा

कनकतुला स्वभावादेवोभयदिशि समैवावतिष्ठते एकत्र तिलमात्रगुरुतयापि विषमा भवति। इत्थं समेनैव प्रकारेण सभ्यानां श्रवणतुला छंदोभंगेन जातमपच्छदो न सहते। कनकतुलातिप्रसिद्धा। छंदोविशुद्धकवित्वं कृत्वा सज्जनमनोरंजनलाभः स्यादिति पूजादिना सुखीभवति। छंदोऽध्ययनप्रवृत्त्यौपायिकमेतत्।

११. छंदोऽध्ययनं विना का क्षतिरिति न केवलं छंदोभंगेन श्रवणदुःखमनिष्ट-फलं भवतीत्याहेत्यपि कश्चित्, अबुध इति। अबुधो बुधानां मध्ये काव्यं यः पठति लक्षणविहीनं भुजाग्रलग्नखड्गेन शीर्षं खंडितं (न) जानाति। लक्षणविहीनोऽन-धीतवृत्तलक्षणः। छंदःपडितदत्तं दूषणमेव खड्गः। काव्यमेव शिरः। तस्माच्छंदोऽवश्यमेव पठनीयं। गाथा छंदः।

१२. मात्रायाः प्राधान्यादादौ मात्रागणव्यवस्था करोति, टठडढाण इति। मध्ये अक्षराणां पंचाक्षराणि गणभेदा भवंति। के ते टठडढणाः। त एव यथासख्यं छपचतदसंज्ञका भवंति। कुत्र संकेतिताः षट्पचचतुस्त्रिद्विकलासु। तथा च, षट्कलः टगणः स तव छगणः, पंचकलः टगणः स एव पगणः चतुःकलो डगण स एव चगणः, त्रिकलो टगणः स एव तगणः, द्विकलो णगणः स एव दगणः। गाथा छंदः।

१३. तेषां गणाना कियतो भेदा भवतीत्याह टगण इति। टगणः षट्कला-त्मकस्त्रयोदशभेदो भवति। त्रयोदश भेदा यस्येति बहुव्रीहिः। ठगणस्य पचकलात्मक-स्याष्टौ भेदा भवति। डगणस्य चतुःकलात्मकस्य पच भेदा भवति। ढगणे त्रिक-लात्मके त्रयो, भेदाः स्युः। णगणस्य द्विकलात्मकस्य द्वौ भेदो भवतः। एतेषा भेदाः प्रस्तारसंख्याकृताः। गाथा छंदः।

१४. प्रस्तार एव कथ ज्ञातव्य इत्यपेक्षायामेकया गाथया मात्रावर्णसाधार ण्येन प्रस्तार प्रस्तौति। पढम इति। प्रथमगुरोरधःस्थानेषु परिस्थापय आत्म-बुद्ध्या। सहशी सहशी पक्तिः उद्वृत्तं गुरुं लघु देहि। अयमर्थः सर्वलघुपर्यंत प्रस्तारो भवति आत्मबुद्ध्या समूहं कृत्वा यत्र यः प्रथमो गुरुस्तस्याधस्ताल्लघु स्थापयित्वा यथोपरि तथाशेषं वारं वार लिखेत्। उद्वृत्त पूर्वस्थाने सावकाशे गुरुणा प्रस्तारसंख्या पूरयेत् मात्राप्रस्तारे एकया कलया अपूर्णे लघुं कलाद्वयेन अपूर्णे गुरुं देहि। यावत्या यावत्याः कलायाः प्रस्तारावधिस्तावती कला सर्वत्र पूरणीया। पूर्वपूर्वस्थाने शून्ये गुरवो लेख्याः। एका कला चेदुद्वृत्ता गुरोः पूर्वस्थाने लघु-र्लेख्यः। वर्णप्रस्तारः प्रकारांतरेणापि संभवति। तथाहि, एकगुरोरधस्थाने एक लघुं दद्यादिति। एवं वर्णप्रस्तारः तत एकैकवर्णवृद्धौ तमेव प्रस्तारमधोधःक्रमेण द्विगुणीकृत्य पूर्वार्द्धांते सर्वत्र गुरुमपरार्द्धांते सर्वत्र लघु दद्यादित्येवं प्रस्तारवृद्धिः।

१५. अथ षट्कलप्रस्तारे गणाना नामानि, हर, इति। हरः १ शशी २ शूरः ३ शक्रः ४ शेषः ५ अहिः ६ कमलं ७ ब्रह्मा ८ किणिग्रधः ६ ध्रुवः १० धर्मः ११ शाली १२ चरः १३ एते त्रयोदश इष्टदेवता षण्मात्रे प्रस्तारे जातानां त्रयोदशगणानां ज्ञातव्याः। एतदीयत्वेन एतान्येव नामानि तेषा गणाना बोद्धव्यानि। प्रयोजनमग्रत एव हि। ते ते शब्दाः प्रत्येकं ज्ञेयाः।

१६. पंचकलप्रस्तारे गणानां नामानि, इंदासण इति। इंद्रासनः १ अपरशूरः २ चापः ३ हीरश्च ४ शेखरः ५ कुसुमः ६ अहिगणः ७ पापगणः ८ ध्रुव निश्चितं पचकले गणे कथिताः, अर्थाद्देवताः।

१७. चतुःकलानां गणाना नामानि, गुरुजुअ इति। गुरुयुगः कर्णः १ गुर्वंतः करतलं २ गुरुमध्यः पयोधरः ३ आदिगुरुर्वसुश्चरणः ४ विप्रः सर्वैर्लघुभिः ५।

१८. अथ त्रिकलानां त्रयाणानामेकैकया गाथया नामानि, धअ इति। लघुकालत्वेन आदौ लघुं विन्यस्य त्रिकलप्रस्तारे प्रथममेतानि नामानि हे पडिताः जानीत यूयमित्यर्थः। नामान्यस्य ध्वजः चिह्नं चिरचिरालयः तोमरं तुंबुरपत्रं चूतमाला रसः वासः पवनः वलयं लघुकालत्वेनेति विषमकलप्रस्तारे प्रथमतो लघुर्लेखनीय इत्यभिप्रायं पिंगलः स्फुटीचकार।

१६. मध्यगणस्य नामानि, सुर इति। सुरपतिः पटहः तालः करतालः आनंदः छंदः निर्वाण ससमुद्रं। कथं समुद्रेण सह वर्तत इति ससमुद्र।

२०. अथातगणस्य नामानि, भावा इति। अस्य त्रिलघुगणस्य इति नाम कविवरः पिंगलो भणति भावः १ रसः २ ताडवं ३ नारी ४ कुलभावि (मि) नी ५ एतन्नामपचकं त्रिलघुगणस्येत्यर्थः।

२१. द्विकलप्रस्तारे गुरुर्लघुयुगं च भवति तत्र गुरोर्नामानि णेउर इति। अनेन गुरोर्नामानि भवति, नूपुरः १ रसना २ आभरण ३ चामर ४ फणी ५ मुग्धा ६ कनकं ७ कुडलक ८ चक्र ६ मानस १० वलयः ११ हारावलीति १२।

२२. लघुयुगरूपगणस्य नामानि, णिअ इति। द्विलघोर्गणस्य समासकविदृष्ट सक्षेपकविदृष्टं नाम, निजप्रियः १ परमप्रियः २ सुप्रियः ३। समासकविः पिंगलः अल्पाक्षरेण प्रचुरार्थप्रतिपादकत्वात्। अथ यद्यपि चतुर्मात्राप्रस्तारे प्रतिगणमेकैकानि कथितानि नामानि तावता शास्त्रव्यवहारो न स्यादिति पुनः प्रतिगणमेकैकया गाथया फणिराजः प्रतिगणं भणति।

२३. सुरअलअ इति। तस्य चतुःकलप्रस्तारेण व्यक्तीकृत्य कथितस्येत्यर्थः। कर्णसमानेन यथापूर्वं कर्ण इति नाम तथा तत्समानेनैव नामसमूहेन लक्षितोऽय गणः। सुरत्चलक गुरुयुगल रसिकमनोलग्न मनोहरणं सुमतिः लंबित लहलहित।

२४. गुर्वंतगणस्यैतानि नामानि, कर इति। करः १ पाणिकमलं २ हस्तः ३ बाहुः ४ भुजदंडः ५ प्रहरणं ६ अशनिः ७ गजाभरणं ८ रत्नं ९ नानाभुजाभरणानि।

२५. मध्यगुरुगणस्यैतानि नामानि, भुअ इति। भूपतिः १ अश्वपतिः २ नरपतिः ३ गजपतिः ४ वसुधाधिपः ५ राजा ६ गोपालः ७ अपरो नायकः ८ चक्रवर्ती ९ पयोधरः १० पवनः ११ नरेंद्रः १२।

२६. गुर्वादिगणस्यैतानि नामानि, पअ इति। पदः १ पादः २ चरणयुगल ३ अपरं प्रकाशयति गंडः ४ बलभद्रः ५ तातः ६ पितामहः ७ दहनः ८ नूपुरः ९ रत्नं १० जंघयुगलेन ११।

२७. अथ चतुर्लघुगणस्यैतानि नामानि, पढमं इति। प्रथमं ईदृशि विप्रः १ द्वितीये शरः २ पचजातिशिखरेण द्विजवरः ३ चरमे चतुर्थे पादे भवति चतुष्केण (? न) लघुकेण (? न)।

२८. पंचकलानां प्रत्येकं नामानि, सुणरेंद इति। सुनरेंद्रः १ अहिः २ कुंजरः ३ गजवरदंती ५ अथ मेघः ६ ऐरावतः ७ तारापतिः ८ गगन च ९ भ्रूपः १० तल्पः।

२९. मध्यलघुकस्य पचकलगणविशेषस्य नामानि, पक्खि इति। मध्यलघुके गणे एतानि नामानि विजानीहि। एतानि कानि पक्षी १ विरालः २ मृगेंद्रः ३ वीणा ४ अहिः ५ यक्षः ६ अमृतं ७ जोहलं ८ सुवर्णः ९ पन्नगाशनः १० गरुडः।

३०. पुनः पचकलगणमात्रस्य नामानि, बहु इति। बहुविविधप्रहरणैर्नानाविधायुधवाचकैः शब्दैः पंचकलो गणो भवति। पंचकले सक्षेपेणोक्तं चतुःकले संक्षिपति। गअरहेति, गज १ रथ १ तुरंग ३ पदाति ४ नाम्ना चतुर्मात्रिकान् गणान् जानीहि।

३१–३२. अथगुरोर्द्विकलप्रस्तारे कथितान्यपि नामानि गुरुलघुनामकथनप्रस्तावे स्मारयति, तालंक इति। ताटंकहारनूपुरकेयूराणि भवति गुरुभेदाः। गुरोर्नामानि भवंतीत्यर्थः। वस्तुतस्तु शेषनागस्य सहस्राननत्वात्पुनरुक्तिर्न दोषाय। लघोर्नामानि सर इति शरः मेरुः दंडः काहलः अन्ये च ये आयुधाभिधायिनः शब्दाः कलकलादयः रूपरसगंधस्पर्शाश्च कुसुमवाचिनश्च ये शब्दास्तैर्लघुमेव जानीत।

३३ अथ वर्णगणः, मोति इति। मो मगणस्त्रिगुरुः नो नगणस्त्रिलघुः लघुगुर्वादी यभौ लघुरादौ यगणो गुरुरादौ भगणो जगणो मध्यगुरुः। रगणो मध्यलघुः सगणः पुनरंतगुरुः तगणोपि अंतलघुकेन भवतीत्यर्थः।

३४. अथ गणाना देवता आह, पुहवीति। पृथ्वी १ जल २ शिखी ३ वातः ४ गगनः ५ सूर्यः ६ चंद्रमा ७ नागः ८ एता अष्टगणे इष्टदेवता यथासंख्यं मगणादितः पिंगलेन कथिताः।

३५. अथ गणानां मित्रामित्रादिकं निरूपयति, मगणेति। मगणनगणौ मित्रे भवतः। यगणभगणौ भृत्यौ भवतः। जगणतगणौ उदासीनौ भवतः। अवशिष्टौ सगणरगणौ अरी भवतः।

३६. अथ गणाना फलानि, मगणेति। मगणः ऋद्धिं स्थिरस्कधत्व च ददाति। यगणः सुखसपदं ददाति। रगणो मरण सपादयति। जगणः खरकिरण सतापं विसर्जयति। तगणः शून्यं फल कथयति। सगणः स्वदेशादुद्वासयति। भगणः अनेकमगल स्थापयति। पिंगलकविर्भाषते, यावत्काव्य गाथा द्विपदीं च जानासि तत्र यदि नगणः प्रथमं भवति तदा तस्य ऋद्धिः बुद्धिः सर्वं स्फुरति रणे दुस्तर तरति। तत्र यदि नायकस्य क्रियते तदा तत्कृत मदभद्रफल। देवताना क्रियते चेत्तत्र न गणविचारः।

३७. अथ कवित्वादौ गणद्वयविचारे फलान्याह, मित्ते इति। कथमपि ग्रन्थादौ मदो गणो भवति तदा तद्रक्षार्थं गणद्वयविचारः क्रियते। यदि मित्रगणान्मित्रगण एव भवति तदा ऋद्धिं बुद्धिं च ददाति। यदि मित्रगणात् भृत्यगणो भवति तदा स्थिरस्कधत्व युद्धे निर्भयत्वं च ददाति। यदि मित्रगणादुदासीनगणो भवति तदा कार्यबंधो न भवति। यदि मित्रगणाच्छत्रुगणो भवति तदा गोत्रजा बाधवाश्च पीडयते। यदि भृत्यगणान्मित्रगणो भवति तदा सर्व कार्यं भवति भृत्यगणाद्भृत्यगणे च सर्वे वशगा भवन्ति। यदि भृत्यगणादुदासीनगणो भवति तदा धन नाशमाप्नोति। यदि भृत्यगणाद्वैरिगणो भवति तदा आक्रन्दो भवति नायको विनश्यतीत्यर्थः।

३८. यदि उदासीनगणान्मित्रगणो भवति तदा कार्यबधं कथयति। यदि उदासीगणात् भृत्यगणो भवति यदि उदासीनगणात् उदासीनगग एव भवति तदा न मद्र न भद्र सामान्यमेव फलं भवति। यदि उदासीनगणात् शत्रुगणो भवति तदा गोत्रजा अपि शत्रवो भवति। यदि शत्रुगणात् मित्रगणो भवति तदा गृहिणी नश्यति। यदि पुनः शत्रुगणादुदासीनगणो भवति तदा धन नश्यति। यदि शत्रुगणात शत्रुगण एव भवति तदा नायको नाशमाप्नोति।

३९. अथ मात्रावृत्ताना उद्दिष्ट निरूपयति, पुव्व इति। तत्र षट्कलप्रस्तारे एको गुरु द्वौ लघू पुनरेको गुरुरित्येवमाकारो गणः कुत्रोस्तीति प्रश्ने कृते तदाकार गण लिखित्वा पूर्वयुगलसमानाको देयः पूर्वाकमेकीकृत्य तत्सख्याकोग्रे देय इत्यर्थः। तत्र च आदिकलाया प्रथमोंको देयः द्वितीयकलाया पूर्वमेकैव कलास्ति पूर्व-

युगलसमानांको नास्ति तेन द्वितीयोंकः एव देयस्तृतीयः कलाया पूर्वयुगलसमानोंकस्तृतीयांकः ३ तेन तृतीयांको देयः। चतुर्थकलाया पंचमः ५ पंचमकलायामष्टमः ८ षष्ठकलाया त्रयोदशः १३ गुरुस्तु द्विकलात्मको भवति। तेन उपरि अधश्चांकद्वयं लघोस्तु एककलात्मकत्वादुपर्येवेति विवेकः। एवं च सति ये गुरुमूर्द्धांकास्तै शेषांको लोप्यः। लुप्तेवशेषांके अवशिष्टेनांकेन स्थानं जानीत। तदंकसमप्रस्तारस्थानस्थोऽयं गण इति वदेत्। तत्र च प्रथमांको गुरुमूर्द्धनि देयः। द्वितीयांक अध एव देयः। तेनात्र च गुरुमूर्द्धावस्थितमकद्वयं वर्तते। प्रथमगुरुमूर्द्धन्यवस्थितः प्रथमोंकः। अपरगुरुमूर्द्धन्यवस्थितश्चाष्टमांकः। तदुभयमेकीकृत्य शेषांके त्रयोदशांके लुप्ते चतुर्थोंकस्तिष्ठति तेन तत्रस्थोयं गण इति जानीतेति भावः। एव च पूर्वयुगल क्रमो बोद्धव्यः। एवमधिककलास्वपि ज्ञातव्यं।

४१. अथ मात्रावृत्ताना नष्टं निरूपयति, णट्ठे इति। षट्कलप्रस्तारे सप्तमस्थाने कीदृशो गण इति प्रश्ने कृते षडपि कलाः पृथक् लेख्याः। पूर्ववत् अंका देयाः। प्रश्नांकं शेषांकेन लुपेत्। तत्र लुप्तावशिष्टशेषांके पूर्वपूर्वतरांकमपि लुपेत्। तथा च सति यो योंको यत्र यत्र भागं प्राप्नोति सा सा कला उत्तरकला नीत्वा गुरुतामेति इत्येव कथयति सत्य पिंगलनागः। तथा चात्र प्रश्नांकः सप्तांकस्तस्मिन् लुप्ते षष्ठांकस्तिष्ठति तत्र पंचमकलांके लुप्ते एकांकस्तिष्ठति। तत्र प्रथमांक एव लोपं गच्छतीति भावः।

४२. अथ वर्णवृत्तानामुद्दिष्टं, अक्खर इति। तत्र चतुरक्षरप्रस्तारे द्वौ गुरू एको लघुरेको गुरुरित्येवमाकारो गणः कुत्रास्तीति प्रश्ने कृते तदाकारं प्रश्नगण लिखित्वा प्रथम प्रथमांको देयः ततो द्विगुणान् देहि इति प्रकारेण उद्दिष्ट गुणन कुरु। ततो लघोरुपरि योंकस्तत्राधिकमेकमंकं दत्वा तत्रैकीकृत्य यद्भवति तदंकसमानस्थाने स गणोस्तीति ज्ञातव्य।

४३ अथ वर्णवृत्ताना नष्ट, णट्ठे इति। पुनश्चतुरक्षरप्रस्तारे सप्तमस्थाने कीदृशो गणोस्तीति प्रश्ने कृते प्रश्नांको विभाज्यः, समे भागे सति लघुर्ज्ञेयः। विषमे तु भागे एकं दत्वा पुनर्विभजेत् तदा गुरुर्भवति एवं पुनःपुनर्भागसमभागे लघुर्ज्ञातव्यः। विषमे एक दत्वा भागे कृते गुरुर्ज्ञातव्यः। एव यावत्पूरण भवति तावद्विभजनीयोंक इत्यर्थः।

४४. अथ वर्णमेरुः अक्खर इति। एकाक्षरप्रस्तारे कति सर्वगुरवो भवति कति सर्वलघवः। द्व्यक्षरप्रस्तारे कति सर्वगुरवः कति एकगुरवः कति सर्वलघवः। एवं त्र्यक्षरचतुरक्षरप्रस्तारे षड्विंशत्यक्षरपर्यंत एकैकगुरुह्रासेन प्रश्ने एषा प्रक्रिया। प्रथममेकं कोष्ठं लिखित्वा तदधो द्वयं तदधस्त्रयः तदधश्चत्वारि तदधः पंच एवमधोधः पंक्तयो लेख्याः। तत्र कोष्ठगृहे आदौ तथान्ते प्रथमांको

देयः। मध्यशून्यकोष्ठकेषु तदीयतदीयशिरःस्थकोष्ठद्वयाङ्कसमानाङ्को देयः। एवमन्यत्रापि पूरणीयकोष्ठानामुपरि स्थिताङ्कद्वयमेकीकृत्य पूरणं विधेयं। वर्णमेरौ चतुरक्षरप्रस्तारे प्रथमं चतुर्गुरुर्गणोऽस्ति ततस्त्रिगुरवश्चत्वारो गणास्ततो द्विगुरवः षट् गणास्तत एकगुरवश्चत्वारो गणास्ततः सर्वलघुरेको गणोऽस्तीति स्फोरितमस्ति। एवं पञ्चाक्षरादावपि।

४५. अथ वर्णपताका, उद्दिष्ठा सरि इति। तत्र चतुरक्षरे सर्वगुरुः कुत्र स्थानेऽस्ति, त्रिगुरुः कुत्रास्ति, द्विगुरुः कुत्रास्ति, एकगुरुः कुत्रास्ति, सर्वलघुः कुत्रास्तीति प्रश्ने पङ्क्तिक्रमेणाङ्का धारणीयाः उद्दिट्ठा सरीति। तत्र षोडशाङ्काः पूरयितव्याः। प्रथमपङ्क्त्यधःस्थिताः पूर्वाङ्केनापराङ्कमेकीकृत्य भरणं कुर्यात्। आत्मकं पूर्वाङ्कस्य परभागे स्थापय। यदि प्रथमपङ्क्तिपूर्वाङ्केन भरणं न भवति तदा द्वितीयपङ्क्तिपूर्वाङ्केनापि पूरणीयं। एवं यावता षोडशाप्यङ्का लभ्यते तावत्कर्तव्यं। एवमन्यत्रापि बोद्धव्यं। चतुरक्षरप्रस्तारे द्वितीयतृतीयपञ्चमनवमस्थानेषु गुरवो-गणाः चतुर्थषष्ठसप्तमदशमैकादशत्रयोदशस्थानेषु द्विगुरवः। अष्टमद्वादशचतु-र्दशपञ्चदशस्थानेषु एकगुरवः। प्रथमस्थाने चतुर्गुरुः, षोडशस्थाने चतुर्लघुः। एवं पञ्चाक्षरादावपि ज्ञेयं।

४६. अथ मात्रामेरुः, दुइ दुइ इति। पूर्ववत्प्रश्ने द्वे द्वे कोष्ठे समे लिखि-तव्ये प्रथमे द्वयं, द्वितीये त्रयं, चतुर्थे त्रयं, पंचमे चत्वारि अंकाः। कोष्ठशब्देनात्र कोष्ठपङ्क्तिरूपं लक्ष्यते। द्वे द्वे कोष्ठपंक्ती समे लिखितव्ये इत्यर्थः। एककलायाः प्रस्तारो न भवतीति द्विकोष्ठैवादिपङ्क्तिरपि एवं कोष्ठपङ्क्तिषु अधोधःक्रमेण लिखितासु सर्वत्र अंत्यकोष्ठे प्रथमाङ्को देयः। ततः उपान्त्यकोष्ठेषु एकाङ्कादार-भ्य क्रमेण द्वात्रिंशत्पर्यंतमङ्का देयाः। ततश्च सर्वेषां प्रथमकोष्ठे एकं, ततो द्वयं, तत एकं, ततस्त्रयं, पुनरेकं, ततश्चत्वारि, तत एकं, ततः पंच, तत एकं, ततः षट् इति क्रमेण एकाङ्केण मिलिता अंका देयाः। एवमाद्ये अंत्ये उपान्त्ये कोष्ठके प्रपूर्णे मध्यस्थितशून्यकोष्ठकेषु पूरणीयकोष्ठशिरोङ्केन तच्छिरःकोष्ठस्थपरकोष्ठाङ्कमेकी-कृत्याङ्का देयाः। एवं सर्वत्र ज्ञेयं।

४८. अथ मात्रापताका, एक्क लोपे इति। अमुकगणः कुत्रास्तीति प्रश्ने पूर्वयुगलक्रमेणाङ्के दत्ते शेषाङ्केऽग्रिमाङ्के पूर्वाङ्कमेकैकक्रमेण लोपयित्वा एकगुरुं जानीहि। एतावता एतदुक्तं प्रथमाङ्कशेषाङ्के लोपयित्वा अवशिष्टशेषाङ्कसदृश-प्रस्तारस्थाने एकगुरुं जानीहि तथा द्वितीयाङ्कशेषाङ्के लोपयित्वा अवशिष्टशेषाङ्क-सदृशप्रस्तारस्थाने एकगुरुं जानीहि। एवमेकं गुरुमानीय अनन्तरमेकान्तरितमंक-द्वयमेकीकृत्य शेषाङ्के लोपयित्वाऽवशिष्टशेषाङ्कसदृशप्रस्तारस्थाने द्विगुरुं जानीहि। एवमङ्कत्रयमेकीकृत्य शेषाङ्के लोपयित्वाऽवशिष्टशेषाङ्कसदृशप्रस्तारस्थाने त्रिगुरुं

जानीहि । एवं चतुर्गुरुपंचगुर्वादिकमानेतव्यं । जो पावहि सो परहि मेलावहु, अस्यायमर्थः । प्राप्यते स हारको भवति स च पराङ्केन सह गुरुर्भवति एतावतैतदुक्तं भवति । हारकोंकः सन्निहितपुरःस्थिताकेन सह गुरुर्भवति । अन्येऽङ्का लघवो भवंति । तेन ज्ञायते, प्रस्तारः एकगुरुद्विगुर्वादयोऽस्मिन् स्थाने एवमाकाराः संतीति व्याख्यात ।

४६. अथ अमुकच्छन्दसि कति गुरवः कति च लघवः संतीति प्रश्ने कृते लघुज्ञानाय एषा प्रक्रिया पुच्छल इति । पृष्टच्छदसः कलाः कृत्वा छदोऽक्षरसख्याकं तत्र लुपेत् । अवशिष्टैरङ्कैर्गुरुं जानीत । गुरौ जाते परिशिष्टान् लघून् जानीत ।

५०. अथ छंदःसख्या, अठाइसा इति । अष्टविंशति (? षट्विंशति) ततः सप्तशतानि ततः सप्तदश सहस्राणि ततो द्विचत्वारिंशल्लक्ष ततस्त्रयोदश कोटीसख्यं छन्दोऽत्र षट्विंशतिवर्णप्रस्तारस्य विषयोप्ययमेव ।

५१. अथ गाथाप्रकरणं । तत्र गाहूप्रभृतीना उद्देशं रड्डाछन्दसा करोति, होइ इति । चतुःपचाशन्मात्रो गाहू भवति १ गाथा च सप्तपचाशन्मात्रा २ तथा विगाथा परावृत्य क्रियते सप्तपंचाशन्मात्रा भवतीत्यर्थः । द्वितीयार्द्धलक्षण प्रथमार्द्धे प्रथमार्द्धलक्षणं द्वितीयार्द्धे ३ उद्गाथः षष्ठिमात्रः ४ गाहिण्या ( ? न्यां ) द्विषष्ठि मात्रा दीयते ५ तथैव परावर्ते सिंहिनी द्विषष्ठिमात्रैव भवति परतु उत्तरार्द्ध-लक्षणं प्रथमार्धे प्रथमार्द्धलक्षणं उत्तरार्द्धे भवतीत्यर्थः । एवमन्योन्यगुणलक्षणानि सप्तरूपकानि, स्कंधके चतुःषष्ठि मात्रा भवंति ।

५२. अथैषा विशेषलक्षणान्याह, पुव्वद्धे इति । पूर्वार्द्धे उत्तरार्द्धे च सप्ताधिकविंशति मात्रा भवति । अथ पदद्वयमध्ये षष्ठो गणो मेरुरेव भवति । शार मेरु इति लघोर्नाम ।

५३. यथा चदो इति । चंद्रः चंदन हारः तावत् रूपं प्रकाशयत्येते चडेश्वरस्य वरा श्रेष्ठा कीर्ति र्यावत् आत्मानं ( न ) निदर्शयति । तस्यां समुदिताया तु चन्द्राद-योपि मलिनीयते इत्यर्थः ।

५४. अथ गाथा, पढममिति । प्रथम द्वादशमात्रासु विश्रामः । द्वितीये अष्टादशमात्रासु । यथा प्रथमचरणे विश्रामस्तथा तृतीयचरणे विश्रामः । शेषे चतुर्थे चरणे पचदशमात्राभिर्विभूषिता गाथा ।

५५. यथा जेणेति । मानिनीप्रबोधाय सखीवचनं । येन विना न जीव्यते अनुनीयते स कृतापराधोपि । प्राप्तेपि नगरदाहे भण कथय कस्य न वल्लभोऽग्निः ।

५६. अथ संख्यां रूपं च उट्टवनिकाक्रमेणाह, सत्त गणा इति । अत्र चतुःकलाः सप्त गणा भवंति दीर्घांताः दीर्घ इति मात्राद्वयोपलक्षणं द्विकलाता इत्यर्थः । अत्र

षष्ठो गणो जगणो भवति। नगणो लघुर्वा चतुर्लघुर्वा गणो भवतीत्यर्थः। एतेन सर्वलघुरपि गाथा भवतीति ज्ञापित। अत्र विषमस्थाने प्रथम-तृतीय पंचमस्थाने जगणो न भवति तदा गाथाया उत्तरार्द्धे षष्ठ गण लघुरूपमेव जानीत। षष्ठो गणः एकलघुरूपो भवतीत्यर्थः।

५७. अथ गाथासंक्षेपमाह, सव्वाए इति। सर्वस्या गाथायां सप्तपञ्चाशन्मात्रा भवति पूर्वार्द्धे त्रिंशन्मात्राः उत्तरार्द्धे सप्तविंशतिर्मात्रा भवति इति।

५८. अथ गाथासु सर्वगुरुर्गाथा कथ्यते, सत्ताईसा इति। सर्वस्यां गाथाया सप्तविंशतिर्गुरवो यस्या राजंते सा गाथाना मध्ये लक्ष्मीरायाता त्रिंशदक्षरा।

५९. अथ गुरुह्रासक्रमेण नामभेदानयनप्रकारमाह, तीसक्खरेति। त्रिंशदक्षरा लक्ष्मीः ता सर्वे वदंति च विख्याता। एकैकगुरुह्रासेन एकैकवर्णवृद्धया एकैकनाम भवति।

६०–६१. ततस्तान्येव नामानि स्फोरयन्नाह, लच्छी इति। लक्ष्मीः १, ऋद्धिः २, बुद्धिः ३, लज्जा, ४, विद्या ५, क्षमा ६, देही ७, गौरी ८, रात्रिः ९ चूर्णा १०, छाया ११, कांतिः ११, महामाया १३, कीर्तिः १४, सिद्धा १५, मनोरमा १६, गाहिनी १७, विश्वा १८, वासिता १९, शोभा २०, हरिणी २१, चक्री २२, सारसी २३, कुररी २४, सिंही, २५, हंसी २६।

६२. अथ पाठप्रकार दर्शयति, पढम इति। प्रथमपदं हंसपदवन्मंथरं पठ्यते, द्वितीय सिंहविक्रमवत् द्रुतं पठ्यते, तृतीयं गजवरलुलितं सलीलं पठ्यते, चतुर्थं अहिलुलितं यथा सर्पाणा शेषे चाचल्यं तथाऽवसाने चचल पठ्यत इत्यर्थः।

६३. अथ गणभेदेन अवस्थाभेदमाह, एक्के जे इति। एकेन नायकेन कुलीना भवति। नायको जगणः। द्विनायका संगृहिणी भवति। नायकहीना रंडा भवति बहुनायका वेश्या भवति।

६४. अथ लघुभेदेन जातिमाह, तेरह इति। त्रयोदशभिर्लघुभिर्विप्रा, एकविंशत्या क्षत्रिया भणिता, सप्तविंशत्या वैश्या, शेषा शूद्री भवति गाथा।

६५. गणभेदेन दोषमाह, जा पढम इति। या प्रथमतृतीयपंचमसप्तम स्थाने गुरुमध्या जगणयुक्ता भवति सा गुर्विणी गुणरहिता गाथा दोषं प्रकाशयति। अथ च अन्यापि गुर्विणी नायिका गुणरहिता विशिष्टगुणरहिता अशक्त्यादिदोष प्रकाशयति इति ध्वनिः।

६६. अथ विगाथा, विगाहा इति। विगाथाप्रथमदले सप्तविंशति मात्राः पश्चिमदले त्रिंशन्मात्रा इति भणित पिंगलेन नागेन। प्रवर्तिता गाथैवेत्यर्थः। उद्गाथनिकापि तादृश्येव।

६७. यथा परिहरेति। काचिन्मानिनीं प्रबोधयंती वर्षाः समागता इति कथयति भीषयते च। हे मानिनि, मान परिहर जहीहि, नीपस्य कुसुमानि पश्य। तव कृते खरहृदयो निष्करुणहृदयः कामो गुटिकाधनुः खटिका गृह्णाति किल निश्चितं।

६८. अथोद्गाथः, पुव्वद्धे इदि। पूर्वार्द्धे उत्तरार्द्धे च त्रिंशन्मात्रा भवंति। हे सुभगे, संभणिताः कथिताः यत्र स एव उद्गाथो वृत्तः पिंगलनागेन दृष्टाः षष्ठि मात्रा यत्रैवं भूत इति।

६९. यथा सोऊण इति। काचिन्निजानुरागातिशयं चेदिपतौ कथयति। यस्य नाम श्रुत्वा अश्रु नयने रुणद्धि व्याप्नोति, भण कथय वीर चेदिपतेस्तस्य मुखं यथेच्छ प्रेक्षिष्ये। दर्शने सति नेत्रयोरानदज वारि आविरस्यतीत्यर्थः।

७०. अथ गाहिनीसिंहिन्यौ, पुव्वद्ध इतिं। पूर्वार्द्धे त्रिंशन्मात्राः पिंगलः प्रभणति, हे मुग्धे शृणु, उत्तरार्द्धे द्वात्रिंशन्मात्राः एषा गाहिनी। विपरीता सिंहिनी भणिता सत्य निश्चित। सिंहिन्याः पूर्वार्द्धे द्वात्रिंशत् उत्तरार्द्धे त्रिंशदिति भेदः।

७१. यथा, हवीरो युद्धसमये चरणपतितां पत्नीं प्रबोधयन्नाह, मुंचहि इति। हे सुदरि पादं मुंच, अर्पय हसित्वा सुमुखि खड्ग, कल्पयित्वा खडयित्वा म्लेच्छशरीरं प्रदयामि ध्रुव वदन तव हवीरः।

७२. सिंहिणी यथा। कश्चिद्विक्रमादित्यं स्तौति वरिसइ इति। वर्षति कनकस्य वृष्टिं तप्यते भुवने दिवानिश जाग्रत्। निशक साहसाको निदति इंद्र च सूर्यबिंबं च। इंद्रो जलं वर्षति अय च सुवर्णं, सूर्यो दिवैव तप्यतेऽयं च दिवानिशमिति निंदायामाशयः।

७३. अथ स्कंधक, चउमत्ता इति। चतुर्मात्रिका अष्टगणा भवति पूर्वार्द्धे उत्तरार्द्धे च समरूपाः। द्वात्रिंशन्मात्राकं पूर्वार्द्धे, एवमुत्तरार्द्धमपि यत्र तत् स्कधक जानीहि। पिंगलः प्रभणति, हे मुग्धे, बहुसभेद।

७४. यथा सेतुबंधकाव्ये, ज ज इति। यं यं आनयति गिरि रविरथचक्रपरिघट्टनसहं हनुमान्। त तं लीलया नलो वामकरोत्क्षिप्त रचयति समुद्रे।

७५. अथैतस्य सर्वगुरुकृतस्य एकैकगुरुह्रासेन नामभेदमाह नवपदीछंदसा णद इति। णदः १ भद्रः २ शेषः ३ सारगः ४ शिवः ५ ब्रह्मा ६ वारणः ७ वारणवरुणः ८ नीलः ९ मदनः १० तालंकः ११ शेखरः १२ शरः १३ गगनः १४ शरभः १५ विमतिः १६ क्षीरनगरः १७ नरः १८ स्निग्धः १९ स्नेहनः २० मदगणः २१ भोलः २२ शुद्धसरित् २३ कुभः २४ कलशः २५ शशी २६ जानीहि। शरभः २७ शेष अवसाने शशिधरं जानीहि इति अष्टाविंशतिप्रकार स्कधकं भवति।

७६. अथानयनप्रकारमाह, अट्ठ इति। अष्टौ यत्र लघवो भवंति स नद इति जानीहि। सखीति सम्बोधन। तत एको गुरुस्त्रुटयति लघुद्वयं वर्द्धते तथा तथा नामानि जानीत।

७७ यथा चदा इति। चंद्रः कुदः काशः हारः हीरः त्रिलोचनः कैलाशः इत्यादयः यथावत् श्वेतास्तावत्सर्वं तव कीर्त्या जित।

७८ अथ द्विपथा, तैरह इति। प्रथमपादे त्रयोदश मात्राः द्वितीयपादे एकादश मात्रा देहि। द्वितीयार्द्धे प्रथमतस्त्रयोदश पुनरेकादशेति द्विपथालक्षण-मेतत्। अन्वर्था चेयं संज्ञा। द्वौ पंथानौ यस्या सा द्विपथा एतदग्रे व्यक्ती भविष्यति।

७९ यथा सुरतरु इति। सुरतरुः सुरभिः स्पर्शमणिः एते वीरेश्वरस्य न तुल्याः। सुरतरुः कठिनागः, सुरभिः पशुः, .चिंतामणिः प्रस्तरः, तेनास्य साम्य न।

८०. भेदमाह, भमरु इति। भ्रमरः १ भामरः २ शरभः ३ श्येनः ४ मडूकः ५ मर्कटः ६ करभः ७ नरः ८ मरालः ९ मदगधः १० पयोधरः ११ चलः १२ वानरः १३ त्रिकलः १४ कच्छपः १५ मत्स्यः १६ शार्दूलः १७ अहिवरः १८ व्याघ्रः १९ विरालः २० श्वानः २१ उन्दुरः २२ सर्पः २३ एतत् प्रमाणकेन एको गुरुस्त्रुटयति द्वौ लघू वर्द्धते तथा तथा नामानि जानीत।

८१. द्विपथाविशेषमाह, छब्बीस इति। षड्विंशात्यक्षरो भ्रमरो भवति। तत्र द्वात्रिंशति गुरवो भवति चत्वारो लघवः। तत एको गुरुस्त्रुटयति द्वौ लघू भवतस्तदा नामानि वर्द्धते।

८२. यथा जा अद्धग इति। यस्यार्द्धांगे पार्वती शिरसि गगा वसति। यो लोकाना वल्लभः पादौ वदे तस्य।

८३. अथ जातिमाह, बारह इति। द्वादशावधिलघुभिर्विप्रा ब्राह्मणी भवति। तथा द्वाविंशतिभिर्लघुभिः क्षत्रिया भणिता। द्वात्रिंशल्लघुभिर्वैश्या। या इतरा सा शूद्री भवति।

८४. गणभेदे दोषमाह, जिस्सा इति। यस्या प्रथमे तृतीये च चरणे जगणा दृश्यते पादपादेषु। चाडालगृहस्थिता सा द्विपथा दोष प्रकाशयति।

८५. उट्टवनिकाप्रकारमाह, छक्कलु इति। आदौ षट्कलगणः ततश्चतुः-कलः। ततस्त्रिकलः। अनेन प्रकारेण विषमयोः प्रथमतृतीययोरित्यर्थः। सदा पादयोर्द्वितीयचतुर्थयोस्तु षट्कलः। ततश्चतुःकलः। अते एककलः।

८६. अथ उक्कच्छा, दिअवर इति। द्विजवरगणयुगल धारय। द्वौ चतुर्लघु-गणावित्यर्थः। पुनरपि त्रयो लघवः प्रकटाः। अनेन विधिना विहितानि त्रीणि

पदानि । शोभते यत् छंदः यथा शशी रात्रौ । एतत् छंदः रसितं रसयुक्तं हे मृग-नयने । एकादशकलात्मकं च भवति हे गजगमने ।

८७. यथा विमुह इत्यादि सुकरं । अचल इति नृपतिविशेषः ।

८८. भेदमाह; आइकव्व इति । आदिकाव्यं सर्वलघुकाव्यं उक्कच्छानामकं कृतं लोहंगिण्यादीनामध्ये सार, लोहगिन्यादयस्तस्य भेदास्तेषां सारं ध्रुवमित्यर्थः । आनयनप्रकारमाह । गुरवो वर्द्धते द्विगुणा लघवस्त्रुट्यति । तथा तथा नामानि जानीहि । तथा च लक्ष्यानुरोधेन लक्षणप्रवृत्तिः । अष्टनामानुरोधेन अष्टलघुह्रासः क्रियते । तेन अष्टौ नामानि भवंति । प्रत्येक चतुश्चतुर्गुरुवृद्धिरष्टाष्टलघुह्रासः । एतावता सर्वेषां लघूना ह्रासपर्यन्तं बोद्धव्यमिति ।

८९. अथ नामानि लोहगिनी इति । लोहगिनी १ हंसिनी २ रेखा ३ तालकी ४ कंपी ५ गंभीरा ६ काली ७ कलरुद्राणी ८, उक्कच्छाया अष्टौ नामानि ।

९०. तासां स्वरूपमाह लोहंगिणी इति सर्वलघुर्लोहगिनी । यत्र चत्वारो गुरवः सा हंसी । तत्र यथा यथा चत्वारो गुरवो वर्द्धते तथा तथा नामान्यपि वर्द्धन्ते अवशिष्टच्छंदसः उक्कच्छा नामैव ।

९१. अथ रोला, पढम इति । आदौ चतुर्विंशति मात्रा भवति, ताश्च निरंतरा न भवंति किंतु अंतरांतरा गुरुयुक्ता भवति । पिंगलोऽभवत् शेषनागः, स रोला छंदो ब्रूते । एकादश गुरवो भवति तेन रोलाछंदो भवति । एकस्मिन्नेकस्मिन् त्रुटिते गुरौ अन्यदन्यन्नाम रोचते ।

९२. यथा पअभर इति । पादभारेण क्षुण्णा धरणिः, तरणिर्ध्वजैर्धूलिभिश्च-लुप्तः, कूर्मस्य पृष्ठदेशश्चलितः मेरोर्मन्दरस्य च शिरः कंपितं, क्रोधेन हंवीरवीर-श्चलितो गजघटासहितः, कष्टेन कृत आक्रंदो मूर्च्छितं म्लेच्छपुत्रैः ।

९३. अथ नामानि नवपदीछंदसा आह कुं ( द ) इति । कुंदः १ करतलः २ मेघः ३ तालंकः ४ कलरुद्रः ५ कोकिलः ६ कमलः ७ चद्रः ८ शंभुः ९ चामरः १० गणेश्वरः ११ सहस्राख्यः, शेषो भणति नागराजो जल्पति फणीश्वरः । द्विरुक्ति-दोषनिवृत्त्यर्थमाह सहस्राख्यः सहस्रनामा एतावता नाम्ना कतिपयेन स्तुतिरूपेण न दोषायेत्यर्थः । अपरमप्याह तेरह इति । यत्र त्रयोदशाक्षराणि पतति । एकाद-भिर्वर्कैर्गुरूभिरित्यर्थः । एतावता एकादश गुरवो द्वौ लघू । एतादृशि ध्रुवके चतुर्गुरुह्रासे प्रत्येके नामानि भवति पूर्वोक्तान्येव ।

९४. अथ गधाना, दह सत्त इति । हे सुजनाः, अत्र प्रथमपदे सप्तदश वर्णान् भणत । तथा द्वितीयपदे अष्टादश । यमकयुगेन रमणान् मनोहरादित्यर्थः । एता-

दृश च द्वितीय पदमलंकुरुत, भणति पिंगलः। गंधानानाम रूपकं भवति पडितजनचित्तहर।

९५. एतदेव लक्षणांतरेण द्रढयति द्विपथा छंदसा, दह सत्त इति। सप्तदशाक्षराणि प्रथमपदे सस्थापयत, द्वितीये अष्टादशाक्षराणि मात्रायां तु यथा सुखमिति।

९६. यथा कण्ण इति। कर्णे चलति कूर्मश्चलति कीदृशः अशरणशून्यः। कूर्मे चलति मही चलति कीदृशी भुवनभयकरणा। मह्या चलत्या महीधराश्चलति। ततः सुरगणाश्चलंति। हेतुमाह चक्रवर्तिचलने त्रिभुवनं चक्रवच्चलतीत्यत्र कः संदेहः।

९७. अथ चतुःपदी, चउपइआ इति। चतुःपदीछंदः फणींद्रो भणति। यत्र चतुर्मात्रिकाः सप्तगणा भवंति पादांत सगुरु कृत्वा त्रिंशन्मात्राः धृत्वा एतावता षोडशपदैरशीत्यधिकचतुःशतानि ४८० मात्रा निरुक्ताः। तत्र विशेषमाह छंदश्चतुष्टयेन लिख्यते एवं न क्रियते। पदचतुष्टयेनैकं छंदः तादृशछंदसश्चतुष्टयमित्यर्थः। दार्ढ्यमाह को जानाति एनं भेद न कोपीत्यर्थः। कविः पिंगलो भाषते छंदः प्रकाशयति। हे मृगनयने अमृतमेतत्।

९८. यथा जसु सीसहि इत्यादि सुकर।

९९. अथ घातः (घत्ता), पिंगलकइ इति। पिंगलकविना दृष्टं छंदः उत्कृष्ट घात (घत्ता) इति नाम संख्यामाह द्विषष्ठि मात्राः कृत्वा। चतुर्मात्रिकाः गुणाः द्वौ पादौ भण त्रीन् त्रीन् लघून् अंते धृत्वा। एतावतैतदुक्तं भवति लघुत्रयाधिकं चतुष्कलगणसप्तकं भवति।

१००. एतदेव द्रढयति, पढमं इति। प्रथमदशसु विश्रामः। द्वितीये दशसु तृतीये त्रयोदशसु विरतिः। घातो (घत्ता) द्विषष्ठिमात्रिको भवति।

१०१. यथा रणदक्ख इति। रणे दक्षो हतः, कुसुमधनुः कामो जितः, अंधकस्य गधमपि न रक्षितवान्, यः स शंकरो रक्षतु। कीदृशः, असुराणां भयंकरः, येन च गौरी नारी अर्द्धांगे धृता।

१०२. अथ घातानदः, सो घत्तह इति। स घातकुले सारः कीर्त्या अपारः इति नागराजः पिंगलः कथयति, यत्र एकादशसु मात्रासु विश्रामो भवति यस्य नद इति नाम भवति, पुनरपि सप्तसु मात्रासु विश्रामः। ततस्त्रयोदशसु मात्रासु विश्रामो भवति।

१०३. यथा जे वदिअ सिर गंग इत्यादि सुकर।

१०४. अथ षट्पदप्रकरणं छप्पअ इति। हे छंदोविदः षट्पदं छंदो जानीत अक्षरसयुक्तं उत्तमाक्षरयुक्तं एकादशसु कलासु विरतिं। ततः पुनस्त्रयोदशसु

निर्भ्रांत यथा स्यादेवं चतुष्टयं। उट्टवनप्रकारमाह द्वे एव मात्रे दीयता। इति पदचतुष्टयलक्षणमुक्तं उल्लालयोर्द्वयोः पंचदशसु मात्रासु विरतिः। तथा अष्टाविंशतिमात्रौ द्वौ भवतः। एवं काव्यपदचतुष्टयेन उल्लालपदद्वयेन च षट्पदछंदो भवति। एवं जानीत गणयत षट्पदछंदः अन्यथा अत्र न किमपि भवति।

१०५. यथा पिंधउ दिढ सण्णाह इत्यादि सुकर।

१०६. अथ च कुत्रापि षट्पदे आदौ एककलापि दृश्यते तत्कथं, संग्रहार्थं लक्षणांतरमाह पअ पअ इति। पदपदतले निबद्धाश्चतुर्विंशति मात्राः क्रियते अक्षराणि डंबराणि आरभटि (? टी) युक्तानि सदृशानि एकच्छवीनि मृदून्येव वा अथवा डमरुसदृशानि यथा डमरुशब्दे गाढाक्षरो द्रुतबंधः श्रूयते तथैवात्राप्यक्षराणि गाढानि पाठस्तु द्रुत एव क्रियत इत्याशयः। इति प्रकारेण शुद्धं छंदो गम्यते। उट्टवनिकाप्रकारमाह आदौ षट्कलो गणः। ततश्चत्वारश्चतुःकलगणा निरुक्ताः। द्विकलो गणोन्ते निबद्ध इति शेषकविः पिंगलो वस्तु निर्बंधं निर्वक्ति। अत्र द्विपंचाशदधिकं शतं मात्रा भवति उल्लालमात्राभिः सहिता गणय। षट्पदं छंदः एतादृशं भणित भवति, किमिति ग्रथग्रथना कृत्वा म्रियध्व।

१०७. यथा जहा सरअ ससिबिंब इत्यादि सुकर।

१०८. एतच्च षट्पदछंदश्छदोद्वयेन भवति। काव्यनाम्नश्छदसः पदचतुष्टय पदद्वयमुल्लालस्य तेन तस्य षट् पदानि भवति। तत्र काव्यस्य किं लक्षणमित्यत आह, आइ अंत इति। आदौ अंते च षट्कलो गणः। मध्ये त्रयश्चतुःकला गणाः। तत्र तृतीयो जगणो विप्रगणो वा भवति। एतत्काव्यनाम्नश्छदसो लक्षणं बुध्यस्व। अयं च नियमो यदि काव्यमेव क्रियते तदा, यदि षट्पदं क्रियते उल्लालेन सह तदा नाय नियमः।

१०९. अथ काव्यस्य नामभेदानाह, चउ अग्गल इति। अत्र चतुरधिकाश्चत्वारिंशद्गुरवो भवंति प्रतिपदमेकादशेत्यर्थः। तत एकैकगुरुह्रासेन एकैक नाम तथा च सति यो गुरुहीनः स शक्रः।

११०. यथा जसु कर इत्यादि सुकर।

१११. नामभेदमाह, जह जह इति। यथा यथा गुरवो वर्द्धते तथा नाम कुरुत शक्रादारम्य भृंगपर्यन्त गणयत। पंचचत्वारिंशन्नामानि भवन्ति।

११२. शक्रः सर्वंलघुः। भृंगः सर्वंगुरुः। शक्रे गुरवः द्वापंचचत्वारिंशन्नामान्येवाह, चतुःपदीछदोभ्यां ता सक्को इति। शक्रः १ शंभुः २ सूरः ३ गडः ४ स्कंधः ५ विजयः ६ दर्पः ७ ताटकः ८ समरः ९ सिंहः १० शीर्दः ११ उत्तेजः १२ फणी १३ रक्तः १४ प्रतिधर्मः १५ मरालः १६ मृगेंद्रः १७ दण्डः १८ मर्कटः १९ अनुबंधः २० वासंठः २१ कठः २२ मयूरः २३ बंधः २४ भ्रमरः २५

भिन्नः २६ महाराष्ट्रः २७ बलभद्रः २८ राजा २९ वलितः ३० मोहः ३१ मथानः ३२ बलिमोहः ३३ सहस्राक्षः ३४ बालः ३५ दर्पितः ३५ शरभः ३७ दम्भः ३८ उद्दंभः ३९ वलितागः ४० तुरगः ४१ हारः ४२ हरिणः ४३ अंधः ४४ हे मुग्धे, शेषे भृंगः ४५ वास्तुकनामानि पिंगलराजः जल्पति। कीदृक् छंदः-प्रबंधः, कृष्टः छन्दःप्रबंधो यस्मात्।

११४. दार्ढ्यमाह, पचतालीस इति। पञ्चचत्वारिंशद्वास्तुकच्छंदसि शक्रादयो भेदाः छंदसो विजृंभति व्यक्तीभवति। अद्धा सत्यं पिंगलकविः कथयति एतत् वचनं न चलति न मिथ्या भवति यथा हरिर्विष्णुः हरः शिवः ब्रह्मा पितामहः एतेन चलति तथा छंदोप्येतदित्याशयः।

११५. षट्पददोषमाह, पअइ इति। पदे अशुद्ध व्याकरणदोषयुक्त एककलत्यक्त च पगु इत्यभिधीयते। पादेन हीनं खोड, मात्राधिक वातुल, कलाशून्यं काण इति स्तूयते। झल्वर्जितं झकारलकाराभ्या वर्जितं, झल्प्रत्याहारेण वा वर्जितं वधिरं कथ्यते। उपमाद्यलकाररहितं अध जानीहीत्यर्थः। उट्टवनिकाया यदि पंचकलस्त्रिकलो वा भवति तदा वोल इत्यभिधीयते। वोल इति देशीय-भाषा, भग्नमित्यर्थः। अर्थेन विना दुर्बलमित्युच्यते। यदि हठाक्षर भवति तदा डेर इत्युच्यते। श्लेषप्रसादसमतामाधुर्यसुकुमारत्वादिगुणरहित काण इत्युच्यते। एवमेते षट्पददो (षाः) सर्वांगोपागे पिंगलकेन कथिताः।

११६. अथ जातिमाह, विप्प इति। द्वात्रिंशल्लघुभिर्विप्रलोकः। द्विचत्वा-रिंशल्लघुभिः क्षत्रियः। अष्टचत्वारिंशल्लघुभिर्वैश्यः। अवशिष्टः शूद्रः। पदे चतुर्विंशति मात्राः। चतुर्भिः पदैः षण्णवति मात्रा भवति पञ्चचत्वारिंशन्नामानि भवति एव काव्यलक्षण कुरुत। अथ उल्लालनाम्नः पदद्वयात्मकस्य छंदसः षड्विंशति गुरून् काव्यगुरुभिः सहैकीकृत्य षट्पदस्य नामभेद कुरुत। षट्पद-दोषगुणादिकं अक्षराण्यपि तथैव भवति। अथ षट्पदे भूते एकसप्ततिर्नामानि जानीत।

११७. अथ उल्लाललक्षण, तिण्णि तुरगम इति। तत्र त्रयस्तुरगमाश्चतुष्कल-गणाः। ततस्त्रिकलः सामान्यत्रिकले आद्यो गणः अंत्यो वा लघुः लभ्यत इति ग्रंथशैली। ततः षट्कलः। ततः अंते त्रिकलः। अनेन प्रकारेण उल्लालच्छंदसः उट्टवनिका कुरुत। लक्षण तु लभ्याभावान्न कृत। पदद्वयेऽत्र षट्पञ्चाशन्मात्रा भवति।

११८. अथ सर्वगुरुं षट्पदं उदाहरति, जाआ जा अद्धग इत्यादि सुगमं।

११९. अथानयनप्रकारमाह, चउआलिस इति। काव्ये चतुश्चत्वारिंशद्गुरवः। उल्लाले षड्विंशतिर्गुरवः ततो गुरुस्त्रुट्यति लघुद्वयं वर्द्धते तेन एकसप्तति प्रस्तारविस्तारो भवति। नाम्नामिति शेषः।

१२०. नामसंख्यानयनप्रकारमाह, जत्ते इति। सर्वा मिलित्वा यावत्यः कला भवति तावतीष्वर्द्धं त्यज तत्राप्येकं शर त्यज इति पंचकलस्य नाम ईदृक् प्रमाणेन नामानि भवति। तथाहि अत्र द्विपंचाशदधिकमेकशत मात्रा भवति। तत्रार्द्धे त्यक्ते षट्सप्ततिरवतिष्ठते तत्रापि पंचसु त्यक्तेषु एकसप्ततिरवतिष्ठते।

१२१. तत्रापि सुकरं प्रकारमाह, अजअ इति। अजयनाम्नि छंदसि षट्पदे-द्व्यशीति ८२ अक्षराणि भवति। तत्र सप्तति ७० गुरवः द्वादश १२ लघवः। रविशब्देन द्वादश रेखाशब्देन लघुः एकैकं गुर्वक्षर ह्रसति द्वौ द्वौ लघू वर्द्धंते एवमन्यत्रापि।

१२२-२३. तान्येव नामान्याह, अजअ इति। अजयः १ विजयः २ वलिः ३ कर्णः ४ वीरः ५ वेतालः ७ बृहन्नलः ७ मर्कटः ८ हरिः ९ हरः १० ब्रह्मा ११ इंद्रः १२ चदनः १३ सुशुभंकरः १४ शाणः १५ सिंहः १६ शार्दूलः १७ कूर्मः १८ कोकिलः १९ खरः २० कुंजरः २१ मदनः २२ मत्स्यः २३ सारंगः २४ शेषः २५ शावगः २६ पयोधरः २७ ततः कुंदः २८ कमलः २९ वारणः ३० भ्रमरः ३१ शरभः ३२ जगलः ३३ एतान् संस्थाप्य लभ्यते, शरः ३४ मुद्गरः ३५ सारसः ३६ सरसः ३७ इति षट्पदनामानि पिंगलः कथयति। मेरुः ३८ मकरः ३९ मदः ४० सिद्धिः ४१ बुद्धिः ४२ करतलः ४३ कमलाकरः ४४ धवलः ४५ मलयः ४६ ध्रुवः ४७ कर्णः ४८ शक्रः ४१ कृष्णः ५० व्यंजनः ५१ मेघाकरः ५२ ग्रीष्मः ५३ गरुडः ५५ शशी ५५ सूर्यः ५६ शल्यः ५५ नरः ५८ तुरगः ६९ मनोहरः ६० गगनः ६१ रत्न ६२ नयः ६३ हीरः ६४ भ्रमरः ६५ शेखरः ६६ कुसुमाकरः ६६ ततो दीपः ६८ शखः ६९ वसुः ७० शब्दः ७१। एतज्ज्ञात्वा नागराजः पिंगलः कथयति षट्पदस्य एकसप्ततिर्नामानि। छंदकारः प्रस्तारं ज्ञात्वा कथयति।इति षट्पदप्रकरण समाप्त ॥

१२४. अथ पज्झटिका, चउ मत्त इति। चतुर्मात्रिकान् गणान् चतुःस्थाने कुरुत। पदांते पयोधर जगण स्थापयित्वा एवं पदचतुष्टयेन चतुःषष्ठि ६४ मात्रा भवति। छंदःप्रशसामाह। इद श्रुत्वा इन्दुश्चन्द्रमाः प्रस्विद्यतेऽमृत क्षरतीत्यर्थः। इति चतुर्भिः पादैः पज्झटिकाछंदो भवति। एतावतैतदुक्त, षोडशमात्राभिरे-(क)श्चरणः, तथाविधचरणचतुष्टयेन एकं छंदः, तथाविधछंदचतुष्टयेन एषा पज्झटिकेति।

१२५. यथा जे गजिअ इत्यादि सुकर।

१२६. अथ अलिल्ला, सोलह इति। यस्य पादावली षोडशमात्रा, अत्र द्वे यमके भेदं कलयतः। कलीवलीकामधेनुः। इल्लडिल्लौ स्वार्थे इति इत्यत्र प्रयोजकः। अप्रयोजकवाचकादौ प्रत्ययः। इहिजेराः पादपूरणे इति ह प्रत्ययः। प्रायो लोप इति प्रायोवचनादावपि ककारलोपः। अत्र पयोधरो जगणो न भवति। कीदृशः अलिल्लह अप्रयोजकः अप्रयोजकवाचकादलशब्दात् इल्लप्रत्ययो ह प्रत्ययश्च। अस्मिन् छदसि जगणो प्रयोजक इत्यर्थः। अते सुपियगणो लघुद्वयात्मकगणो भवति एतच्छदोऽलिल्लानाम भण।

१२७. यथा, जहि आसार इत्यादि सुकर।

१२८. अथ पादाकुलक, लहु गुरु इति। यत्र लघुगुर्वोर्नियमो नास्ति तदा सर्वे गुरवो निरतरलघवो वा क्रियतामित्याशक्याह, पदे पदे उत्तमा रेखा अतरातरा लघवो वा भवति। कीदृशं छदः, सुकविपिंगलस्य कठाभरणरूपमलकरण अत्यन्तानुरागा(त्) फणींद्रेण ग्रैवेयकत्वेन वृतमिति प्रसिद्धिः। सर्पाणा कठे चलयाकारा रेखा भवति इति। अनेन प्रकारेण षोडशमात्राकं पादाकुलक भवति।

१२९. यथा, सेर एक्क इति सुकर।

१३०. अथ रड्डा, पढम इति। प्रथम पचदशसु मात्रासु विरतिः, द्वितीयपदे द्वादशसु, तृतीयस्थाने पंचदशसु, चतुर्थे एकादशसु, पंचमे पदे पचदशमात्रासु। एवमष्टाधिकषष्ठि मात्राः पदपंचके पूरय। एतदग्रे दोहाछंदो दातव्यं। एतच्छदो राजसेन इति प्रसिद्ध रड्डेति भण्यते।

१३१. उद्टवनिकाप्रकारमाह षट्पदच्छदसा, विसम इति। विषमे पदे त्रिकलं संस्थापय। ततस्त्रयः पदातयश्चतुष्कलगणाः। अत्रापि प्रथमे नरेंद्रो जगणः किं वा विप्रः। अपरविषमपदे अते लघुद्वय। समपादे पदातित्रयं चतुष्कलत्रयमित्यर्थः। एतस्याते सर्वलघुरेको गणः। चतुर्थचरणे एकलघुत्यक्ताः एकादश कला इति यावत्। यद्वा चतुर्थं चरणे एक लघुमाकृष्य गृहाण तेनैकादशकलाश्चतुर्थचरण इति। एव पचपदोद्टवनिका कृत्वा वस्तु इति नाम पिंगलः कथयति। तदनतर दोषहीन द्विपथाचरण संस्थाप्य राजसेन इति प्रसिद्ध रड्डा भण्यते।

१३२. (१३४) भम इत्यादि सुकर।

१३३. (१३५) एतन्नामान्याह, करही इति। करभी १ नंदा २ मोहिनी ३ चारुसेनी ४ तथा भद्रा ५ राजसेनः ६ तालकः ७ हे प्रिये तानि सप्त वस्तूनि निष्पन्नानि निश्चलानि भवतीत्यर्थः।

१३४.–१,७ (१३६–१४२) प्रकारमाह, पढम इति। प्रथमतृतीयपंचमपदेषु त्रयोदश मात्रा यत्र भवति, द्वितीयचतुर्थयोरेकादश मात्रा यस्या सा करभी

१। प्रथमतृतीयपचमपदेपु चतुर्दश मात्रा भवति, द्वितीयचतुर्थयोरेकादश सा नदा २। प्रथम तृतीयपंचमपदेपु ऊनविंशतिर्मात्राः, द्वितीयचतुर्थयोरेकादश सा मोहिनी ३। विषमपदे पचदश मात्राः, समे एकादश यस्यां सा चारुसेनी ४। विषमपदे पंचदशमात्राः, समे द्वादश यस्यां सा भद्रा ५। विषमे पदे पंचदशमात्राः, समपादमध्ये द्वितीये द्वादश, चतुर्थे एकादश यस्मिन् स राजसेनः ६। विषमे पोडशमात्रा, समे द्वादश एकादश वा सा तालंकिनी ७। इति नवपदीभेदाः। रड्डाप्रकरणं समाप्तं।

१३५. (१४४) अथ पद्मावती, भणु इति। पद्मावती भणिता, यत्र स्थाने स्थाने चतुर्मात्रिका अष्टौ गणाः। ध्रुवं निश्चित। ते के गणा भवंतीत्यत आह कर्णः ऽऽ करतलः ।।ऽ विप्रः ।।।। चरणः ऽ।। एते गणाः पादे भवति। कीदृशाः उत्कृष्टाः। अत्र यदि पयोधरो जगणः पतति तदा किमियं पद्मावती मनोहरा। किं च यत्रत्र जगणः पतति तदा नायकगुण पीडयति। न केवलं नायकगुणं पीडयति किंतु पितरमपि सत्रासयति। कविमुद्वासयति। कथमेतद्भवतीत्यत आह। अत्र छंदसि अयं जगणः चाडालचरितं आचरति मंदफल ददातीत्यर्थः। अथ च पद्मावतीं पद्मिनीं नायिकां भण। यस्या स्थाने स्थाने चतुर्मात्रा ब्रह्मक्षत्रविट्शूद्ररूपा अष्टौ गणा अष्टनायिकासु गण्यन्त इत्यर्थः। पद्मिनी च जातिचतुष्टयादुत्पद्यत इति प्रसिद्धिः। ध्रुवं निश्चितं। सा कथं चतुर्मात्रिका। कर्णः क्षत्रियः। करतलो वैश्यः। विप्रो ब्राह्मणः। चरणः शूद्रः। एवरूपेण चतुर्मात्रिकत्वं यस्याः उत्कृष्टा। यदि तस्याः पयोधरः स्तनः पतति तदा किमियं मनोहरा, अपितु न मनोहरा। सा च तथा नायकगुणं पीडयति, पितरं संत्रासयति यस्तस्यामभिरतो कविस्तमुद्वासयति।

१३६. यथा भअ भगिअ वंगा इत्यादि सुकरं ॥
ओत्था ओत्थी उपर्युपरीत्यर्थः ॥

१३७. अथ कुंडलिका, दोहालक्खण इति। आदौ दोहालक्षणं पठित्वा ततः काव्यपदचतुष्टयं निरुक्तं। एतेन दोहाच्छंदसः पदचतुष्टयेनार्द्धं काव्यपदचतुष्टयेनार्द्धं भवति, हे बुधजन पंडितजन कुंडालिकाछंदो जानीहि। कीदृश उल्लालेन सयुक्त। उल्लालनमुल्लालः। उल्लालेन संयुक्तं पठेदिति पाठिको विशेषः। अपरमप्याह तच्छंदे यमकं लभ्यते। भिन्नश्रुतीनामेकानामभिचयैः परस्परं। पदाना यः पुनर्वादो यमकं तन्निगद्यत। इति लभ्यते। केन पदेनेति आह उल्लाले सजुत्त इति। उल्लालनमुल्लाल उल्लास इति लोके प्रसिद्धः। अयमाशयः, परावृत्य सिंहावलोकितन्यायेन निकटवर्तिना पदेन यमकं कुर्यादित्यर्थः। अथ च यमकमनुप्रासमेवाहुः। स च वर्णानुवृत्तिरिति। अनुप्रासः अग्रपादावृत्तिरेव दृश्यते तेनालंकार-

कथितयमकमेवोच्यते। अत्र च चतुश्चत्वारिंशदधिकशतं मात्रा भवति। सुकवीना दृढबधुः पिंगलः कथयति। अथ गुणालंकारौ कथयति। यस्यास्तनौ शरीरे भूषण-शोभा हसति। भूषणमलंकारः शोभा कांतिर्गुण इति शेषः। द्विवचनस्य बहुवचनं नित्य, तेन भूषणशोभे यस्यास्तनौ हास्य कुर्वंति (? तः)। कियत्संख्याकगुणशोभ इत्याह। चतुश्चत्वारिंशन्मात्राः। प्राकृते पूर्वपातानियमः। तेन व्यवहितेनापि मात्राशब्देनान्वयः। श्लेषप्रसादादिगुणा अलकाराः। ता कुंडलिकां जानीत, पठित्वा पुनरपि पठ। आद्यताभ्या भिन्नं न पठ्यते। एकयमक कृत्वा पठ्यत इत्यर्थः।

१३८. उ(क्त)मेव द्रढयति, पढमहि इति। प्रथमं दोहायाश्चत्वारि पदानि ततः पदचतुष्टय काव्यस्य देहि, अनेन प्रकारेण कुण्डलिकाऽष्टपदा भवति, पदे पदे यमकं कुरुत।

१३९. यथा ढोल्लेत्यादि सुकरं।

१४०. अथ गगनागः, पअ पअ इति। गगनांगं स्थापय किं कृत्वा ज्ञात्वा। किं भूत मात्राविभूषितम्। अत्र शरेण ५ अधिका विंशतिर्मात्रा भवन्ति। किं भूताः लघुगुरुशोपिता मिलिता इत्यर्थः। उट्टवनिकाप्रकारमाह, प्रथम चतुर्मात्रिको गणः। ततः परं यथा सुख गणाः प्रकाशिताः। कला अक्षराणि भवतीत्याह विंशत्य-क्षराणि पदे लभते। हे प्रिये इति पत्नीसम्बोधनं। गुरुः प्रकाशितः।

१४१. उक्तमेव द्रढयति, पढमहि इति। प्रथमे च चतुष्कलो गणः। ततः पर यथासुखं गणा भवन्ति। अंते हार गुरु विसर्ज्जय देहि। विंशत्यक्षराणि पञ्च-विंशतिर्मात्रा भवति।

१४२. यथा भजिअ इत्यादि सुकरं।

१४३. अथ द्विपदी, आइ इति। छंदोद्वयेन लक्षयति, आदिग इंदुगणः षट्कलो गणो यत्र भवति। ततो धनुर्द्धरगणद्वयं चतुष्कलगणद्वयं देहि। ततः पदादिद्वयमेव चतुष्कलगणद्वयमेव स्थापय। वि (विध) विचित्रसुंदरं यथा स्यादेव।

१४४. सरस्वतयाः प्रसादं गृहीत्वा तत्र छंदसि पृथिव्यां कवित्वं कुरुत। हे कविजनाः, अंते मधुकरचरण षट्कल देहि। एव प्रकारेण हे बुधजना, द्विपदीं भणत।

१४५. एतदेव प्रकारातरेणाह, छक्कल इति। षट्कलं संस्थाप्य चतुष्कलान् पंच स्थापय, अते एकं हारं गुरु धृत्वा द्विपदीछंदः कुरुत।

१४६. यथा दाणउ देउ इत्यादि सुकरं।

१४७. अथ खञा, धुअ धरि इति। ध्रुवं निश्चितं नव विप्रगणान् धृत्वा हे कमलनयने। बुधजनमनः सुखयति यत् छन्दः। यथा शशी रात्रौ शोभते। पुनरपि विरतिः भवति हे गजगमने। यथा प्रथमपदे नव द्विजवरा तथा द्वितीयपदेपीत्यर्थः। उभयोः पदयोः पदयोः परभागे रगण इति फणिर्भणति। एतच्छन्दः स्मर। कीदृशं मनोहरं।

१४८. एतदेव द्रढयति, विहु दल इति। दलद्वयेपि नव विप्रगणाः पतंति। अंते जोहलं रगणं स्थापय। एव सति खञाछंदसि एकचत्वारिंशत्कला भवंति गणास्तु दश।

१४६. यथा माहि ललइ इति सुकरं।

१५०. अथ शिखा, ससिवअणि इति। सा शिखा, सा का, यस्या शशिवदने हे गजगमने, पदे पदे षट् द्विजगणाः सर्वलघवश्चतुष्कलगणाः पयोधरोऽन्ते। ततः प्रथमतः विविधलघून् प्रकाश्य द्विजगणेन अधिकं द्वितीयदलं यस्याः। द्वितीयदले सप्तचतुष्कलगणाते जगण इत्यर्थः।

१५१. तदेव द्रढयति, मत्त अट्ठाइस इति। प्रथमदले अष्टाविंशति मात्राः, द्वितीयदले द्वात्रिंशत्। पादाते लघुर्यस्याः सा शुद्धा शिखा इति जानीहि।

१५२. यथा फुलिअ महु इत्यादि सुकरं।

१५३. अथ माला, पढम इति। प्रथमचरणे हे शशिवदने, नव ६ द्विज गणाश्चतुष्कलसर्वलघुगणाः स्फुटाः। पुनरपि तथा रगणं स्थापय। अंते कर्णो द्विगुरुर्गणो भवति। पिंगलनागो भणति मालाछदः। शेषार्द्धमस्य छदसो गाथायाः।

१५४. संक्षेपमाह, पढम इति। प्रथम भवंति नव ९ विप्रगणाः। ततो रगणो भवति। गाथार्द्धमते दत्वा मालाछदः कुरुत।

१५५. यथा वरिस जल इत्यादि सुगमं।

१५६. अथ चुलिआला, चुलिआला इति। चुलिआला छंदो भवति। यदि वर्द्धते इत्यर्थः। पदे पदे अंते विशुद्ध कुसुमगण स्थापय पचकले प्रस्तारे यः कुसुमगणः ।ऽ।। स दातव्य इत्यर्थः।

१५७. उक्तमेव द्रढयति, दोहासखा इति। द्विपथासख्योपरि पचैव मात्राः स्थापय। अष्टादशमात्रांत उपरि विंशतिद्वय चत्वारिंशन्मात्रा भवति, अष्टपचाश मात्रा इत्यर्थः। एतावता चुलियालाछद उत्कृष्टमित्यर्थः।

१५८. तथा राआ लुद्ध इति सुगमं।

१५९. अथ सौराष्ट्र, सोरट्ठ इति। सा सौराष्ट्रा यस्यां दोहा विपरीता स्थिता। पदे पदे यमक यस्यां व्याख्याय नागराजः कथयति। यमकमत्रानुप्रासः।

१६०. यथा सो माणिअ इत्यादि सुकरं ।

१६१. अथ हाकली, सगणा इति । सगणभगणा यत्र भवंति, चतुर्दश मात्राः पदे पतति । विरतौ वक्रौ गुरुः सस्थाप्यः । एवं हाकलिरूपकं कथित ।

१६२. उपसंहरति, मत्त इति । पदे पदे चतुर्दश मात्राः पतति एकादशभिर्वर्णैः उत्तरार्द्धे मात्रास्तथैव अक्षराणि पुनर्दश ।

१६३. यथा उच्च इत्यादि सुगम ।

१६४. अथ मधुभारः, जसु इति । यस्य शेषे एकः पयोधरः पतति । द्वौ चतुर्मात्रिकौ गणौ भवतः । एष मधुभारः ।

१६५. यथा जसु चद इत्यादि सुगम ।

१६६. अथ आभीरः, रुद्दह इति । एकादश मात्रा दीयते । अते पयोधरो जगणो दीयते । एतदाभीरच्छदः पिंगलराजो जल्पति ।

१६७. यथा सुदरि इति सुगम ।

१६८. अथ दंडकलः, कुंतअरु इति । कुतवरः धनुर्द्धरः हयवरः गजराजः एते चतुर्मात्रिका एव । ततः षट्पदो भ्रमरः षण्मात्र इत्यर्थः । ततः पदातिद्वय चतुर्मात्रिकद्वयं द्वात्रिंशन्मात्राः पदे सुप्रसिद्धा भवंति । एतच्छंदो जानीत । बुधजनाना हृदये चिरेऽनुरक्तं न कदापि चेतसि त्यजतीत्यर्थः । कियत्यो मात्रा भवन्तीत्याह । विंशत्यधिकशत । कीदृशं पदाग्रकलासुपूर्णे अस्मिन् छंदसि द्वात्रिंशत्कलात्मकं पद तस्याग्र चतुर्थभागः अष्टौ तेन सपूर्णं । एतावताऽष्टाविंशत्यधिकशत १२८ कला भवतीत्यर्थः । एतादृशरूपक फणिना भुवने जगति भाषित कि नाम तदित्याह । दडकल इति निरुक्त गुरुसयुक्त । यच्छंदः पैंगलिका मनसा जपन्ति ।

१६९. यथा राअह इत्यादि सुगम ।

१७०. अथ दीपकं, सिर देह इति । शिरसि चतुर्मात्रिकं देहि, अंते एक लघुं कुरु । तयोर्लघुचतुर्मात्रिकयोर्मध्ये एक दतं पचकल देहि इति शेषः । तच्छदो दीपकं जानीत ।

१७१. यथा जसु हत्थ इत्यादि सुगम ।

१७२. अथ सिंहावलोकः, गण विप्प इति । पदे पदे विप्रगणौ धृत्वा भणितं सिंहावलोक छन्दोवर । हे गुणिगणा, मनसा बुध्यध्व नागो भणति । यत्र जगणो न भगणो न कर्णगणो भवति ।

१७३. उपसहरति, विप्प इति । विप्रगणसगणौ द्वौ गणौ अत्र अन्ते हार गुरुं विसृज । पश्चात् धृत्वा कवित्वं कुरु । पदाते यदेवाक्षरं तदेवाग्रिमपदादौ कुरु । प्रस्तारे षोडशमात्रा भवंतीत्यर्थः ।

१७४. यथा हणु इत्यादि सुगमं।

१७५. अथ प्लवंगमः, जत्थ इति। अत्र प्रथमं षण्मात्रो गणः पदे पदे दृश्यते। पञ्चमात्रश्चतुर्मात्रो वा गणो न क्रियते। अते एकैकं लघु च स्मृत्वा स्मृत्वा स्थापय षण्मात्रिकगणत्रयं कृत्वा अन्ते लघुं ततो गुरुं स्थापयेत्यर्थः। हे मुग्धे मनोहरे, प्लवंगमच्छन्दो विचक्षणमुत्कृष्टं शोभते।

१७६. उपसहरति, पअ पअ इति। आदौ पदे पदे गुरुमेव पिंगलः कथयति। सकलनिर्भ्रांतच्छद: प्लवगम दृष्टं तत्र मात्राणामेकविंशतिर्भवन्ति।

१७७. यथा णच्च इत्यादि सुकरं।

१७९. अथ लीलावती। यत्र छन्दसि लघौ गुरौ नियमो नास्ति। अस्मिन् स्थाने गुरुरित्यादि नियमो नास्तीत्यर्थः। अक्षरेष्वपि न नियमः एतावति अक्षराणि भवन्ति इति नियमो नास्ति। अत्र विषमे समेपि वा स्थाने जगणः पतति। एवं यत्र छन्दसि कुत्रापि न नियमः। न गुरौ न लघौ नाक्षरे नापि च विषमे समे वा स्थाने जगणपाते नियमः। यथा तरुणाश्वगमेन विपमे समे कुत्रापि न नियमः, सोपि प्रसरति दिक्षु विदिक्षु च अगम्ये गम्येपि। अष्टौ गणाश्चतुष्कलाः पतन्ति निरन्तरमेकोपक्रमः। अन्ते ध्रुवं निश्चित सगणः पतति। कथभूतः कातो मनोहरो गणः। कथमयमनियतकलं छन्द इत्याशंक्याह। परिपतति प्रचरति विविधप्रकारेण लीलया हेलया लीलावतीछन्दः। पदेषु द्वात्रिंशन्मात्रासु विरामकर। अयमाशयः। लघो गुरौ अक्षरे गणादो न नियमः। केनापि प्रकारेण द्वात्रिंशन्मात्राः। शेषे सगणस्तासु यथा कर्तव्य।

१८०. यथा घर लगइ इत्यादि सुगम।

१८१. अथ हरिगीता, गण चारि इति। चत्वारो गणाः पञ्चकलाः सस्थाप्यंता द्वितीयस्थाने षट्कल कुरुत। पदाते गुरु कुरुत वर्णनेन सुखाढ्ल समाक्षर। कलाना सख्यामाह, दश स्थापयित्वा ततो दश कृत्वा ततो द्वयमानय कुरु इत्यर्थः। एतावताद्वादशाधिकशतं मात्राः ११२ पदचतुष्टये भवन्ति। अत्राकस्य दक्षिणा गतिर्वृत्तास्ति तेनैतत्संभवति। पदे तु अष्टाविंशतिर्मात्रा भवति। एवं हरिगीता॰ छदः प्रसिद्ध कृत्वा जानीत। पिंगलेन व्याख्यानमुक्त।

१८२. उक्तमेव द्रढयति, बीए इति। द्वितीयस्थाने षट्कलं सस्थाप्य पचकलान् चतुरो गणान् ददत। द्वादशाधिकशत मात्रा भवंति। मानस गुरु अते स्थापयत।

१८३. यथा गअ गअहि इत्यादि सुकरं।

१८४. अथ त्रिभगी, पढम इति। प्रथम दशसु विश्रामः। ततोऽष्टसु विश्रामः। ततः षट्सु विश्रामः। अते यत्र गुरुः शोभते। तच्छंदः त्रिभगी।यग्रे

स्थितेनान्वयः। महीतलं यन्मोहयति। सिद्धेः कवित्वसिद्धेः सरोवरं भवति। वरतरुण छंदसि इति शेषः। दोषमाह। यदि पयोधरो जगणः पतति तदा किमिदं मनोहर अपितु न सुन्दर। जगणो न भवतीत्यर्थः। यदि जगणयुक्तं भवति तदा यस्य क्रियते तस्य कवेरपि कलेवर हति। एतादृश त्रिभंगीछ्दः सुखाय आनदाय भवति। इति भणति भणींद्रो विमलमतिः।

१८५. यथा सिर किज्जिअ गंग इत्यादि सुगमं।

१८६. अथ दुर्मिला, तीस इति। यत्र द्वात्रिंशन्मात्राः एतद्‌वक्ष्यमाण-लक्षणयुक्ताः। बुधजनराजः पिंगलो भाषते, हे नरा इति सम्बोधनं। यदि विश्रा-मस्त्रिषुस्थानेषु एतादृशवक्ष्यमाणेषु भागेषु। अपरमप्याह पदे पदे कर्णगणो दृश्यते। यतिस्थानमाह। तत्र प्रथमः दशसु विश्रामः, द्वितीयोऽष्टसु, तृतीयः चतुर्दशसु कृतनियमः। यत् एतादृश छंदस्त्रिभुवनवंद्य यदि बुध्यते तदा दुर्मिलको भवति।

१८७. यथा जे किज्जिय इत्यादि सुगम।

१८८. अथ हीरः, णाअ इति। नागः प्रभणति हीरनामकं छदः इति चतुर्थपद-शेषस्थ योजय। यत्र त्रयः षट्‌कला गणाः अंते रगण स्थापय। षट्‌कलेपि नैत्यमाह। हार गुरु स्थापयित्वा हे सुप्रिये शोभने काते विप्रगणैः सर्वलघुचतुष्कलगणैः साद्धल सहित। कलासंख्यामाह त्रीन् कृत्वा द्वयं कुरु। अंकस्य वामतो गतिरिति गुणिते त्रयोविंशति कलाः पदे भवति। एतावतीर्मात्राः पदे लेखय। दार्ढ्यमाह। को जानाति, न कोपि जानातीत्यर्थः। दर्पेण भणति हीरनामक छदः। कीदृशं सुकवि-दृष्ट। सुकविना पिंगलेन दृष्ट।

१८९ सक्षेपेणाह, हार सुपिअ इति। हारो गुरुः सुप्रियो द्विलघुर्गणः। तथाविधगणद्वय विप्रगणो वा हारानतरं यत्र एव भिन्नशरीरं संबद्धशरीर अंते जोहल रगणं स्थापय। त्रयोविंशतिमात्राभिर्हीरनामक छदो भवति।

१९०. यथा धिक्क इत्यादि सुगमं।

१९१. अथ जलधरः, पअ पढम इति। पदे प्रथमे पतति यत्र शृणु कमलमुखि। दशसु १० वसुषु ८ पुनरपि वसुषु ८ विरतिः कृता सर्वत्र पदे द्विजगणो दीयते। ततः पर सगणो दीयते। श्रीफणिपतिर्भणति। कथभूतः शोभनः कविवरः। दश त्रिगुणाः कलाः कुरु। पुनरपि युगल सस्थापय। अंकतो यथा ३२ अनेन प्रकारेण चतुरश्चरणान् संस्थापय। अथ यदि कथमपि मध्ये गुरुः तदा न परिहर। एकेन द्वयेन वा गुरुणा न परिहरणीयमित्यर्थः। बुधजनमनोहरं जल-धरच्छ्दः।

१९२. सक्षेप माह, बत्तीस इति। द्वात्रिंशन्मात्रा भवन्ति। अन्ते सगण

संस्थापय । सर्वे लघवः क्रियते । यदि गुरुः क्रियते, तदा एको न किंतु द्वौ गुरू पादे भवतः ।

१९३. यथा खुर इत्यादि व्यक्तानुकरण सुगमं ॥ १९३ ॥

१९४. अथ मदनगृहं, पिअ इति । प्रिये भणामि छंद इति शेषः । मनोहरं मनःप्रिय पयोधरं जगणं मेलयित्वा, हे सुभगे, एतच्छंदः क्षणं क्षणार्द्धं वा सुखयति । मनः स्थिरं कुरु स्थिरेण मनसा कर्तुं पार्यंत इत्यर्थः । यदि रागोऽनुरागो वर्तते तदा क्षत्रियजातिं अनुसर । छंदसोऽस्य क्षत्रियजातिः । छंदःशास्त्रादाकृष्य छंदो भणितं । यथा हृदये परकार्यं ऋणं स्खलति सर्वथा स्मरणपापं याति । उट्टवनिकाप्रकारमाह । द्वौ शल्यौ लघू प्रहृत्य संस्थाप्य तुरंगा बद्धा, ततो रथहयगजाः प्रसरन्ति, नव चतुष्कलगणाः प्रसरन्ति धराया । अंते गुरुं सज्जीकृत्य, कथंभूतं गुरुं, वरं श्रेष्ठं । यदि जागरं कृत्वा सावधानीभूय निरुच्यते । तदा दशगुणयुक्तं । चतुः संधौ पादचतुष्टये चत्वारिंशच्चतुःकला गणा भवंति । एवं मदनगृहं भण्यते ।

१९५. संक्षेपेण उक्तं स्थिरीकरोति, बे वि इति । द्वे मात्रे शिरसि संस्थाप्य अंते गुरुं कुरु । मध्ये च नव चतुष्कलगणान् दत्वा मदनगृहं कुरुत ।

१९६. यथा जेहि कंस इत्यादि सुगमं ।

१९७. अथ मरहट्टा, एहु छंद इति । हे सुलक्षणे, विलक्षणमेतच्छंदः पिंगलनागो जल्पति । विश्राम्यति दशसु अक्षरेषु । पुनरष्टाक्षरेषु । पुनरप्यष्टादशाक्षरेषु । अत्र अक्षरशब्देन मात्रा उक्ताः । मात्रावृत्तेऽस्य छंदसः कथनात् । उट्टवनिका प्रकारमाह । आदौ षट्कलो गणः । ततः पंच चतुष्कलगणाः । अंते गुरुं लघुं च देहि । एको गुरुरेको लघुरन्ते भवति । षोडशाधिकाः शतं मात्रा ११६ भवंति संपूर्णाः । एवं मरहट्टानाम छंदो भण्यते ।

१९८. यथा जइ इत्यादि सुगमं ।

अथ पूर्वोक्तछंदसा नामानि कथयति तं गाहू इति । गाहू १ गाहा २ विगाहा ३ उग्गाहा ४ गाहिनी ५ सिंहनी ६ स्कंधकं ७ दोहा ८ उक्कच्छा ९ रोला १० गन्धाना ११ चतुष्पदिका १२ घातः १३ घातानंदः १४ इति युगलं । षट्पदः १५ पज्झटिका १४ अलिल्ला १७ पादाकुलकं १४ नवपदी १९ पद्मावती २० कुण्डलिका २१ गगनागः २२ द्विपदी २३ खजा २४ शिखा २५ माला २६ चुलियाला २७ सौराष्ट्रा २८ हाकली २९ मधुमारः ३० आभीरः ३१ दंडकलः ३२ दीपकं ३३ सिंहावलोकः ३४ प्लवंगमः ३५ लीलावती ३५ हरिगीता ३७ त्रिभंगी ३८ ततः दुर्म्मिला ३९ हीरः ४० जलधरः ४१ मदनगृहं ४२ मरहट्टा ४३ इति त्रयश्चत्वारिंशत् छंदांसि भवंति ।

इति पिंगलसारविकाशिन्यां टीकायां मात्रावृत्तपरिच्छेदः समाप्तः ।

---

## [ वर्णवृत्त प्रकरण ]

अथ वर्णवृत्तानि । तत्रैकाक्षरपादतः समारभ्यते ।

१. सी सा इति । श्रीः । यत्र गुरुः ।

२. यथा गौरी रक्षतु त्वामिति शेषः ।

३. अथ कामः, दीहा इति । द्वौ दीर्घौ यः स कामोभिरामः ।

४. यथा जुज्झे इति । युद्धे तुभ्यं शुभं ददातु ।

५. अथ मधुः, लहु इति । लघुद्वयं यत्र तत् मधुनाम छंदः ध्रुवं निश्चयेन ।

६. यथा हर इति । मम मल हरो हरतु ।

७. अथ मही, लगो इति । लघुर्गुरुर्यत्र सा मही नाम कथिता ।

८. यथा, सती उमा रक्षतु त्वा ।

९. अथ सारुः, सारु इति । सारुरेष । यत्रादौ गुरुः । द्वितीयो लघुः ।

१०. यथा संभु इति । शंभुरेष शुभं ददातु ।

११. अथ ताली, तालो इति । ताली ज्ञायते । यत्र गुरुः कर्णो द्विगुरुर्गुणः त्रिभिवर्णैर्ज्ञायते इत्यर्थः ।

१२. यथा अह्माण इति । अस्मान् युष्मान् ।चडेशो रक्षतु सः ।

१३. अथ प्रिया, हे पिए इति । प्रियाछन्दो लिख्यते । हे प्रिये इति सम्बोधन । त्रिभिरक्षरैः । अक्षराणि कि रूगाणीत्याह । रे रगणरूपाणि ।

१४. यथा सकरो इति । शकरः शिवः शकरः कल्याणकरः । पावनः पवित्रताहेतुः न अस्मान् पातु रक्षतु ।

१५. अथ शशी, ससी णो इति । शशी छन्दो भवति । कि भूत यगणेन नीतं यगणसहितं फणींद्रेण भणित ।

१६. यथा भवाणी इति । भवानी हसती दुरित हरतु ।

१७. अथ रमणः, सगणो इति । रमणच्छन्दो भवति । हे सखि सगणेन कथित ।

१८. यथा ससिणो इति । शशिना रजनी पत्या तरुणी शोभते इति शेषः ।

१९. अथ पचालः, तक्कार इति । तकारस्तगणो यत्र दृष्टः स पचाल उत्कृष्टः ।

२०. यथा सो इति । स ददातु सुखानि, संहृत्य दुःखानि ।

२१. अथ मृगेंद्रः, णरे द इति । नरेंद्र जगण स्थापय, मृगेंद्रनामक छदः कुरु ।

२२. यथा दुरंत इति। दूरे कातः दुरतो वसंतः।

२३. अथ मदरः, भो जहि इति। यत्र भो भगणः स मंदरः। हे सखि किं भूतः सुदरः।

२४. यथा सो हर इति। स हरस्तव सकटं सहरतु।

२५. अथ कमलं, कमल इति। कमल प्रभण हे सुमुखि किं भूतं। नगणेन लक्षितं। यथा रमणे इति रमणस्य गमने विदेशगमने कस्या मनः अपि तु न कस्या अपीत्यर्थः।

२७. अथ तीर्णं, वण्ण चारि इति। चतुर्भिरष्टौ कला यत्र तैरेव द्वौ कर्णौ द्विगुणौ यत्र तं तीर्णां जानीत।

२८ यथा जाआ इति। पत्नी मायावती पुत्रो धूर्त्तः। एवं ज्ञात्वा क्रियता युक्त। त्यागे यत्नः क्रियतामित्यर्थः।

२९. अथ धारी, वण्ण चारि इति। हे मुग्धे, चतुर्वर्णैर्धारी भवति। तस्या अंतरांतरा द्वौ गुरु भवतः।

३०. यथा देउ इति। देवदेवः शिवः शुभ ददातु, यस्य शीर्षे इदुः दृष्टः।

३१. अथ नगाणी, पओहरो इति। यत्र पयोधरो जगणो भवति। किं भूतः गुरुत्तरो गुर्वंतः। नगाणी नाम छंदो ज्ञायते।

३२. यथा सरस्सई इति। सरस्वती प्रसन्ना भवतु। कवित्वं अस्माक स्फुरतु ततः।

३३. अथ समोहा, संमोहा इति। सम्मोहानामरूपक छंदो दृष्ट तत्। भुवि पृथिव्या। यत्र कर्णद्वयानतर हारो गुरुः पदे पच गुरवो भवतीत्यर्थः, कीदृश भुवने सारभूत।

३४. यथा उद्दडा इति। उद्दडा उद्दामा चडी दुर्गा दुरितविनाशिनी त्रैलोक्यस्य सुख मे मोक्ष च ददातु।

३५ अथ हारीतबंधः, आइहि इति। आदावते च द्वाभ्यां गुरुभ्या सयुक्तः। मध्ये एको गधो लघुर्यस्य स हारीतबंधः।

३६. यथा जा भत्ति इति। या भक्तियुक्ता धर्मैकचित्ता भवति। सा नारी धन्या प्रेमभाजन पत्युरिति शेषः।

३७. अथ हंसा, पिंगले इति। पिंगलेन हसा दृष्टा भगण कृत्वा सृष्टा। कर्णगणो द्वितीयः। हंसो जायते। प्रथममत्र भगणस्ततो द्विगुरुर्गण इत्यर्थः।

३८. यथा सो इति। स मम कांतः दूरे प्रावृट् आगता चेतः कपते।

३९. अथ यमकं, सुपिअ इति। तत् यमक जानीत। यत्र सुप्रियो द्विलघु-र्गणः कीदृशः सरसो रसमपूर्णः। इति बुध्यस्व। ततः शरस्त्रगणः संभवति।

४०. यथा पवण इति। पवनो वहति संहतमदनो इति मनस्तपति।

४१. अथ शेषः, बाराहा इति यत्र द्वादश मात्राः। त्रयः कर्णगणा भवति। तदेव द्रढयति, हारषट्कस्य गुरुषट्कस्य बधकः शेषराजच्छदः।

४२. यथा उद्दामा इति, सुगम।

४३. अथ डिल्ला, पिअ इति। प्रिये डिल्लानामछदः किं लक्षण सगणेन युक्त, षड्वर्णात्मकः पादः यत्राष्टौ कलाः स्थिताः।

४४. यथा पिअ भत्ति इत्यादिसुगम।

४४. अथ द्वियोधा अक्खरा इति। द्वियोधा उक्ता यत्र षट् अक्षराणि पादपादे स्थितानि। द्विगुणाः पचमात्राः यस्या भवति। दशमात्रा इत्यर्थः।

४६. यथा कस सघारणा इत्यादि सुगम।

४७. अथ चौरंसा, चउ इति। फणिपतिना पिंगलेन भाषितां चौरसा स्थापय। यत्र द्विजवरः चतुलघुगणान्। ततः कर्णौ द्विगुरुगणो भवति। कीदृशौ। स्फुटशरसवर्णौ व्यक्तषड्वर्णामित्यर्थः।

४८. अथ णअण इति सुगम।

४९. अथ मथाना, कामा इति। तत् मथाननामक छदः बुध्यस्व। कामावतारस्य अर्द्धेन पादेन भवति। कामावतारोऽग्रे वक्ष्यमाणो विंशति-कलारचितपादः। शुद्धा दश मात्राश्चात्र भवति।

५०. यथा राआ इत्यादि सुगम।

५१. अथा शखनारी, षडा इति। षड्भिर्वर्णैरक्षरैर्बद्धा भुजगप्रयातपदार्द्धा; भुगगप्रयातपदार्द्धेन भवतीत्यर्थः। भुजगप्रयातमग्रे चतुर्भिर्यगणैर्भविष्यति। तदर्धेन यगणद्वयेण भवति पदचतुष्टयं यत्र, सा शखनारी कथिता।

५२. यथा गुण इति सुगम।

५३. अथ मालती, धअ इति। हे काते सा मालती। सा का यस्या आदौ ध्वजः। ततो द्वौ शरौ। ततस्तृतीय मणि जानीहि, अन्ते लघुं रचयित्वा।

५४. यथा करा इति सुगम।

५५. अथ दमनकः, दिअ इति। दमनकं जानीहि फणिपतिः पिंगलो भणति। यत्र द्विजवरश्चतुर्लघुगणः प्रथम क्रियते। ततः सुप्रियो द्विलघुर्गणो भण्यते।

५६. यथा कमलणअणि इति सुगम।

५७. अथ समानिका, चारि इति। हे प्रिये सा समानिका कथिता। यत्रान्तरा चत्वारो हारा गुरवः क्रियते, त्रयो लघवो दीयते सप्तभिरक्षरैरास्थिता।

५८. यथा कुञ्जरा इत्यादि सुगमं।

५९. अथ सुवासः, भणइ इति। भणामि सुवास लघुसु विशेषः। आदौ चतुर्मात्रिकं विरच्य अते भगणः क्रियते।

६०. यथा गुरुजण इत्यादि सुगम ।

६१. अथ करहचः, चरण गण इति चरणे प्रथमे विप्रश्चतुर्लघुर्गणः स्थाप्यते । तस्यांते जगणः यत्र स करहंचो भण्यते ।

६२. यथा जिअउ इति । यदि एषा जीवन त्यजामि गत्वा देहं तीर्थे इति शेषः रमणे योपि सोपि भवतु निर्गुणः सगुणो वा । परन्तु विरहो मा भवतु ।

६३. अथ शीर्परूपक, सत्ता इति । तत् शीर्परूपक नाम छदः । यत्र सप्त-दीर्घा गुरवो ज्ञायते । तैरेव त्रयः कर्णा द्विगुरुगणा अंते गुरुः एव चतुर्दश मात्रा भवति ।

६४. यथा चदा इति सुगम ।

६५. अथ विद्युन्माला, विज्जूमाला इति । विद्युन्माला षोडशभिर्मात्राभि-र्भवति । ताभिरेव पदे लोलाश्चचलाश्चत्वारः कर्णगणा द्विगुरवो गणा भवन्ति । एवं रूपकाणि चत्वारि पदानि यस्याः । क्षत्रियजातिः जानीतेति शेषः । विद्युन्माला ।

६६. यथा उम्मत्ता इति सुगम ।

६७. अथ प्रमाणिका, लहू इति । लघु गुरु निरन्तरौ यस्या सा लघु-गुरुनिरन्तरा, प्रथम लघुनिरन्तर गुरुर्भवति इत्यर्थः । सा प्रमाणिकाऽष्टाक्षरा अष्टाक्षरघटितया प्रमाणिका कथनावसरे एव छदांतरमपि कथयति । यदि प्रमा-णिका द्विगुणा क्रियते तदा नाराचो भण्यते । नाराचछन्दोप्यग्रे वक्ष्यति ।

६८. यथा णिसुम्भ इत्यादि सुगम ।

६९. अथ मल्लिका, हार इति । मल्लिकाछन्दो जानीहि । अष्टभिरक्षरैर्दृष्ट किं भूतैः हारो गुरुर्गन्धो लघुस्तयोर्बन्धनैः प्रथम गुरुः, तदतर लघुरित्यर्थः । तत्र द्वादशमात्रा भवतीति जानीहि ।

७०. यथा येन जितक्षत्रियवशः । तत्र के इत्याह रिष्टिमुष्टिककेशि-कसाः । बाण बाहवः कर्तिताः येनासौ तुभ्य शुभ ददातु ।

७१. अथ तुगा, तरल इति । हे तरलनयने तुङ्गाछन्दो भवति प्रथम गणे सुरङ्ग. शोभनः । नगणयुगलेन बद्धः । अनन्तर गुरुद्वयमित्यर्थः ।

७२. यथा कमलभ्रमरजीवः सकलभुवनदीपः तापिततिमिर-डिम्बः उदेति तरणिबिम्बः ।

७३. अथ कमल, पठम इति । एव प्रकारेण कमलं भवति । यत्र प्रथम चरणे विप्रश्चतुर्लघुर्गणो भवति । द्वितीय तथा नरेन्द्रो जगणः । ततः शेषः गुरुसहितः ।

७४. यथा विजअइ इति सुगम ।

७५. अथ महालक्ष्मीः, दिट्ठ इति। हे मुग्धे, महालक्ष्मीं जानीहि यत्र योधा रगणो द्रष्टः। या नागराजेन पिंगलेन रचिता पादे मासार्द्धेन पञ्चदश-कलाछिन्ना मित्यर्थः।

७६. यथा मुडमाला इत्यादि सुकरं।

७७ अथ सारङ्गिका, दिअ इति। हे सखि सारङ्गिका कथिता। यत्र द्विजव-रश्चतुर्लघुर्गणः। ततः सगणः एव प्रकारेण यत्र पदे मात्राणा गुणन। शराः पञ्च मुनिः सप्त ७ एताभिर्मात्राभिलब्धा द्वादशमात्राभिर्गुणितेत्यर्थः।

७८. यथा हरिण सरिस्सा इत्यादि सुगम।

७९. अथ पाइत्ता, कुन्तीपुत्ता इति। पाइत्तारूपक कथित तत्। यत्र कुन्तीपुत्रद्वयं द्विगुरुगणद्वयं भवति। तृतीयगणे विप्रश्चतुर्लघुर्गणो भवति ध्रुवं निश्चित। अन्ते हारो गुरुर्ज्ञातः।

८०. यथा फुल्ला इति। प्रफुल्ला नीपाः। भ्रमति भ्रमराः। दृष्टा जल श्यामलाः। नृत्यति विद्युत् प्रियसहिता। आगमिष्यति कातः सखि कदा।

८२. अथ कमला, सरस इति। हे रमणि, यत्र सरसौ द्वौ द्विजवरगणौ चतुर्लघु-गणौ। सगणः प्रतिपदे। चतुर्लघुगणद्वयातर गुरुरिति यावत्। एव दशकला यत्र भवति सा कमला।

८३. यथा चल इति। चचलकमलनयना स्खलति स्तननिवसन यस्या। हसति परनिकटे। असती ध्रुव वधूटी।

८४. अथ बिंबा, रइअ इति। एषा फणिना बिंबा रचिता, यस्या सर्वशेषे गुरु युगल गुरुद्वय। शिरसि प्रथम द्विजवरश्चतुर्लघुर्गणः। मध्ये राजा जगणः। गुणनाकः एव स्वभावा बिंबेत्यर्थः।

८५. यथा चल इति। चलति चलं चंचलं वित्तमेतत्। नश्यति तरुणत्ववेषः सुपुरुषगुणेन बद्धा स्थिराऽवतिष्ठते कीर्तिः। तस्मात्कीर्तिरुपार्जनीयेति भावः।

८६ अथ तोमरः, जसु इति। प्रभणति नागनरेन्द्रो नागराजः। एव जानीहि तोमरछंदः। यत्रादौ हस्तचतुष्कलो गणो विजायते। ततो द्वौ पयोधरौ जगणौ जानीहि।

८७. यथा चलि इति। चलित्वा चूते कोकिलशावः मधुमासे पचम गायति। न खलु कातोऽद्याप्यायाति।

८८. अथ रूपमाला, णाअ। राआ इति नागराजो जल्पति सारं। चत्वारः कर्णा द्विगुरवो गणा यत्र अंते हारो गुरुः। यस्या पादे अष्टादश मात्रा भवति तत् छंदो रूपमाला इति जल्पितं।

८९. यथाच्च ज णच्चे इति । यथा नृत्यति विद्युत् । मेघोंधकारः, प्रफुल्लिता नीपाः, शब्दायते मयूराः, वीजयते मंदाः शीताः वाताः, कंपते कायः, कातो नायातः ।

९०. अथ सयुक्ता, जसु इति । तत् छदः सयुक्तनामक स्थापित । यस्य आदौ हस्तोन्तगुरुः चतुष्कलगणो विज्ञातः । ततः पादद्वय विज्ञायते । गुरुरते यस्य पिंगलेन जल्पितः ।

९१. यथा तुहु इति । त्व याहि सुन्दरी आत्मना परित्यज दुर्ज्जनस्थापना । विकसति केतकीसंपुट निभृतमेवागमिष्यति वराकोऽनुकम्प्य ।

९१. अथ चपकमाला, हार इति । चपकमाला छद इति उच्यते । यत्र हारो गुरुः प्रथम स्थाप्यते । ततः काहलद्वय लघुद्वय । ततः कुन्तीपुत्रो द्विगुरुर्गणः । गुरुसंयुक्तः । ततो हस्तोंत्यगुरुः चतुष्कलगणः क्रियते । ततो हारो गुरुः स्थाप्यते ।

९२. यथा ओगरभत्ता इत्यादि सुगम ।

९३. अथ सरस्वती, दीह इति । ध्रुव निश्चितं सरस्वतीनाम छदः कथितं यत्र दीर्घो गुरुः । ततो लघुद्वयं ततो दीर्घः । ततो लघुरेकः । अंते पयोधरो जगणः । ततो ध्वज आदिलघुस्त्रिकलगणः । एव चतुर्दशमात्रा भवति ।

९४. यथा पुत्त इत्यादि सुकरं ।

९५. अथ सुषमा, कण्णो इति । एषा सुषमा छदसि दृष्टा । यत्र प्रथम कर्णः प्रकटः । द्वितीयो हस्तोन्तगुरुश्चतुष्कलः । तृतीयः कर्णः । चतुर्थः पुनर्हस्तः । पदे षोडश कला भवंति । तासु षट् वलया गुरवः ।

९६. यथा मडहा इत्यादि ।

९७. अथ अमृतगतिः, दिअवर इति । अमृतगतिर्ध्रुव कथिता यत्र द्विजवरश्चतुर्लघुर्गणस्ततो हारो गुरुः प्रकटितः । पुनरपि तथैव कृतः द्विजवरगणानतर गुरुरित्यर्थः । एव सति अष्टौ लघवो द्वौ गुरू यत्र भवति ।

९८. यथा सरअ इत्यादि सुकरं ।

९९. अथ बंधुः, णील इति । बधुः क्रियते । किंभूतः । नीलस्वरूपः । यथा नीलनामकं छदस्तथैव अत्र त्रयो भगणा भवंति । गुरुद्वय अंते कुरु । षोडश मात्रा पदे पदे स्थाप्यते ।

१००. यथा पंडउ इत्यादि सुकरं ।

१०१. अथ सुमुखी, दिअवर इति । सुमुखी कविजनवल्लभा भवति । यस्या द्विजवरश्चतुर्लघुर्गणस्ततो लघुद्वयं । ततो वलय गुरु परिस्थापय । ततो हस्तोन्तगुरुश्चतुष्कलगणः । पादे चतुर्दश कलाश्चात्र अहिना पिंगलेन जल्पिताः ।

१०२. यथा अइ इत्यादि सुकरं ।

१०३. अथ दोधक:, चामर इति। दोधकछंदः फणींद्रेण कथितं। यत्र च प्रथमं चामरः गुरुरनंतरं काहलयुगं लघुद्वयं स्थाप्यते। ततो हारो गुरुस्ततो लघुद्वयं ध्रियते। पदांते कर्णगणो द्विगुरुर्गणः क्रियते।

१०४. यथा पिंग इत्यादि सुकरं।

१०५. अथ शालिनी, कण्णो इति। सर्पराजेन पिंगलेन सा शालिनी भणिता। यत्र द्वौ कर्णौ द्विगुरुगणौ तत एको हारो गुरुर्विसृज्यते। ततः शल्यो लघुरेकस्ततः कर्णो द्विगुरुर्गणः, ततो गंध एको लघुस्ततः कर्णौ द्विगुरुगणौ ज्ञायते। पादे विंशति रेखाः कला गण्यते।

१०६. यथा रंडा इति। रंडाचंडादीक्षिता धर्मदारा मद्यं मांस पीयते खाद्यते च। भिक्षा भोज्यं चर्मखण्डं च शैय्या कौलो धर्मः कस्य नो भाति रम्यः।

१०७. अथ दमनकः, दिअवर इति। फणिभणितं दमनकं भण्यते। यत्र द्विजवरं द्विजयुगं चतुर्लघुगणद्वयं भवति। ततो लघुद्वयं भण्यते पदे पदे वलयं गुरुं परिस्थापय अंते इति शेषः, चतुःपदे चतुर्वसुकलं द्वादशकलमित्यर्थः।

१०८ यथा पअलिअ इत्यादि सुकरं।

१०९. अथ सेनिका, तालणंद इति। नागराजेन पिंगलेन जल्पिता एषा सेनिका। यस्या तालो गुरुर्नंदो लघुः समुद्रसंख्यस्थाने स्थानचतुष्टये। ततो योधगणेन रगणेन पूर्णा, शेषे रगणो भवतीत्यर्थः। अत्र एकादशाक्षराणि जायते।

११०. यथा भत्ति इत्यादि सुकरं।

१११ अथ मालती, कुंती इति। नागेशो मालतीनाम छंदो जल्पति। यत्र कुंतीपुत्रा कर्णगणाः पंच ज्ञायते। अंते शेषे कांतः सुंदर एको हारो गुरुर्ज्ञायते। पदे द्वाविंशतिर्मात्रा भवंति।

११२. यथा ठामा इति। स्थाने स्थाने हस्तीयूथा प्रेक्ष्यते। यथा मेघा मेरुशृंगे दृश्यते। वीरहस्ताग्रे खड्गा वर्तन्ते यथा विद्युन्मेघमध्ये नृत्यति।

११३. अथेंद्रवज्रा, दिज्जे इति। फणींद्र इंद्रवज्रा जल्पति ध्रुवं निश्चितं। यत्र हीरकयुगलं पदेषु दीयते हीरक इति पंचकलगणस्य नाम। अंते तदनंतरं नरेंद्रो जगणः। ततः शेषे पदावसाने गुरुद्वयं। पदे मात्राश्चाष्टादश संख्या भवति। समानाधिका इत्यर्थः। सुसज्जिता शोभनीकृत्य सज्जिता लिखिताः।

११४. यथा तंत इति। तंत्र मंत्रं न किमपि जाने, ध्यानं च न किमपि गुरुप्रसादात्, मद्यं पिबामि महिला रमामि, मोक्षं च यामि कुलमार्गलग्न इति कस्यचिद् योगिनो वचनं।

११५. अथोपेंद्रवज्रा, णरेंद्र इति। फणिराजेन उपेंद्रवज्रा दृष्टा छेका विद-

ग्धास्तां पठति। शुभाक्षरनिबद्धां इत्यर्थः। यत्र एको नरेंद्रो जगणोऽनंतर शोभन-निर्मितस्तगणः ततः पयोधरो जगणः। ततः कर्णगणो द्विगुरुर्गणो ज्ञायते।

११६. यथा सुधम्म इति। येषा धर्मैकचित्ता गुणवतः पुत्राः स्वधर्मानुरक्त विनीत कलत्र विशुद्धो देहः। नियुक्त गृहं। एतादृशाः के बर्बर मूर्खाः स्वर्गे स्नेहं कुर्वन्ति।

११७. अथ उपजाति, चउ इति। चतुरक्षरस्य प्रस्तार कुरु। इंद्रवज्राया उपेंद्रवज्रायाश्च लघुगुरुं जानीहि। मध्ये सर्वगुरुसर्वलघुगणयोर्मध्ये चतुर्दश उपजातयो भवति। पिंगलो जल्पति किमिति व्याकुलीभवति जनः।

११८. यथा बालः कुमार इत्यत्र पदद्वयमिंद्रवज्राया लक्षणेन पदद्वयमुपेंद्रवज्राया लक्षणेन। अर्थस्तु सुकरत्वान्न लिखितः।

११९. तासां नामानि कित्ती इति। कीर्तिः १ राज्ञी २ माला ३ शाला ४ हंसी ५ माया ६ जाया ७ बाला ८ आर्द्रा ९ भद्रा १० प्रेमा ११ रामा १२ ऋद्धि १३ बुद्धिः १४ इति तस्या नामानि।

१२०. अथ विद्याधरः, चारी इति। नागराजः पिंगलो विद्याधरनामछंदो जल्पति। किं भूतं सकलछंदसि सार उत्कृष्टं। यत्र चत्वारः कर्णा द्विगुरवो गणाः पादे दत्ताः, सकलश्रेष्ठ भवति। पदांते शेषे चत्वारो हारा गुरवो दीयते। एव सति पदचतुष्टये पण्णवति मात्रा भवते प्राप्ताः पर्याप्ताः।

१२१. यथा जासू कंठा इत्यादि सुकर।

१२२. अथ भुजगप्रयातं, धओ इति। भुजगप्रयात छंदो भवति। यत्र ध्वज आदिलघुस्त्रिकलो गणः। ततश्चामर गुरुरेकः। एव प्रकारेण गणचतुष्टय। ततः शेषे गुरुः एतच्छंदश्चतुष्टयेन कर्तव्य षोडशपदात्मकमित्यर्थः। शुद्धदेहं। अस्य पदे विंशति मात्रा भवति।

१२३. अहिगण इति। चत्वारि अहिगणा आदिलघुपंचकला गणाः प्रसिद्धाः षोडशभिश्चरणैः पिंगलः कथयति। त्रीणि शतानि विंशत्यधिकानि मात्रा भवति। कीदृशानि संख्यया समग्राणि।

१२४. यथा महामत्त मातंग इत्यादि सुकर।

१२५. अथ लक्ष्मीधरः, हार इति। एव रूपेण लक्ष्मीधरो जातः यत्र हारो गुरुः, ततो गंधो लघुः, ततः कर्णो द्विगुरुर्गणः, ततः पुनर्गन्धो लघुः, ततः कर्णो द्विगुरु गणः, ततः शरः लघुः, ततस्तकारस्तगणः, ततो गुरुर्भवति। उद्दवनिकायाः प्रकारान्तरमाह। चत्वारो जोहलगणाः अत्र भवंति। नागराजः पिंगलो भणति।

१२६. यथा भजिआ इत्यादि सुकर।

१२७. अथ तोटक, सगण द्धुअ इति। इह छंदःशास्त्रे पिंगलेन रचितं योग्यं

तोटकनाम छंदो भणितं यत्र ध्रुव निश्चितं चत्वारः सगणाः पतति। गणे पदे षोडशमात्रासु विरामकरु ।

१२८. यथा चल गुज्जर कुजर इत्यादि सुकर ।

१२९. अथ सारंगः, जा चारि इति। तत्सारंगनामकं रूपकं पिंगलेन दृष्टं। यत् चतुस्तकारसभेदेन उत्कृष्ट विभक्तमित्यर्थः। यत् पदे विश्रामत्रयेण युक्त। न ज्ञायेत चातिरस्य छंदसोऽन्योन्यभागेन ।

१३०. यथा रे गोड इत्यादि सुकर ।

१३१. अथ मौतिकदाम, पओहर इति। मौक्तिकदाम छंदो भवति। यत्र चत्वारः पयोधरा जगणाः प्रसिद्धाः त्रयाधिकास्त्रयोदश मात्रा यत्र भवति। षोडश मात्रा भवतीत्यर्थः। न अत्र पूर्वं प्रथम हारो गुरुर्न वा अन्ते। अत्र षट्पंचाशदधिकाः शतद्वय मात्रा भवति।

१३२. यथा कआ भउ इत्यादि सुकर ।

१३३ अथ मोदकः, तोडअ इति। मोदकच्छन्दसो नामानि जानीत। यत्र तोटकच्छन्दसो विपरीता गणाः स्थाप्यते। तत्र सगणचतुष्टय प्रसिद्ध भवति सगणो यदि विपरीतः क्रियते तदा भगण एव भवति। कीर्तिलुब्धः पिंगलो जल्पति।

१३४. यथा गज्ज इत्यादि सुकर ।

१३५. अथ तरलनयनी, णगण इति। सुकवयः कमलानि तत्र रविः सूर्यः फणि पिंगलः तरलनयनीं भणति यत्र चत्वारो नगणा भवति। सर्वे लघव एवात्र भवति। गुरुर्यत्नादपि नात्र निरूप्यते।

१३६. यथा कमलणअण इत्यादि सुकरं ।

१३७. अथ सुन्दरी, णगण इति। हे सुमुखि पिंगलेन सुन्दरी कथिता। यत्र नगणस्त्रिलघुर्गणः, ततश्चामर गुरुः, ततः शल्ययुगलं लघुद्वयं भवति। अत्र एको रगणः पदाते दृष्टः ॥

१३८. यथा वह इत्यादि सुकर ।

१३९. अथ माया, कण्णा दुण्णा इति। माया भणिता। यत्र द्वौ कर्णौ द्विगुरुगणौ ततश्चामर गुरुस्ततः शल्ययुग लघुद्वयं, ततो द्वौ दीर्घौ गुरू ततो गन्धद्वयं लघुद्वय प्रपद्यते। अन्ते शेषे चामर गुरुरनंतर हारो गुरवः शोभनकाया सुन्दर शरीराः। यत्र गुणयुक्ताः छन्दोयुक्ता द्वात्रिंशतिर्मात्रा भवंति ।

१४०. यथा ए अत्थीरा इत्यादि सुकर ।

१४१. अथ तारका, दुइ इति। हे सखि तारकनाम्नः छन्दसो नाम भण्यते। पदे आदौ लघुद्वयं स्थापय ततो गुरुस्तदनतरं शल्ययुत लघुद्वय च। ततोपि गुरुर्लघुद्वयमेव दीयते। पदांत प्राप्य गुरुद्वय क्रियते।

१४२. यथा णअमजरि इत्यादि सुगम ।

१४३. अथ कदः, धआ इति । कवीशेन पिंगलेन नागेन कलामयेन छन्दो जल्पित । ध्वज आदिलघुस्त्रिकलो गणः । ततस्तूर्यमादिगुरुस्त्रिकलः । ततो हारो गुरुस्ततो गुरुरनंतर काहलो लघुस्ततः कर्णो द्विगुरुर्गणः । ततो लकारो लघुरेको यत्रास्ति सकले च पदचतुष्टये चतुरधिका अशीतिर्मात्रा भवंति ।

१४४. यथा ण रे कंस इत्यादि सुकरं ।

१४५. अथ पंकावली, चामर इति । पिगलो नागः पकावलीं प्रभणति । यत्र प्रथम चामरमेको गुरुः । तत यो यगणः पञ्चकलो गणः । ततः शल्यगण एक लघुर्गणः ततश्चरणद्वयं आदिगुरुच तुष्कलगणद्वयं स्थापय । प्रतिपद षोडश मात्रा ज्ञायंते ।

१४६. यथा सो जण इत्यादि सुकरं ।

१४७ अथ वसततिलका, वण्णो इति । फणिना पिंगलेन वसततिलक नाम छन्द उक्तं । किं भूत उत्कृष्ट । विदग्धा सरसा रससहिताः छन्द इद पठति । शुभवर्णं शुभाक्षर । यत्र प्रथमे गणे गणो द्विगुरुर्गणः प्रकटः, द्वितीय गणे जगणः, तृतीये तु रगणश्चतुष्कलः, ततः सगणः, ततो यगणः पादे चरणे भवति ।

१४८. यथा कश्चित् कामपि नायिका दृष्ट्वा मुग्धः सखाय बोधयति जे तीअ इति । ये तस्यास्तीक्ष्णचलच्चक्षुस्त्रिभागदृष्टाः, ते कामचद्रमधुपञ्चममारणीयाः, येषु पुनः पतिता सकलापि दृष्टिः, वर्तन्ति ते तिलजलाजलिदानयोग्याः । ते मृता एव भवंतीत्याशयः ।

१४९. अथ चक्रपद, सभणिअ इति । चक्रपदनामधेय छन्दो भवति । फणिपतिना पिंगलेन एतद्भणित । तत्र चक्रपदे प्रथम चरणगण आदिगुरुचतुष्कलगणः प्रकाशितः । ततो द्विजवरगणयुगल चतुर्लघुगणद्वय सस्थाय, ततः करतलगणोन्तगुरुचतुष्कलगणः प्रतिपादशेषे ज्ञातः ।

१५०. यथा खंजण इत्यादि सुकर ।

१५१. अथ भ्रमरावली, वर पंच इति । भ्रमरावलीनाम छन्दः प्रसिद्धं । कीदृशं पञ्चकैरंतगुरुचतुष्कलगणपञ्चकैः प्रसिद्ध ख्यात प्रसिद्ध प्रभणति पिङ्गलः । किं भूतं मनोहर सुन्दर । छन्दोवर छन्दःश्रेष्ठ । रत्नं रत्नवत् । यत्र पञ्च गुरवो दश लघवो भवन्ति । एतादृशमेव योजितं ।

१५२. यथा तुअ देउ इति । तव देवदुरितगणहरणौ चरणौ यदि प्राप्नोति । चन्द्रकलाभरणौ शरणौ । चन्द्रकलाभरणौ इत्येतेन चरणस्य नखाः चन्द्रकलावत् वर्णिताः । एतादृशौ चरणौ परिपूजयामि लोभेन । तेन पुण्येन परित्यजामि शोकविनाशमनस्क शमन ।

१५३. अथ सारगिका, कण्णा इति । सारगिकाछन्दो ज्ञायते, भोगीराजः पिङ्गलो

जल्पति। यत्र सप्त कर्णा द्विगुरवो गणा दत्तास्तदते शेषे एको हारो गुरुर्दत्तः। पंचदश हारा गुरवो यत्र पदे त्रिंशन्मात्रा भवन्ति। एतच्छन्दश्चतुष्टयेन कृतेन कृत्वा कीर्तिर्गृह्यते। यः शृणोति स शिरःकपं करोति।

१५४. यथा उम्मत्ता जोहा इत्यादि सुकर।

१५५. अथ चामरः, चामरस्स इति। चामरस्य छन्दसस्त्रयाधिकविंशति मात्रा भवंति तासु अष्ट हारा गुरवोऽन्तरातरा भवति। सप्त सारा लघवो निर्मलाः। अत्र चादौ अते च गुरुः सारः ज्ञातः। हे कामिनि पचदशाधिकैर्वर्णैरेतच्छंदो भवतीति पिंगलेन भण्यते।

१५६. यथा झत्ति जोह इत्यादि सुकर।

१५७. अथ निशिपालः, हार करु इति। सर्पपिंगलो निशिपाल भणति काव्यमनाः, अत्र हारो गुरुः क्रियते। ततस्त्रयः शरा लघवः एवं प्रकारेण गणत्रयं कुरु, अते शोण न कुरु। एव पचगुरवः द्विगुणास्तेषा लघवो दश सख्या भवंति। हे चद्रमुखि सखि अत्र विंशति सख्या लघूना जानीहि।

१५८. यथा जुज्झ भड इत्यादि सुकर।

१५९. अथ मनहंसः, जहि इति। मनोहंसनामकं छंदः प्रसिद्धं पिंगलेन व्याख्यात यत्रादौ हस्तो गणोन्तगुरुचतुष्कलगणो भवति। ततो द्वौ नरेंद्रौ जगणौ दीयेते। ततः एको गुरुः दीयते। ततः काहलद्वय लघुद्वय क्रियते ततो गुरुं स्थापयित्वा गधो लघुर्दीयते, ततोन्ते गुरुः स्थाप्यते।

१६०. अथ जहि फुल्लु इति सुकर।

१६१. अथ मालिनी, पढम इति। मालिणीनाम छदो भण; किं भूतं रससहित षड्भिः कलाभिः इत्यर्थः। द्वितीयस्थाने निबद्धः ततः शरो लघुः। ततो गुरुद्वय ततो गन्धो लघुः। ततोन्ते कण्णो द्विगुरुर्गणो यत्र निबद्धः। सरवे सहिते इति नायिकासंबोधनं। कीदृशा चित्तपदे निबद्धा लिखितामित्यर्थः।

१६२. यथा वह इति। वहति मलयवातः हंत कपते कायः हति श्रवणरध्रं कोकिलालापबंधः, श्रूयते दशसु दिक्षु भृगझंकारभारः। हति हंति हजे चेटि चंडः प्रचण्डश्चाडालरूपो मारः।

१६३. अथ शरभः, भणिअ इति। फणिपतिना पिंगलेन शरभनामक छन्दो भणितं। यत्र सुप्रियगणो द्विलघुर्गणः प्रथम भणितः। ततो रसगणेन षट्कलसर्वलघुगणेन सहित ततो द्वौ करतलौ द्वौ चतुष्कलगणौ पदे लघोः प्रकारान्तरमप्याह चत्वारः चतुष्कलगणाः प्रतिपदं ज्ञाताः। हे सुप्रिये गणय जानीहि।

१६४. यथा तरल इत्यादि सुकर।

१६५. अथ नाराचः, णरेंद इति। नाराचनामकं प्रसिद्ध छदः पिंगलेन

लक्षित । यत्र नरेंद्रो जगणः सबलो मिलितः ततः सुपर्णचक्र मध्यलघुपचकलो गणो दृश्यते पुनरेवमेवं जगणः मध्यलघुपचकलो दृश्यते, पचमे स्थाने पदातिगणो मध्यगुरुचतुष्कलगणो भवति । अते हारो गुरुर्भवति । पदे चतुरधिकविंशति मात्रा भवति । अत्र हारश्चारु यथा स्यादेव सार उत्कृष्टः पतति ज्ञायते, अत्र गधा लघवोऽष्टौ बंधवो गुरवोऽष्टौ ।

१६६. यथा चलत जोह इत्यादि सुकर ।

१६७. अथ नीलः, णील इति । हे रमणि नीलस्वरूपक जानीहि । द्वाविंशतिभिर्मात्राभिः पच भगणाः पदे प्रकाशिता यत्र एतादृशेन लक्षणेन अन्ते हारो गुरुः स्थितः मात्राणा द्विपचाशदधिकशतत्रयमत्र भवति । एतेनैतदुक्तं छदश्चतुष्टयेनैतच्छदः कर्तव्य नैकमिति ।

१६८. यथा सज्जिअ जोह इत्यादि सुकर ।

१६९. अथ चञ्चला, दिज्जिअ इति । चचला फणीद्रेण पिंगलेन दुर्लभा निर्म्मिता कृता यत्र सुपर्णचक्र मध्यलघुपञ्चकलो गणो दीयते । ततः एकः पयोधरो जगणः । एव प्रकारेण रगणजगणकृतपञ्चगणा भवति सकलमनोहराः । अतो गधो लघुः दीयते । षोडशभिरक्षरैर्भवति ।

१७०. यथा कण्ण पत्थ इत्यादि सुकरं ।

१७१. अथ ब्रह्मरूपक, जो लोआण इति । यच्छंदोज्ञाना वर्तते । हे बिंबोष्ठे, हसाकार सर्वगुरुत्वात् । गुरुरपि हसाकारो वक्रो भवति । सुष्ठु कृत्वा ज्ञात नाथमर्थान्छन्दसा यदुच्यते । कंदरूपेणोत्थापितं । कदनामक एतादृशमेव भवति । अष्टभिः कर्णगणैर्लक्षित । अष्टभिर्द्विगुरुगणैर्लक्षितमित्यर्थः । सारतर श्रेष्ठतरं छन्दसि, गीयते कातं सुंदर वृत्तं छन्दः सकललोकैः सम्मानित । ब्रह्मरूपकं नाम । अथ च यो लोकाना वर्ततेऽविद्विष्टोऽविरुद्धः । हे बिंबाधरे, हसे स्थितः सुज्ञो नाथः कंदं सृष्टिकारणकलापमुत्पादयन् अष्टभिः कर्णैर्लक्षितः सारतरः श्रेष्ठः । छन्दोवेद गायन् कातवृत्तः सुन्दरव्यापारः सर्वैः समानितः स ब्रह्मरूप प्रकाशयित्वा व्याख्याति ।

१७२. यथा उम्मत्ता जोहा उट्ठे कोहा इत्यादि सुगम ।

१७३. अथ पृथ्वी, पओहर इति । पृथ्वीनाम छन्दो ज्ञायते यत्र पयोधरः जगणः प्रथम स्थितः ततो हस्तश्चतुष्कलगणो दीयते । पुनरपि जगणातगुरुचतुष्कलः स्थापितः तत एको गधो लघुर्दीयते । ततो वलयद्वयं गुरुद्वयं पतति । ततो विमलविशिष्टः शब्द एको लघुः । ततो हारो गुरुः पतति । चतुरधिकविंशति कलाश्चात्र भवति ।

१७४. यथा झणज्झणिअ इति । झणझणायमानभूषणं रणरणत्काचिगुणं

सहासमुखमुखपंकज अगुरुधूपधूमोज्ज्वल ज्वलन्मणिदीपकं मदनकेलिक्रीडासरः निशामुखमनोहर युवत्या गृह राजते शोभते।

१७५. अथ मालाधरः, पढम इति। फणिसारः फणिश्रेष्ठो भणति मालाधरछन्दो जानीहि। यत्र प्रथम विप्रश्चतुर्लघुर्गणो दीयते ततो भूपतिर्जगणः स्थाप्यते। ततो यश्चरण आदिगुरुश्चतुष्कलगणः ततोपि भूपतिर्जगणः प्रदत्तः चामरद्वयाधिकं गुरुद्वयाधिकं यथा स्यादेव विमलो गंधो लघुस्ततो हारो गुरुः स्थाप्यते। उज्वलं छन्द इत्यर्थः।

१७६. यथा वहइ इत्यादि सुकर।

१७७. अथ शिखरिणी, धआ कण्णा इति। हे कमलमुखि एषा शिखरिणी नाम छंदः, यत्र आदौ ध्वजः, ततो द्वौ वर्णौ, ततः सुप्रिययुगल लघुद्वयात्मकं गणद्वयं, ततो गंधो लघुरेकः, ततो गुरुः पुनरपि हारः, ततश्चतुश्चरणे नारी इति त्रिलघोर्नाम अते च चामर गुरुः। सप्तदश वर्णाः नवैव लघवः अष्टौ फणिना गुरवः, फणिराजः पिंगलो जल्पति।

१७८ यथा पर जोण्हा उण्हा इत्यादि सुकरं।

१७९. अथ मुक्ताहारः, दिअविअ इति प्रथम विप्रः। ततः सुप्रियं लघुद्वयं ततो गुरुः, ततो गधो लघुः, ततः वर्णो द्विगुरुर्गणः, ततः लकारो लघुः स्थापितः ततः पुनश्च गुरुयुग ततो लघुः ततो गुरुयुगल शख लघुः ततो हार एकः। हे कमलमुखि मौक्तिकहार फणिपतिर्भणति हे प्रिये।

१८०. अथ अमिअ इत्यादि सुगम।

१८१. अथ मजीरा, कुतीपुत्ता इति। सर्पराजः पिंगलः शुभकायः शुद्धशरीरो ध्रुवामव्यभिचारिणीं मजीरा जल्पति। यत्र त्रयः कुतीपुत्रा द्विगुरुगणा एकस्मिन् पादे चरणे मस्तके प्रथमे स्थाप्यन्ते दीयते, ततो हारो गुरुः, ततो हस्तोंतगुरुश्चतुष्कल गणः, ततः ककणद्वय गुरुद्वय, ततो गधद्वय लघुद्वयं, चत्वारो हारा चत्वारो गुरवः पादा यत्र सज्जन्ते। कीदृशः पिंगलः भव्याकारः।

१८२. यथा गज्जे मेहा इत्यादि सुगम।

१८३. अथ क्रीडाचद्रः, जे इदासण इति। फणींद्रः पिंगलः क्रीडाचद्रनामक छदो भणति। निबद्ध निबद्धृभिः छदो ग्रथो यत्र। इद्रासण पचकलगणः परं पादे भवति नान्यो गणः। सुखयति सुख ददाति। तत्राष्टादशसख्यास्तरडा अक्षराणि स्थाने शोभते। यत्र कलाश्च दशत्रिगुणास्त्रिशत्सख्या भवति। एतेनैतदुक्त भवति। अष्टादशभिरक्षरैर्यत्र त्रिशन्मात्राः कार्या इति।

१८४. यथा जहा भूत वेताल इत्यादि सुगम।

१८५. अथ चर्चरी, आइ रगण इति । हे सुंदरि नागराजः चर्चरीं भणति । किं भूता मनोमोहनां या श्रुत्वा मनो मोहमायाति । यत्र आदौ रगणः । ततो हस्तोन्त-गुरुश्चतुष्कलगणः । ततो काहलो लघुः । ततो मध्ये ताल आदिगुरुस्त्रिकलगणं देहि । ततो षष्ठो लघुः हारो गुरुश्च स्थानद्वये पतति सर्वलोकविबुद्धा सकललोक ज्ञाता चर्चरीत्यर्थः । ततः काहलद्वय लघुद्वयं ततो गुरुः । ततः शंख लघु ततोपि कंकणं गुरुं पूरय ।

१८६. यथा पअ णेउर इत्यादि सुगम ।

१८७. अथ शार्दूलशाटकं, मो सो जो इति । पिंगलकविः शार्दूलशाटकं ज्ञातवान् । यत्र मो मगणः, सः सगणः, जो जगणः, ततः सगणः, ततस्तगण एव ततोंते गुरुर्भवति । अत्रैकोनविंशत्यक्षराणि भवति । तत्र पिंडः शरीर सवलश्लोकस्तत्र कला त्रिंशत्यधिकशतसंख्या भवति । तत्रापि भागमाह । योनिरष्टाशीतिः, योनिर्जन्मस्थान कलायाः स च गुरुरेव । अयमर्थः । गुरुसमवेता कला अष्टाशीतिः ८८, यत्र षट्सप्ततिर्वर्णाः । चत्वारः पादाः द्वात्रिंशत् रेखा एव गणवर्णमात्रा-लघूनि कथयित्वा परिशेषात् गुरुसंख्या कथयति । एकचत्वारिंशत् नाम संख्यकाश्च गुरवो भवंति । एतेन शार्दूल इति संख्यया त्रयो गुरवः ।

१८८. यथा जे लंका इति । ये लंकागिरिमेखलातः स्खलिताः सम्भोग-खिन्नोरगीफुल्लफणावलीकवलनेन दरिद्रत्व प्राप्ताः इदानीं मलयानिला विरहिणी-निश्वासपर्किणः जाताः शिशुत्वेपि झटिति बहलास्तारुण्यपूर्णा इव ।

१८९. तस्यैव लक्षणांतरमाह पत्थारे इति । शार्दूलशाटक जानीहि । यत्र प्रस्तारे उद्दवनिकाया त्रीणि चामराणि श्रेष्ठानि त्रयो गुरवो भवन्ति । वर्णनोज्ज्व-लानि दृश्यन्ते । तथा द्वौ लघू, ततश्चामर गुरुः, तथा पुनर्गन्धो लघुः, ततस्त्रयो गन्धा लघवः, तथा त्रीणि चामराणि त्रयो गुरवोपि, ततो गधो लघुः, ततो द्वे चामरे द्वौ गुरू शोभेते । ध्वजपट आदिलघुस्त्रिकलो गण इत्यर्थः ।

१९०. यथा ज धोअंजण इति । यद्धौताजनशोणं लोचनयुगल लग्नालकाग्रं मुख हस्ताकृष्टे केशपल्लवचये घूर्णन्ति यद्बिन्दवः, यदेक सिचयाचल विवसितं तन्मन्ये स्नानकेलिस्थिता आनीता योगेश्वरेणैषा अद्भुतैकजननी ।

१९१. अथ चद्रमाला, ठइवि इति । उरगकविः पिंगलो विमलमतिरु-ज्ज्वलमतिः चद्रमालां कथयति । यत्र द्विजवरयुगल स्थापयित्वा मध्ये करतल अंतगुरुचतुष्कलगण कुरु । ततोपि द्विजवरगणद्वय कुरु । मध्ये करतलगणात् मध्ये यो करतलोंतगुरुचतुष्कलरूपो भूतः तस्माच्चतुर्लघुगणद्वय कुर्वित्यर्थः । यत्र विमल सगणं श्रुत्वा मनश्चेतो गतिं स्थापयति नान्यत्र मनो यातीत्यर्थः ।

१९२. यथा अमिअ इत्यादि सुगम ।

१९३. अथ धवलांग:, कर इति । हे युवति विमलमते एतच्छंद: श्रुत्वा महीतले रस करोति कविरिति शेष: । किं कृत्वा पदपदतले सगण संस्थाप्य रमणोगिरे हे रमण सभोगस्तस्य गिरे । यत्र चत्वारो द्विजगणाश्चतुर्लघुगणा: पादचतुष्टयेऽपि इति धवलांगनाम छंद: फणिपतिर्भणति । कीदृश: सरसमना: शशिवदने हे इति संबोधन । पुन: कीदृश धवलैर्यतिभिर्लक्षित । अथवा सरिस इति पाठ: तथा धवलैर्यतिभि: सदृश समानमिति ।

१९४. यथा तरुणतरणि, इत्यादि सुगम ।

१९५ अथ शंभु:, अवलोआसु इति । इद छंद: शंभुनामक अवलोकय । यत् श्रुत्वा मनसि सुख भवति । अते चतुष्कलगण चतुष्टयानतर सुप्रिय द्विलघुगण स्थापय प्रथम हस्तमतलघुचतुष्कलगण देहि । तत: कुन्तीपुत्रो द्विगुरुर्गणो योजित: । एवमेवाग्रे पुनर्गणद्वय देहि । अते गुरुचतुष्कलगणादनतर द्विगुरुगण एव पुनर्दीयतामित्यर्थ: । सुप्रियगण इति प्रथममुक्त । तत: सप्त हारा सप्त गुरवो प्रदीयन्ता । एव पदे द्वात्रिंशन्मात्रा भवति ।

१९६. यथा सिअविट्ठी इत्यादि सुकर ।

१९७. अथ गीता, जहिं इति । हे मुग्धे एतच्छदो गीतानामक गीत । सकललोकै: परिगृहीत । कविसृष्टिसृष्ट यदा कवीना सृष्टि: कृता तदैव तदपि, कविजनानामिदमतिग्राह्यमित्यर्थ: । दिष्टया भाग्येन दृष्टं पिंगले व्याख्यात । यत्र छदसि आदौ हस्तोंतगुरुचतुष्कलगण: । पंचगणो यत्र जोहलो रगण: । तस्याते हस्तो गण: अंतगुरुचतुष्कलगण: । तत: शब्दो लघु: ततोंते शेषे नूपुर गुरु: ।

१९८. यथा जहिं फुल्लु केअइ इत्यादि सुकर ।

१९९. अथ गडक:, रगण इति । एवं गडकनाम छदो गणय । अतिसंकष्टमेतच्छंद: फणींद्रो गायति । यत्र छदसि प्रथम रगण: पतति । पुन: नरेंद्रो जगण: कात: सुदर: । एवमेव रगणजगणाभ्या गणषट्क कुरुत । तत एक हारं मंत्रयस्व । तत: शोभन: शब्दो अते देय: । एव सति त्रिंशन्मात्रा: पादे प्राप्ता भवति । एतासां मात्राणा तृतीयभागो हारो गुरु: । दश गुरवो दश लघव: भवंतीत्यर्थ: ।

२००. यथा ताव बुद्धि इत्यादि ।

२०१. अथ स्रग्धरा, कण्ण इति । स्रग्धरा फणिना पिंगलेन शुद्धा भणिता । यस्या द्वौ कर्णौ गुरुगणौ, ततो गधो लघु:, ततो हारो गुरु:, ततो द्विजगण:, ततो हस्त: अतगुरु: चतुष्कलगण:, ततो हारो गुरु:, तत एक: शल्यगणो लघु:, तत: कर्णो द्विगुरुर्गण:, ततो ध्वजगण आदि लघुस्त्रिकलगण:, तत: कंकणगणो

गुरुः, यत्रैकाधिकविंशति लघुगुरू भवतः। तत्र द्वादश गुरवः। पिंडः सकल-श्लोकः१थकलारूपो द्वात्रिंशदधिकशतसंख्यो भवति।

२०२. यथा ईसा इति। ईर्ष्यारोषप्रसादप्रणतिषु बहुशो स्वर्गगंगाजलैरामूलं पूरितया तुहिनकरकलारूपशुक्त्या रुद्रः ज्योत्स्नामुक्ताफलार्द्रे नतमौलिनिहिताग्र-हस्ताभ्यां अर्घ्यं शीघ्रं ददविव जयति गिरिसुतापादपंकेरुहयोः।

२०३. अथ नरेंद्रः, आइहि इति। एतन्नरेंद्रनामकं छंदः। यत्र आदौ पाद गण आदिगुरुचतुष्कलगणः प्रकाशः। अनतर जोहलो रगणः स्थाप्यते। काहल शब्दगधप्रभृतिक लघोर्नाम। ते च सप्त दातव्याः। ततः ककणो गुरुः। ततः शब्द एको लघुः, ततो नरपतिर्जगणः, ततः शखो लघुः, ततो गुरुद्वय। अथ च यदि नरेंद्रश्चलति तदा प्रथमं पदातयो यांति। ततः काहलशब्दो भवति। ततः सुगंधादिवस्तुसौरभो भवति। ततो मुनिगणा ब्राह्मणा याति। ततः कंकणाद्यलंकरणं विलोक्यते। एका भेरी शब्दायते। पूर्यते शंखः। ततश्चामरद्वयं प्रकाश्यते।

२०४. यथा फुल्लिअ केसु इत्यादि सुकरं।

२०५. अथ हसी, विज्जूमाला इति विद्युन्माला आदीयते। ततस्त्रयो द्विजगणा-श्चतुर्ल्लघुगणाः कीदृशाः बहुगुणयुक्ताः। अंते कर्णो द्विगुरुर्गणः। कीदृशः शुद्धवर्णः। भणति फणिः पिंगलः, कीदृशः फणिपतिः, कविवरः, पुनः कीदृशः, गुणयुक्तः। यत्र द्वात्रिंशन्मात्रा भवंति, कीदृशाः, पदपदप्रकटितगुरुलघुशोभाः। एतत् हसीनामं छंदः सकलबुधजनमनोहरशोभं।

२०६. यथा गोत्ताणंदा इत्यादि सुगमं।

२०७. अथ सुंदरी, जहि इति। एभिर्मात्राभिः पद्मावतीं पिंगलो भणति। एभि र्वर्णैः सुंदरीछंदो भवति। यत्र आदौ हस्तोन्तगुरुः चतुष्कलगणः, ततः करतलोऽन्त गुरुचतुष्कलगण एव, ततः पादगणः आदिगुरुचतुष्कलगणः, ततो लघुद्वयं। कर्णगणो द्विगुरुर्गणः। ततश्चामरं गुरुं स्थापय। ततः काहलद्वयं लघुद्वयं। ततो वक्रो गुरुः, ततः शल्यद्वयं लघुद्वय। पदाते शक्रगणो भण्यते। त्रयोविं-शतिवर्णैरस्य प्रमाणसिद्धिः।

२०८. यथा जहिह वेअ धरिज्जे इत्यादि सुगम।

२०९. अथ दुर्मिला, दुमिला इति। दुर्मिला प्रकाशय। वर्णान् विशेषय। फणींद्रेण पिंगलेन चारु यथा स्यादेवं गणा दृष्टाः। द्वात्रिंशन्मात्राभिर्भणिता यावत् अशेषं सम्पूर्णं ज्ञात्वा। अष्टसु स्थानेषु सगण स्थापय। अन्यो गणो न क्रियते। कीर्तिं ज्ञायते। अन्योन्यगणो यदा क्रियते तदा अनेकप्रकारेण दूषणं लगति। त्रयो यतयो भवति पदे दशसु अष्टसु ततश्चतुर्दशसु।

२१०. यथा बहु दिज्जिअ इत्यादि सुगमं।

२११. अथ किरीटः, ठावहु इति। किरीटनामकं छंदो विशेषय। यत्र आदौ शक्रगणः षट्कलगणः प्रथमं स्थाप्यते। ततः शल्यद्वय विसर्जय लघुद्वयं देहि। ततो नूपुरः गुरुः। ततः शब्दद्वयं लघुद्वयं कुरु। तथा नूपुरं गुरुः। एवमेव द्वादशगणान् कुरु, गुरुणा लघुद्वयेनेति अंते काहलयुगलं लघुद्वयं स्थापय। एवप्रकारेण चतुर्विंशति वर्णान् प्रकाशय। पदे पदे द्वात्रिंशन्मात्रा लेखय। अष्टौ भगणा भवंति।

२१२. यथा वप्पअ भत्ति इत्यादि सुगम।

२१३. अथ द्वितीय त्रिभंगी, सव पअहि इति। त्रिभंगीं भण, किं भूता शुभांगी सज्जनाः सामाजिकाः। यत्र सकलपदेषु प्रथम दशसु प्रियगणा भण्यते। ततः कातो हस्त आदिगुरुः चतुष्कलगणः, ततो गुरुद्वयं, ततो वलयरूपो गणो गुरुः, ततो द्विलघुर्गणः, ततो द्विगुरुः, हे गजगामिनि शशिमुखि करसयुक्ता मात्राद्वय-सयुक्ताश्चत्वारिंशन्मात्रा यत्र पदे भवति। गणयित्वा भण्यते। सकले छंदसि अष्टषष्ठ्यधिकशत मात्रा भवति।

२१४. यथा जअइ इत्यादि सुकर।

२१५ अथ सालूरः, कण्णेक्क इति। सालूरनामक छंदो भवति। प्रथम कर्णो द्विगुरुर्गणः एको दीयते। सरसपद ध्रुवमेतच्छंदः परिपतति। तत्र यदग्रे वक्ष्य-माणं तत्संस्थाप्य सुवर शोभनाना मध्ये वरं श्रेष्ठ, हे सुभणिते हे मनोहरे हे रजनी-प्रभुमुखि हे कमलनयने द्वात्रिंशन्मात्राः स्थापय। तस्याते निलये करतलगणं पदे देहि। मात्रावर्णसुललितं मध्ये पट्चतुष्कलगणान्सर्वलघुगणान् कुरु इति कवि-दिनकरः भुजंगपादः कथयति।

२१६. यथा जं फुल्लू इत्यादि सुकरं।

प्रक्षेपशंकानिराकरणाय उक्ताना छंदसा नामानि संगृह्य कथयति सिरिकाम इति। श्रीः १ कामः २ मधुः ३ मही ४ सारः ५ ताली ६ प्रिया ७ शशी ८ रमणः ९ इति जानीत, पंचालः १० मृगेंद्रः ११ मंदरः १२ कमलं १३ तीर्णा १४ धारी १५ नगाणी १६ संमोहा १७ हारीतबंधः १८ हंसः १९ यमकं २० शेषः २१ तिल्ला २२ द्वियोधा २३ ततः चौरंसा २४ मंथाना २५ शंख-नारी २६ एतत्पर्यंत छंदोमिलितेत्यर्थः, मालती २७ दमनकः २८ समानिका २९ सुवासः ३० करहंचः ३१, ततः शीर्षरूपकं ३२ विद्युन्माला ३३ प्रमाणिका ३४ मल्लिका ३५ तुगा ३६ कमला दृष्टा ३७ महालक्ष्मीः ३८ सारंगिका ३९ पाइत्ता ४० कमला ४१ बिंबा ४२ तोमर ४३ रूपमाला ४४ संयुक्ता ४५ चंपकमाला इति जानी-हि ४६ सरस्वती ४७ सुषमा ४८ अमृतगतिः ४९ बन्धुः ५० सुमुखी ५१ दोधकः ५२ शालिनी ५३ दमनकः ५४ सेनिका ५५ मालती ५६ तथा एका इंद्रवज्रा ५७ उपेंद्रवज्रा ५८ एतज्जानीहि। विधाधरः ५९ तथा भुजगप्रयात ६० लक्ष्मीधरः

६१ तोटकः ६२ सारंगः ६३ मौक्तिकदाम ६४ मोदकः ६५ तरलनयनी ६६ सुंदरी ६७ ततो माया ६८ तारकः ६९ कंदः ७० पंकावली ७१ वसंततिलकः ७२ चक्रं ७३ भ्रमरावली छंदः ७४ सारंगिका ७५ चामरः ७६ निशिपालः ७७ मनोहंसः ७८ मालिनी ७९ शरभः ८० नाराचः ८१ नीलः ८२ ततः चंचला ८३ जानीत ब्रह्मरूपकः ८४ पृथ्वी ८५ मालाधरः ८६ शिखरिणी ८७ मुक्ताहारः ८८ मंजीरा ८९ क्रीडाचंद्रः ९० चर्चरी ९१ शार्दूल ९२ जानीहि, चंद्रमाला ९३ धवलांगा ९४ शंभुः ९५ गीता ९६ गंडका ९७ स्रग्धरा ९८ नरेंद्रः ९९ हंसी १०० सुन्दरी १०१ दुर्मिला १०२ इति जानीहि; किरीटछंदः १०३ अच्चर त्रिभंगी १०४ सालूरः १०५ इत्येव पडधिकशतछंदांसि पिंगल इति नाम्ना प्रसिद्धः फणींद्रः कविराजो जल्पति ।

सन्मिश्रश्रीरविकरविरचितायां पिंगलसारविकाशिन्या वर्णवृत्तं नाम द्वितीयः परिच्छेदः समाप्तः ।

पिंगलसारविकाशिन्येषा केषां मनः सुधियां । न हरति रविकररचितातिरुचिरार्थसंभारैः ॥ १ ॥ आसीच्छ्रीशूलपाणि र्भुविविविधगुणग्रामविश्रामभूमिस्तत्पुत्रो भूमिदेवांबुजवन तरणिर्मिश्ररत्नाकरोऽभूत् । तस्मादासीमभूमीवलयसुविदितानंतकीर्तिप्रतानः पुत्रः साक्षात्पुरारिर्गुणगणसहितो दोहविः पंडितोऽभूत् ॥२॥ चण्डेशस्तस्य पुत्रो भवदतिमहितो मिश्रभीमेश्वरोऽभूत्तत्सूनुः सूरिसंसद्गणितगुणगणः सुप्रतिष्ठोऽतिनिष्ठः । ( जातस्तस्मात् ) पवित्रो हरिहर सुकवि (:) साधु साधारणं यद्वित्तं नित्योपकाराहितमतिरुचितः श्रीरविस्तत्सुतोऽस्ति ॥३॥ तेनोपकाराय सतां विधाय टीकामिमामल्पगुणेन संतः । सैषा मदीया सदनुग्रहेण प्रमाणनीयेति कृतिः प्रसाद्या ॥ ४ ॥ सागरसुताविलोकनसादरनयनाचलस्तरलः । मधुरसुधाकरसोदरसुदरवदनो हरिर्जयति ॥

# परिशिष्ट (२)

## श्रीलक्ष्मीनाथभट्ट विरचित "पिङ्गलप्रदीप" समाख्या व्याख्या

### प्रथमः परिच्छेदः

गोपीपीनपयोधरद्वयमिलच्चेलाञ्चलाकर्षण-
द्वेलिव्यापृतचारुचञ्चलकराम्भोजं व्रजत्कानने ।
द्राक्षामञ्जुलमाधुरीपरिणमद्वाग्विभ्रमं तन्मना-
गद्वैतं समुपास्महे यदुकुलालम्बं विचित्रं महः ॥

लम्बोदरमवलम्बे स्तम्बेरमवदनमेकदन्तवरम् ।
अम्बेक्षितमुखकमलं यं वेदो नापि तत्त्वतो वेद ॥

गङ्गाशीतपयोभयादिव मिलद्भालाक्षिकीलादिव
व्यालक्ष्वेलजफूत्कृतादिव सदा लक्ष्म्यापवादादिव ।
स्त्रीशापादिव कण्ठकालिमकुहूखानिव्ययोगादिव
श्रीकण्ठस्य कृशः करोतु कुशलं शीतद्युतिः श्रीमताम् ॥

विहितदया मन्देष्वपि दत्त्वानन्देन वाङ्मयं देहम् ।
शब्देऽर्थे सदेहव्ययाय वन्दे चिरं गिरं देवीम् ॥

भट्टश्रीरामचन्द्रः कविविबुधकुले लब्धदेहः श्रुतो यः
श्रीमान्नारायणाख्यः कविमुकुटमणिस्तत्तनूजोऽजनिष्ट ।
तत्पुत्रो रामभट्टः सकलकविकुलख्यातकीर्तिस्तदीयो
लक्ष्मीनाथस्तनूजो रचयति रुचिरं पिङ्गलार्थप्रदीपम् ॥

श्रीरामभट्टतनयो लक्ष्मीनाथः समुल्लसत्प्रतिभः ।
प्रायः पिङ्गलसूत्रे तनुते भाष्यं विशालमतिः ॥

जलौकसां तुल्यतमैः खलैः किं रम्येऽपि दोषग्रहणस्वभावैः ।
सतां परानन्दनमन्दिराणां चमत्कृतिं मत्कृतिरातनोतु ॥

यन्न सूर्येण सभिन्नं नापि रत्नेन भास्वता।
तत्पिङ्गलप्रदीपेन नाश्यतामान्तरं तमः॥

यद्यस्ति कौतुकं वश्छन्दःसन्दर्भविज्ञाने।
सन्तः पिङ्गलदीपं लक्ष्मीनाथेन दीपितं पठत॥

किंच मत्कृतिरियं चमत्कृतिं चेन्न चेतसि सतां विधास्यति।
भारती व्रजतु भारतीव्रया लज्जया परमसौ रसातलम्॥

१. ग्रन्थारम्भे ग्रन्थकृदभिमतसिद्धये छन्दःशास्त्राधिष्ठातृपिङ्गलनागानुस्मरणलक्षणं मङ्गलमाचरति—

गरुडवञ्चनारूपगुरुबुद्धिमाहात्म्येन विविमलमतिहेलं विः पक्षी गरुडस्तस्य विमला या मतिर्बुद्धिस्तस्या हेला अनादरो यस्मिन्कर्मणि एवं यथा स्यात्तथा स पिङ्गलः शेषनागो जयति। स कः। यो ज्ञातः। अर्थाद्गरुडेन। पिङ्गलनागोऽयं ब्राह्मणरूपस्तिष्ठतीति। कीदृशः। विविधमात्रारूपसागरपार प्राप्तः। यद्वा विविधमात्राभिः प्रस्तार कुर्वन् समुद्रपार प्राप्तः। पुनः कीदृशः। प्रथमं भाषाया अवहट्ट ( अपभ्रंश ) भाषायास्तरण्डस्तरणिरित्यर्थः। 'पादालिन्दी तरण्डो नौः' इति हारावली। संस्कृते त्वाद्यकविर्वाल्मीकिः। प्राकृते शालिवाहनः। भाषाकाव्ये पिङ्गलः। अतएव प्रथमपदोपादानम्। प्रसिद्ध चैतल्लोके कथानकम्—एकदा शेषनागो ममोपरि कियती भूमिरस्तीति पृथिव्या विस्तार जिज्ञासुः पिङ्गलनामा ब्राह्मणो भूत्वा भुवमवातरत्। अनन्तरं च गरुडः प्रसिद्धवैरत्वात्त जिघत्सुर्दूराद-धावत्। तदा पिङ्गलस्तमवादीत्—'अहं कविर्मम कौशल पश्य यदेकत्र लिखामि न तदन्यत्रेति। यद्येकाकारमङ्कं पश्यसि तदा मा खादिष्यसीति तेनानुमत एकाक्षरादिषड्विंशत्यक्षर ( पर्यन्तं ) प्रस्तारं कृत्वा समुद्रतीरपर्यन्तं गतवान् तं वञ्चयित्वा जलं प्रविवेश। अथ 'सायात्रिकः पिङ्गलःस्याच्छेषनागोऽपि पिङ्गलः' इति कोषमहिम्ना स पिङ्गलः पोतवणिग्जयति। स कः। यो विशिष्टमतिहेल यथा स्यात्तथा विविधया अनेकरूपमा मात्रा धनेन वाणिज्यं कर्तुं सागरपारं प्राप्तः। कीदृशः। प्रथममेव भासमानस्तरण्डो नौर्यस्य, भाभिः कान्तिभिरस्यते क्षिप्यते इति भासस्तादृशस्तरण्डस्तरिर्यस्येति वा। पुनः ज्ञातः। अर्थादन्यैः पोतवणिग्भिरित्यर्थः। गाथा छन्दः। तल्लक्षणं तु तत्प्रकरणे ज्ञातव्यमिति न लिख्यते॥

२. एवमाचरितमङ्गलः सम्प्रति गुरुलघुविवर्तं छन्दःशास्त्र मन्वानस्तद्व्यवस्था कुर्वन्नाह—

दीर्घाः—आ, ई, ऊ, ॠ, ए, ओ, अं। स्वरान्तस्य प्राकृते ओकारादेशस्तेन तद्ग्रहणम्। तथा सयुक्तः परो यस्य एवविधः पूर्वो वर्णः। प्राकृते एतावन्त एव। अत एवोक्तमभियुक्तैः—'एओअंमलपुरओ सआरपुट्ठेहिँ वेवि वण्णाओ। कच-

तवग्गे अन्ता दह वण्णा पाउवे ण हुअन्ति ॥' अस्यार्थः—ए ओ अं म ल इति पञ्च वर्णाना पुरतः ऐ औ अः य व इति पञ्चैव। सकारस्य पश्चाद्द्वावपि वर्णौ शषौ। कचतवर्गाणामन्त्यास्त्रयः ङञनाः। सभूय दश वर्णाः प्राकृते न भवन्ति। चरणान्ते पातितो वा गुरुरिति। एवविधो यो वर्णः स गुरुर्भवति। अत्र विकल्पार्थे चकारः। किंरूपो गुरुरित्यपेक्षायामुच्यते वक्रः अनृजुः। सोऽपि कतिमात्र इत्युच्यते—द्विमात्रो द्विकलः। उक्त च—'गुरुस्तु द्विकलो ज्ञेयो नागदन्तसमाकृतिः' इति। अन्यो द्वितीयो लघुर्भवति। कीदृशः। शुद्धोऽवक्रः। एककल एकमात्रः। उक्तं च—'लघुस्तदन्यः शुद्धोऽसावेकमात्रः प्रकीर्त्तित.' इति। ताभ्यामेव गणापन्नाभ्या प्रयोजनमिति। गाथा छन्दः ॥

३. तानुदाहरणेन दृढीकर्तुमाह—

पार्वत्या शभौ वृते विजयादीनामन्योन्यं संलापः। मातरयं वरो रूपेण हेयस्त्रिनेत्रत्वात्। हीनो जात्यादिना अलक्ष्यजन्मत्वात्। जीर्णश्च रोगादिना कण्ठस्थितविषत्वात्। वृद्धो वयसा। यद्वा अवृद्धोऽसमृद्ध इत्यर्थः। दिगम्बरत्वात्। देवः दीव्यति क्रीडतीति देवः पाच्चि (शि) कः। श्मशानवासक्रीडासक्त एतादृशः। तमपि शभुं कामयमानाभिलषमाणा गौरी अहो ग्रहिलत्वमपि (ति) निर्बन्ध करोतीत्युपहासः। अत्र माईत्यादि दीर्घोदाहरणम्। हिण्णो जिण्णो इति सयुक्तपरोदाहरणम्। सभु (इति) सानुस्वारोदाहरणम्। कुणइ इत्यत्र पादान्तलघोर्गुरुत्वोदाहरणमिति। गाथा छन्दः ॥

४. एव लक्षणेन गुरुलघूनुपलक्ष्य कुत्रचित्तयोरपवादमाह—

कुत्रचित्स्थले सयुक्तः परो यस्य एवंविधः पूर्वो वर्णो लघुरेव भवति दर्शनेन लक्ष्यानुरोधेन यथा। उदाह्रियत इति शेषः। युवतीनेत्रप्रान्ते संपन्नं चित्तधैर्यं परिस्खलति। अत्र ह्र इत्यस्य संयुक्तपरस्यापेक्षया पूर्वस्य रिकारस्य गुरोर्लघुत्वम्। तथात्वे छन्दोभगप्रसगः। गाथा छन्दः ॥

५. अपवादान्तरमाह—

इकारहिकारौ बिन्दुयुतौ तथा एकारौकारौ च शुद्धौ एकलौ वर्णमिलितौ च तथैव रेफहकारावपि व्यञ्जनेन सह संयुक्ता अपि सर्वे गुरवोऽपि विकल्पेन क्वचिल्लघवो भवन्तीत्यर्थः। सिंहिणी छन्दः ॥

६. एतदेवोदाहरणेन दृढीकरोति जहा—यथा—

मानिनि, मानेन किं फल प्रयोजनं अयं यदि कान्तश्चरणयोः पतितः। तदा त्यजैन निष्फल मानमित्यर्थः। यदि स्वभावादेव भुजंगमः कामुको नमति स्त्रीभिः प्रियवशीकरणाय मणिमन्त्रौ किं क्रियेते। न किमपीत्यर्थः। अर्थान्तरे च भुजंगमः सर्पो यदि स्वभावेनैव नमति शान्तो भवति तदा गारुडोद्गारिमणिमन्त्रौ

किं क्रियेते। अपि तु न किमपि। प्राकृते तु हिं काइं इत्यत्र इकारहिकारौ बिन्दुयुतावपि लघूभवतः। केवलौ एकारौकारौ लघू। जे इत्यत्र जवर्णमिलित एकारोऽपि लघुः। एओ यदीत्यर्थे॥

७. रहवञ्जणस्स जहा—'रेफहकारव्यञ्जनयुक्तस्य यथा'—

हे चेतः, त्वं स्वभावादेव चञ्चलमसि इदानीं तु सुन्दरीरूपे ह्रदे पतत् (वलत्) पदमपि नान्यत्र ददासि। अतस्तव सहजमपि चाञ्चल्यं गतमिति भावः। किं च रे अधम उल्लसत्पुनस्तत्रैव क्रीडसि। नापयासि तत इति भावः। कस्याचिदप्राप्यायामासक्तस्य कस्यचिद्वचनम्। अत्र ह्रसंयोगपूर्वस्य रि इत्यस्य लघुत्वम्। तथा ह्रसयोगपूर्वस्य उकारस्य लघुत्वम्। गुरुत्वे छन्दोभङ्गः। दोहा छन्दः॥

८. पुनरपि विकल्पान्तरमाह—

यदि दीर्घमपि गुरुमपि वर्णं लघु कृत्वा जिह्वा पठति तदा तं वर्णं लघुं जानीत। किं च वर्णौ त्वरितपठितौ वर्णा वा त्वरितपठिता द्वौ वा त्रयो वा एक एव वर्ण इति जानीत। गाथा छन्दः॥

९. उदाहरणमाह। जहा—

अत्र अरे रे इति सम्बोधनद्वयं त्वरया प्रयुज्यते। वाहय कृष्ण नावं सूक्ष्माम्। डगमगेत्यनुकरणम्। चञ्चलायामेतस्या नावि जलभरणेन कुगतिं मा देहि। त्वमेवैतस्यां नद्यां यमुनायां सतारं पारगमनं दत्त्वा आतरत्वेन यदपेक्षसे तदेव गृहाण। मनोऽभिलषितमालिङ्गनचुम्बनादिसुखसंकोच गृहीत्वा पारं दर्शयेति भीतवल्लवीवचनम्। अत्र त्वरितपठने वर्णानामेकत्वम्। तथात्वे छन्दोभङ्गः। दोहा छन्दः॥

१०. छन्दोग्रन्थस्योपादेयता दर्शयति—

अथमर्थः—यथोभयपार्श्वसमायाः कनकतुलायास्तिलार्धदानेनापि वैषम्यं भवति तादृशमपि भारं न सहते तथैव श्रवणतुलापि छन्दोभङ्गेनापच्छदस्कं कवित्वं न सहते। तादृशं काव्यं तस्या भारायत इत्यर्थः। अत्र जे ते इति जिह्वया लघूकृत्य गुरुत्वे छन्दोभङ्गः। गाहू छन्दः॥

११. न केवलं छन्दोभङ्गेन श्रवणदुःखमपरमप्यनिष्टं भवतीत्याह—

बुधानामधीतच्छन्दःशास्त्राणां मध्ये लक्षणविहीनं काव्यं यः पठति सोऽबुधः। मूर्ख इत्यर्थः। किं च भुजाग्रलग्नखड्गेन खण्डितमपि स्वशीर्षं न जानाति। भुजाग्रमंगुलीयमेव गमयेत्तेनोदस्तहस्ताङ्गुल्येदमशुद्धं कवित्वमिति यदुद्‍घाकरणं तदेव खड्गायत इत्यर्थः। तेन शीर्षं कवित्व (त्व) रूपं खण्डितमिति न जानाति। यद्वा भुजाग्रलग्ना ये खड्गा इव नखाः। एतेन 'छन्दोभङ्गे नखो देयः' इति प्राञ्चाः। गाथा छन्दः॥

१२. अथ गुरुलघुज्ञानानन्तरं गणाः सावसरास्तत्र च्छन्दःशास्त्रे मात्राप्रस्तारो वर्णप्रस्तारश्चेति प्रस्तारद्वयं तत्र मात्राप्रस्तारे कलागणनापुरःसरं गणव्यवस्था कुर्वन्नाह—

अयमर्थः—टठडढणाः पञ्चाक्षराणि षट्पञ्चचतुस्त्रिद्विकलानां यथासंख्यं संज्ञा भवन्तीत्यर्थः । गाथा छन्दः ॥

१३. अथ तेषां ससंख्यं भेदमाह—

टगणः षट्कलस्त्रयोदशभेदः । ठगणः पञ्चकलोऽष्टभेदः । डगणश्चतुष्कलः पञ्चभेदः । ढगणस्त्रिकलस्त्रिभेदः । णगणो द्विकलो द्विभेदः । गाथा छन्दः ॥

१४. मात्राप्रस्तारप्रकारमाह—

आत्मबुद्ध्या । अल्पबुद्धयः शिष्या वा । सदृशी सदृशी पंक्तिः । कर्तव्येति शेषः । उर्वरिते गुरुं लघु च दत्थ । आदौ सर्वे गुरवो लेख्याः । गुर्वधःस्थित-कलातः प्राग् लघुना कलापूरणं चेद्भवति तदा लघुरेव देयः । नो चेद्गुरु दत्त्वा अपेक्षितश्चेत्तदा लघुर्देयो यावत्कलापूरणम् । वाणीभूषणेऽप्युक्तम्—'प्रथमगुरोरधरे लघु दत्त्वा शेषं समानमितरेण । उद्वृत्ते गुरु लघु वा प्रस्तारः सर्वलघु यावत् ॥' अभियुक्तैरप्युक्तम्—'गुरोरधस्तादाद्यस्य लघुं न्यस्योर्ध्ववत्पुनः । पश्चादूने गुरुं न्यस्येल्लघुं वापेक्षितं क्रमात् ॥ यावत्सर्वलघुस्तावन्मात्राप्रस्तारके बुधः ।' वर्णवृत्ते तूद्वृत्तस्थले गुरुरेव देय इति नियमः । तदुक्तं वृत्तरत्नाकरे—'पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् । प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥' इति । गाथा छन्दः ॥

१५. अथ षट्कलप्रस्तारे त्रयोदशगणानां नामान्याह—

हरः SSS, शशी ||SS, सूरः |S|S, शक्रः S||S, शेषः ||||S, अहिः |SS|, कमलम् S|S|, ब्रह्मा |||S|, कलिः SS||, चन्द्रः ||S||, ध्रुवः |S|||, धर्मः S||||, शालिकरः ||||||, इति त्रयोदशभेदाः षण्मात्राणां टगणस्येति । एषां पर्यायेणापि गणो बोद्धव्यः । लक्ष्ये तथैव दर्शनात् । गाथा छन्दः ॥

१६. अथ पञ्चकलप्रस्तारेऽष्टगणानां नामान्याह—

इन्द्रासनम् पश्चात्सूरः चापः, हीरः चकारः पादपूरणे । शेखरः कुसुमम्, अहिगणः पापगणः लक्ष्ये तथैव दर्शनात् । 'अहिगण पापगणो ध्रुवं' इति वा पाठः । तत्र ध्रुवं निश्चितम् । एवं पञ्चकलोऽष्टविधष्ठगणस्य भेदः कथितः । प्रस्तारो यथा—|SS, S|S, |||S, SS|, ||S|, |S||, S|||, |||||, अत्र पञ्चकलप्रस्तारे आदौ लघु दत्त्वा प्रस्तारो विधेयः । एवमन्यविषयेष्वपि बोद्धव्यम् । अतएव 'लघुकालम्बेन' इति पश्चाद्वक्ष्यति । गाथा छन्दः ॥

१७. अथ चतुष्कलप्रस्तारे पञ्चगणाना नामान्याह—

म्मीति पादपूरणे। इति डगणभेदाः पञ्च। चतुष्कलप्रस्तारो यथा—SS, ||S, |S|, S||, ||||, गाथा छन्दः ॥

१८. अथ त्रिकलप्रस्तारे गणत्रितयानां ( यस्य ) नामान्याह—

लघुकालम्बेन लघ्वादित्रिकस्य नामानि जानीत। गाथा छन्दः ॥

१९. आनन्दश्छन्दसा सह। छन्द इत्यपि नामेत्यर्थः। ससमुद्रं समुद्रसहितं तूर्यपर्यायेणापि। गुर्वादित्रिकलस्यैतानि नामानि जानीत। गाहू छन्दः ॥

२०. भावस्य यन्नाम रसस्य ताण्डवस्य नारीणां भामिनीनां च यानि नामानि तानि सर्वाणि त्रिलघुगणस्य कुरुतेति कविवरः पिङ्गलः कथयतीति। ढगणस्य प्रस्तारो यथा—|S, S|, ||| गाहू छन्दः ॥

२१. अथ द्विकलप्रस्तारे गणद्वयनामान्याह—

एतेषां पर्यायशब्देनापि गुरोर्नाम जानीहि। गाथा छन्दः ॥

२२. समासतः सङ्क्षेपतः कविना पिङ्गलेन दृष्टं नामेति शेषः। णगणस्य प्रस्तारो यथा—S, ||,

२३. अथ लक्ष्यानुसारीणि क्रमतश्चतुष्कलानां नामान्तराण्याह—

कर्णसमानेन नाम्ना सह रसिको रसलग्नश्चेति। कर्णसमानेन कुन्तीपुत्रादिपर्यायग्रहणम्। लहलहितानामुत्पन्नप्रायाणां नाम्नाम्। गुरुयुगनामानि सुवर्णेन सह ज्ञेयानीत्यर्थः ॥

२४. अथान्तगुरोश्चतुष्कलस्य नामान्याह—

नानाभुजाभरणं केयूरादि। भवन्ति सुप्रसिद्धानि नामानि गुर्वन्तस्येति। गाथा छन्दः ॥

२५. अथ मध्यगुरोर्नामान्याह—

भूपतिः। अश्वपतिः। नरपतिः। गजपतिः। वसुधाधिपः। रज्जुः। गोपालः। उद्गतनायकः। चक्रवर्ती। पयोधरः। स्तनः। नरेन्द्रः। इति नामानि मध्यगुरोश्चतुष्कलस्य। गाहू छन्दः ॥

२६. अथादिगुरोर्नामान्याह—

पदम्। पादः। चरणयुगलम्। अवरु अन्यदित्यर्थः। गण्डः। बलभद्रः। तातः। पितामहः। दहनः। नूपुरम्। रतिः। जघायुगलेन सह इति नामानि पिङ्गलः प्रकाशयतीति योज्यम्। गाथा छन्दः ॥

२७. अथ चतुर्लघोर्नामान्याह—

प्रथमं नामेति स ऋषिः। विप्रः। द्वितीयं प्राकृते पूर्वनिपातानियमात्पञ्चशर इति। एकदेशग्रहणाच्छर इत्यपि। लक्ष्येषु तथा दर्शनात्। जातिः शिखरेण

सह । द्विजवरः । परमः । उपायः । चतुष्कलेन लघुकेन एतानि नामानीत्यर्थः । गाथा छन्दः ॥

२८. अथ पञ्चकलानां कानिचिदुभयवृत्तसाधारणानि नामान्याह—

सुनरेन्द्रः । अहिकः । कुञ्जरः । गजवरः । दन्तः । दन्ती । अथेत्यानन्तर्ये । मेघः । ऐरावतः । तारापतिः । गगनम् । झम्पः । तथा लम्पः । इति पञ्चमात्रस्यादिलघोर्नामानि । गाथा छन्दः ॥

२९. अथ मध्यलघोः पञ्चमात्रस्य नामान्याह—

पक्षी । विराट् । मृगेन्द्रः । वीणा । अहिः । यक्षः । अमृतकम् । जोहलम् । सुपर्णः । पन्नगाशनः । गरुड़ः । मध्यलघुके पञ्चकले रगणापरनाम्नि इति नामानि विजानीत । ण इति नन्वर्थे । उग्गाहा छन्दः ॥

३०. अथ पञ्चकलस्यैव सामान्यनामान्याह—

बहुविविधप्रहरणैरपि तन्नामभिस्तत्पर्यायैरपि पञ्चकलको गणो भवति ।

पुनश्चतुष्कलस्यैवसाधारणां संज्ञामाह—

गजः । रथः । तुरगः । पदातिः । एतन्नाम्ना पर्यायेणापि जानीहि चतुर्मात्रम् । विग्गाहा छन्दः ॥

३१. अथ सामान्यतो गुरुनामान्याह—

ताटङ्कः । हारः । नूपुरम् । केयूरम् । इति गुरुभेदाः । नामभेदाः इत्यर्थः ।

तथैव लघुनामान्याह—

शरः । मेरुदण्डः । काहला । लघुभेदाः भवन्ति । गाहू छन्दः ॥

३२. अपि च—

शंखः । पुष्पम् । काहलम् । रवः । अशेषैरेतैः सह कनकलतापि । कनकं लता चेति नामद्वय वा । रूपम् । नानाकुसुमम् । रसः । गन्धः । शब्दश्चेति लघोः प्रमाणं निश्चयेन नामानि भवन्ति । गाहा छन्दः ॥

३३. अथ वर्णवृत्ताना गणानाह—

मो मगणस्त्रिगुरुस्त्रयोऽपि वर्णा गुरवो यत्र । नो नगणस्त्रिलघु । लघुरादौ यस्य स यगणः । गुरुरादौ यस्यासौ भगणः । मध्ये गुरुर्यस्यासौ जगणः । मध्ये लघुर्यस्यासौ रो रगणः । सगणः पुनरन्ते गुरुर्यस्य । तगणोऽप्यन्ते लघुर्यस्य । अवहट्टभाषाया लिङ्गविभक्तिवचनरचनमतन्त्रम् । ण इति नन्वर्थे । यद्वा अंत्यलघुकेन तगणो भवतीत्यर्थः । एवमष्टौ गणाः । क्रमोऽत्राविवक्षितः । क्रमस्तु वृत्तरत्नाकरे—'सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ । ग्मध्याधौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः' ॥ एतैरेव गणैः समस्तवैखरीसृष्टि-

र्व्याता। तदुक्तं छन्दोरत्नाकरे—'म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः। समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥' उग्गाहा छन्दः।

३४. अथ कवित्वकरणान्तर कविनायकयोः कचित्पीड़ा कचिच्च समृद्धिर्दृश्यते तथा तुष्ट्यतुष्टी तत्र देवतातुष्ट्यतुष्टी हेतू इति गणदेवता आह—

मगणस्य पृथिवी। यगणस्य जलम्। रगणस्य शिखी। सगणस्य पवनः। तगणस्य गगनम्। जगणस्य सूरः। भगणस्य चन्द्रः। नगणस्य नागः। एवं गणाष्टकस्येष्टदेवता यथासंख्यं पिङ्गलेन कथिताः। अत्र यस्य कवित्वस्यादौ यो गणस्तिष्ठति तस्यैव गुणदोषौ ग्राह्याविति। भूषणेऽप्युक्तम्।—'मही जलानलानिलाः स्वर्र्यमेन्दुपन्नगाः। फणीश्वरेण कीर्त्तिता गणाष्टकेष्टदेवताः ॥'

३५. अथ गणानां मित्रामित्रादिकमाह—

मगणो नगणश्च द्वौ मित्रे भवतः। भगणयगणौ भृत्ये भवतः। जगणतगणौ द्वावप्युदासीनौ भवतः। अवशिष्टौ सगणरगणौ नित्यमरीभवतः। भूषणेऽपि—'मैत्र्यं मगणनगणयोर्यगणभगणयोश्च भृत्यता भवति। औदास्यं जतगणयोररिभावः सगणरगणयोरुदितः ॥' इति। इयं च गणमित्रामित्रव्यवस्था कविनायकयोरिति बोद्धव्यम्। दोहा छ्दः।

३६. अथ तेषां फलान्याह—

कवित्वस्य ग्रन्थस्यादौ वा मगणे पतिते ऋद्धिः स्थिरं च कार्यं भवति। यगणश्चेत्पतति सुख सम्पदं च ददाति। रगणे पतिते मरण भवति। सगणः सहवासान्निजदेशाद्विवासयति। तगणः शून्य फलं कथयति। जगणः खरकिरणान्विशेषयति संतापकरो भवति। भगणः कथयति मङ्गलान्येव। तत्र प्रामाण्यं सूचयति—सुकविः पिङ्गलः परिभाषते। तदुक्तम्—'मो भूमिः श्रियमातनोति यजलं वृद्धि रवह्निर्मृतिं सो वायुः परदेशदूरगमनं तव्योम शून्यं फलम्। जः सूर्यो रुजमादधाति विपुलां भेन्दुर्यशो निर्मलं नो नागश्च सुखप्रदः फलमिद प्राहुर्गणाना बुधाः ॥' यावत्काव्यं गाथा दोहा वा तत्र प्रथमाक्षरे आदौ नगणश्चेद्भवति तदा तस्य कवेर्नायकस्य वा ऋद्धिर्बुद्धिः सर्वमपि स्फुरति। दुस्तर रण राजकुलं च तारयतीति। सुणहु निश्चितं जानीत। भूषणेऽपि—'मः सम्पदं वितनुते नगणो यशांसि श्रेयः करोति भगणो यगणो जय च। देशाद्विवासयति सो रगणो निहन्ति राष्ट्रं विनाशयति जस्तगणोऽर्थहन्ता ॥' फलविशेषभेदस्त्वभियुक्तैरुक्तः—'वर्ण्यते नायको यत्र फलं तद्गतमादिशेत्। अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम् ॥ देवता वर्ण्यते यत्र काव्ये कापि कवीश्वरैः। मित्रामित्रविचारो वा न तत्र फलकल्पना ॥' इति। किंच 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च ॥' इत्युक्तत्वाच्च। षट्पदच्छन्दः ॥

३७-३८. गणद्वयसंयोगेऽपि फलविशेष इति सूचयितुं गणद्वयविचारमाह—

ग्रन्थादौ कवित्वस्य वादौ मित्रमित्रे मगणनगणौ। विपरीतौ वेति सर्वत्र बोध्यम्। ऋद्धिबुद्धी अथ च मङ्गलमपि दत्तः। मित्रभृत्यौ मगणभगणौ नगणयगणौ वा स्थिरकार्यं युद्धे निर्भयं यथा स्यात्तथा जय च कुरुतः। मित्रोदासीनयोर्मगणजगणयोर्नगणतगणयोर्वा कार्यबन्धः स्थैर्यं नास्ति पुनः पुनः क्षीयते। मित्र शत्रुश्च यदि भवतः मगणरगणौ नगणसगणौ वा तदा गोत्रजा बान्धवाश्च पीड्यते। अरु इत्यानन्तर्ये। भृत्यमित्रयोर्यगणमगणयोर्भगणनगणयोर्वा सर्वं कार्यं भवति। भृत्यभृत्ययोर्यगणभगणयोरायतिरुत्तरकालो वर्धते। भृत्योदासीनयोर्यगणजगणयोर्भगणतगणयोर्वा सर्व-धन नश्यति। भृत्यवैरिणोर्यगणरगणयोर्भगणसगणयोर्वा आक्रन्दो हाहाकारो भवति। पततीत्यर्थः। उदासीनो मित्रं च जगणो भगणस्तगणो नगणो वा तदा कार्ये किंचिन्मन्द दर्शयति साधारण फलं भवति। उदासीनो यदि भृत्यो जगणो भगणस्तगणो यगणो तदा सर्वा आयतीश्चालयति। उदासीनोदासीनयोर्जगणतगणयोर्मन्दमशुभ वा शुभं वा किमपि फलं न दृश्यते। उदासीनो यदि शत्रुर्जगणो रगणस्तगणः सगणो वा तदा गोत्रमपि वैरी लक्ष्यते। यदि शत्रुरनन्तरं मित्र रगणो मगणः सगणो नगणो वा भवति तदा शून्यं फलं भवति। यदि शत्रुभृत्यौ रगणो यगणः सगणो भगणो वा तदा गृहिणी नश्यति। पुनः शत्रूदासीनयो रगणजगणयोः सगणतगणयोर्वा धन नश्यति। शत्रुस्तथा पुनः शत्रुर्यदि सगणस्तदा नायकः पतति। षट्पदयुग्मेन गणद्वयविचारः कथितः। भूषणेऽपि—'मित्रयोरुदिता सिद्धिर्जयः स्याद्भृत्यमित्रयोः। मित्रोदासीनयोर्न श्रीः स्यात्पीडा मित्रवैरिणोः॥ कार्यं स्यान्मित्रभृत्याभ्या भृत्याभ्या सर्वशासनम्। भृत्योदासीनयोर्हानिर्हाकारो भृत्यवैरिणोः॥ उदासीनवयस्याभ्या क्षेमसाधारण फलम्। स्यादुदासीनभृत्याभ्यामस्वायत्तश्च सर्वतः॥ उदास्ताभ्या फलाभावः परारात्योर्विरोधिता। शत्रुमित्रं फलं शून्य स्त्रीनाशः शत्रुभृत्ययोः॥ शत्रूदासीनयोर्हानिः शत्रुभ्यां नायकक्षयः॥' इति।

३९. अथानन्तर छान्दसपरीक्षार्थं कौतुकार्थं च मात्राणामुद्दिष्टमाह—

एतदुक्तं भवति—षट्कलप्रस्तारे एको गुरुर्द्वौ गुरू ( लघू ) एको गुरुरित्येवमाकारो गणः कुत्रास्तीति प्रश्ने कृते तदाकार गण लिखित्वा पूर्वयुगलेन सदृशः समानाङ्को देयः। आदिकलायां प्रथमाङ्को देयः। पूर्वयुगलाभावादुत्सर्गसिद्धो द्वितीयोऽङ्कस्तदधस्तदनन्तर पूर्वाङ्कद्वयमेकीकृत्य तत्सख्यकोऽङ्कोऽग्रे पूर्वयुगलसमानाङ्कस्त्रिपञ्चादिर्देयः। इति पूर्वयुगलक्रमार्थः। अत्र गुरोरुपर्यधश्चाङ्को देयः। द्विकलत्वात्। एतच्च गुरुशिरःपदाल्लभ्यते। एवं तेष्वङ्केषु शेषे चरमेऽङ्के त्रयोदशरूपे यावन्तो गुरुशिरःस्था अङ्कास्तावन्तो लोप्याः। ते च नव ते अवधिरूपे त्रयोदशाङ्के लोप्याः। उर्वरितमङ्क प्रकृते चतुरङ्क मिलित्वा चतुःस्थानेऽयं

गण इत्यानय। ते तत्परिपाट्या ध्रुवमुद्दिष्टं कथिताङ्कस्थानं जानीहीति। एवं च पञ्चकलप्रस्तारे द्वौ लघू एको गुरुरेको लघुश्चेत्येवंरूपो गणः कुत्र स्थानेऽस्तीति प्रश्ने पूर्वयुगलसमानाङ्कान्दत्त्वा शेषेऽष्टमेऽङ्के गुरुशिरोऽङ्कस्तृतीयोऽङ्को लोप्योऽवशिष्टः पञ्चमाङ्को भवति तस्मात्पञ्चमो गणस्तादृशो भवतीति वेदितव्यम्। उद्दिष्टस्य कथितस्य गणस्य स्थानमात्रानयनमुद्दिष्टम्। एवं च सर्वप्रस्तारे प्रथमे शेषे च गणे शङ्कैव नास्तीति द्वितीयस्थानादारभ्यान्त्यात्पूर्वस्थानेषु प्रश्न इति बोद्धव्यम्। भूषणेऽपि—'दत्त्वा पूर्वयुगाङ्कं गुरुशीर्षाङ्कं विलुप्य शेषाङ्के। अङ्कैरितोऽवशिष्टैः शिष्टैरुद्दिष्टमुद्दिष्टम्' ॥ पादाकुलकं छन्दः ॥

४०–४१. अथ मात्रादृष्टं पृष्टं रूपं नष्टं तच्च षट्कलप्रस्तारे प्रस्तारान्तरे वा अमुकस्थानानि कीदृश (?) इति प्रश्ने उत्तरमाह—

एवमुक्तं भवति—यत्कलप्रस्तारे प्रश्नस्ताः सर्वाः कलारूपा लघवः क्रियन्ताम्। यथा पूर्वसदृशा अङ्का एकद्वित्रिपञ्चाष्टत्रयोदशरूपा अङ्का दीयन्ताम्। शेषे पृष्टोऽङ्को लोपनीयः। ततश्चावशिष्टे शेषाङ्केऽपरान्विलुप्य लिखित्वा कथय। तत्र प्रकारमाह—यो योऽङ्कः शेषाङ्के लोपयितुं शक्यते स पुनः स्वाधःस्थितकलां परमात्रां चादाय गुरुर्जायते। षट्कलप्रस्तारे द्वितीयस्थाने कीदृशो गण इति प्रश्ने यथाङ्काः स्थापनीयः पूर्वयुगलसदृशा अङ्का देयाः। शेषाङ्के त्रयोदश। पृष्टाङ्कलोपे द्वितीयाङ्कलोपे सति एकादशावशिष्टा भवन्ति। तत्राव्यवहिताष्टलोपेऽष्टाधःस्थितत्रयोदशाधःस्थितकलाभ्यामेको गुरुर्भवति। अवशिष्टं त्रयम्। तत्र पञ्चलोपाशक्यत्वात्त्रिलोपे तृतीयचतुर्थाभ्यामपरो गुरुर्भवति। शेषाङ्कं नावशिष्यत इति प्रथमं लघुद्वयमेव। तथा चादौ लघुद्वयं पश्चाद्गुरुद्वयमेव तादृशो द्वितीयो भवतीत्यर्थः। वाणीभूषणेऽपि—'नष्टे कृत्वा कलाः सर्वाः पूर्वयुग्माङ्कयोजिताः। पृष्टाङ्कहीनशेषाङ्कं येन येनैव पूर्यते ॥ परां कलामुपादाय तत्र तत्र गुरुर्भवेत्। मात्राया नष्टमेतत्तु फणिराजेन भाषितम्' ॥इति॥

४२. अथ क्रमप्राप्तं वर्णोद्दिष्टमाह—

अयमर्थः—चतुरक्षरप्रस्तारे द्वौ गुरू एको लघुः एको गुरुरिति गणः कुत्रास्तीति प्रश्ने कृते पृष्टं गणं लिखित्वा प्रथमं प्रथमगुरोरुपरि प्रथमाङ्को देयः। ततो द्विगुणान्द्विगुणानङ्कान्देहि। द्वितीयगुरोरप्युपरि द्वितीयोऽङ्कः तृतीये लघौ चतुरङ्कः चतुर्थे गुरावष्टमाङ्को देय इति द्विगुणत्वम्। एवं प्रकारेणोद्दिष्टं गणं कुरु। ततो लघोरुपरि योऽङ्कस्तत्राधिकमेकमङ्कं दत्त्वा तेन सहैक्ये कृते योऽङ्को भवति तदङ्कसमाने स्थाने स गणोऽस्तीति। प्रकृते तु चतुर्थाङ्कोपरि एकमधिकं दत्त्वा पञ्चमोऽङ्कः कर्तव्यः तस्मात्पञ्चमस्थाने तादृशो गणोऽस्तीति ज्ञातव्यम्। भूषणेऽपि—

'उद्दिष्टे वर्णोपरि दत्त्वा द्विगुणक्रमेणाङ्कम्। एक लघुवर्णाङ्के दत्त्वोद्दिष्टं विजानीत ॥' गाथा छन्दः ॥

४३. अथ वर्णानां नष्टमाह—

अत्र भागो नाम नष्टाङ्कस्यार्धीकरणम्। यथा चतुरक्षरप्रस्तारे षष्ठो गणः किमाकार इति प्रश्ने षडङ्कभागं कृत्वा तदर्धं त्रय स्थाप्यम्। अयं च समानो भागः। तत एको लघुर्लेख्यः। अनन्तरं द्वयस्य भागं कृत्वा एक स्थाप्यम्। तदैको लघुर्लेख्यः। ततोऽप्यवशिष्टे विषमे एकं दत्वा एकस्य च भाग कृत्वा एकमेव स्थापनीयम्। तदैको गुरुर्लेख्यः। एव च प्रथमे लघुरनन्तरं गुरुस्ततो लघुरन्ते गुरुरेवमाकारश्चतुरक्षरप्रस्तारे षष्ठो गण इति वेदितव्यम्। तथा च वाणीभूषणे—'नष्टे तु कल्पयेद्भाग समभागे लघुर्भवेत्। दत्त्वैकं विषमे भागः कार्यस्तत्र गुरुर्भवेत् ॥' एव समे भागे लघुर्ज्ञातव्यः। विषमे एकं दत्त्वा पुनः पुनर्गुरुर्ज्ञातव्यः। अरिल्ला छन्दः ॥

४४. अथ वर्णमेरुमाह—

'सूचय मेरुं निःशङ्कम्' इति वा। अयमर्थः—एकाक्षरादि षड्विंशत्यक्षरपर्यन्तं स्वस्वप्रस्तारे कति सर्वगुरवः कत्येकादिगुरवः कति सर्वलघवः कति वा प्रस्तारसख्येति प्रश्ने कृते मेरुणा प्रत्युत्तरं देयम्। तत्रैकाक्षरादिक्रमेण षड्विंशत्यक्षरावधि कोष्ठकान्विरचय्य आदावन्ते च कोष्ठके प्रथमाङ्को देयः मध्यस्थकोष्ठके च तदीयशिरःकोष्ठद्वयाङ्कं शृङ्खलाबन्धन्यायेनैकीकृत्यापर शून्यकोष्ठकमेकीकृताङ्केन पूरयेत्। एवमन्यत्रापि पूरणीये कोष्ठके कोष्ठानामुपरिस्थितकोष्ठद्वयाङ्कमुक्तबन्धन्यायेन पूरण विधेयम्। एकाक्षरे कोष्ठद्वय द्व्यक्षरे कोष्ठत्रयमित्यादि प्रत्यक्षरमेकैकवृद्ध्या षड्विंशत्यक्षरपर्यन्त मेरुः कर्तव्यः। तत्रैकाक्षरप्रस्तारे आदावेकगुर्वात्मकस्तदन्ते चैकलघ्वात्मकः। द्व्यक्षरे तु सर्वगुरुरादौ मध्ये गुरुद्वयमन्ते च सर्वलघुरिति। त्र्यक्षरे चादौ सर्वगुरुः स्थानत्रये द्विगुरुः स्थानत्रये एकगुरुः अन्ते च सर्वलघुरिति। एव च सुधीभिश्चिन्तनीयम्। सर्वांगेण प्रस्तारसंख्यापि ज्ञायते। तथा च भूषणे—'कोष्ठमक्षरसख्यातमन्त्याद्योरेकचिह्नितम्। शीर्षकोष्ठद्वयाङ्केन शून्यं कोष्ठ प्रपूरयेत् ॥' दोहा छन्दः ॥

४५. अथास्य पताकामाह—

प्राकृते पूर्वनिपातानियमात्प्रथमं प्राप्ताङ्कः परित्यज्यताम्। एवमुक्तं भवति—पूर्वाङ्कैः परभरणं कुरु पूरयितव्यपंक्तेः प्रधानाङ्कस्य पश्चात्स्थिताः पूर्वाङ्काः। भरण पूरण लेखनकोष्ठदानम्। एकत्राधिकस्य प्राप्तौ सा पक्तिरेव तदङ्कभरणे त्यज्यताम्। प्रस्तारसख्याया पताका वा वर्धयितव्या। चतुर्वर्णप्रस्तारे एकद्विचतुरष्टाङ्का देयाः। अत्रैकाङ्कस्य पूर्वाङ्कासभवाद्द्वितीयाङ्कमारभ्य पक्तिः पूर्यते। तत्र पूर्वाङ्क एकाङ्क एव तस्य परे द्वितीयादयः। ते चाव्यवहितानतिक्रमेण पूर्यन्ते। तथा चैकेन द्वाभ्यां

मिलित्वा अङ्को द्वितीयाङ्काधः स्थाप्यः। तत एकेन चतुर्भिश्च पञ्चाङ्कस्त्र्यङ्काधः। तत एकेनाष्टभिश्च नवाङ्कः। ततः पक्तिपरित्यागः। प्रस्ताराधिक्यसंभवात्। एतेन चतुर्वर्णप्रस्तारे प्रथमं गुरुः। द्वित्रिपञ्चनवस्थानस्थानि त्रिगुरूणि ब्रूयात्। अस्य चतुरङ्कस्याधः पराङ्कमिलिता अङ्का देयाः। तत्र प्रथमः पूरित एवेति त्यज्यते। द्वाभ्यां चतुर्भिर्मिलित्वा षट् चतुरङ्कस्याधः। त्रिभिश्चतुर्भिः सप्त षडधः। पञ्चभिश्च-तुर्भिर्मिलित्वा (आगच्छन्) नवाङ्क आगत इति न स्थाप्यते। तत अग्रिमाङ्क-परित्यागः। अनन्तरं च द्वाभ्यामष्टभिर्मिलित्वा दश सप्ताधः। ततस्त्रिभिरष्टभिर्मि-लित्वा एकादश दशाधः। ततः पञ्चभिरष्टभिर्मिलित्वा त्रयोदश एकादशाधः। ततः पंक्तिपरित्यागः। मेरुसंख्यापरिमाणोक्तेः। ततोऽष्टाङ्काधस्ताच्चतुर्भिरष्टभिर्मिलित्वा द्वादश। तदधः षड्भिरष्टभिश्चतुर्दश। ततस्तदधः सप्तभिरष्टभिश्च पञ्चदश। ततः प्रस्ताराधिकाङ्कसंभवान्नाङ्कसंचारः। षोडशाङ्कस्त्वष्टांकाग्रे दीयते सर्वलघुज्ञानार्थ-मिति सप्रदायः। पताकाप्रयोजनं तु मेरौ। चतुर्वर्णप्रस्तारस्यैकं रूप सर्वगुरु। चत्वारि त्रिगुरूणि। षड् द्विगुरूणि। चत्वार्येकगुरूणि। एक सर्वलघ्वात्मकमस्ति। तत्र षोडशभेदभिन्ने चतुर्वर्णप्रस्तारे कतमस्थले सर्वगुर्वात्मकं कतमस्थाने च त्रिगु-र्वात्मकं कतमस्थाने च द्विगुर्वात्मकं कतमस्थाने चैकगुर्वात्मक कति वा प्रस्तार-सख्येतिप्रश्ने पताकयोत्तरं दातव्यम्। वाणीभूषणे तु—'अङ्कमुद्दिष्टवद्दत्त्वा शेषे पूर्व नपासयेत्। एकैकगुरु ज्ञेयं द्वय द्वाभ्यां त्रिभिस्त्रयम्॥ एषा वर्णपताका प्रकीर्त्तिता काहि राजस्य (?) एकैकमत्र भुक्त्वा ज्ञेया मात्रापताकापि॥' अरिल्ला छन्दः॥

४६-४७. अथ मात्रामेरुः—

अन्येषामत्र प्रवेश एव न। दुर्गमत्वादिति भावः। एवमुक्त भवति। प्रथमे कोष्ठद्वयम्। तथा द्वितीयेऽपि। तृतीये कोष्ठत्रयम्। तथा चतुर्थेऽपि। पञ्चमे चत्वारि। तथा षष्ठेऽपीत्यादि। एककलायाः प्रस्तारो नास्तीति कोष्ठद्वयात्मिकै-वादौ पंक्तिरिति। एव कोष्ठपंक्तिष्वधोधः क्रमेणाङ्कान् लिखेत्। सर्वत्र च शेषकोष्ठे प्रथमाङ्को देयः। तत्र कोष्ठद्वयमध्ये आदावुपरि कोष्ठे चैकस्वरूपोऽङ्को देयः। तस्योपरिस्थाङ्काभावादुत्सर्गसिद्ध एव प्रथमोऽङ्कः। अन्ते त्वेक एवाधः। द्वयमधो मिलतीतीयं प्रक्रिया। प्रथमकोष्ठद्वयस्य पूरितत्वाद्द्वितीयादारभ्य देयम्। यत्र द्वितीये द्वयम्। तृतीये पुनरेकम्। चतुर्थे त्रयम्। पञ्चमे पुनरेकम्। षष्ठे चत्वारि। सप्तमे पुनरेकम्। इति प्रक्रियया आद्येऽङ्का देयाः। मध्ये शून्यकोष्ठेष्वेषा प्रक्रिया। पूरणीयकोष्ठशिरःकोष्ठाङ्कपरकोष्ठस्थाङ्कौ द्वावप्येकीकृत्य मध्य कोष्ठेऽङ्को देयः। एव सर्वत्र यावदिच्छ कोष्ठकान्विरचय्य मात्रामेरुः कर्तव्यः। अत्रेदमनुसन्धेयम्—कति-समकले लघवः कति च गुरवः। कति विषमकले लघवः कति च गुरवः। कति

चा प्रस्तारसंख्येति प्रश्ने मेरुणा प्रत्युत्तरं देयम्। तत्र द्विकले समप्रस्तारे एकः सर्वगुरुः। द्वितीयो द्विकलात्मकः सर्वलघुरिति सङ्केतः। त्रिकले विषमे द्वावेककलौ एकगुरुकौ चान्ते सर्वलघुस्त्रिकल इति समकले। चतुष्कले चादौ द्विगुरुः स्थानत्रये चैकगुरुर्द्विकलश्चान्ते सर्वलघुरिति। एवमनेन प्रकारेण यावदिच्छं मात्रा मेरावभीष्टमात्राप्रस्तारेषु लघुगुरुप्रक्रिया ज्ञातव्या। अथवा समकलप्रस्तारे वामतः क्रमेण द्वौ चत्वारः षडष्टावनेन क्रमेण गुरुज्ञानम्, विषमे त्वेकत्रिपञ्चसप्तेत्यनेन क्रमेण लघुज्ञानमन्ते च सर्वत्र ( लघु ) सर्वलघुरिति। उभयत्राप्येको द्वौ त्रय इत्यनया सरण्या दक्षिणतो व्युत्क्रमेण भेदज्ञानम्। अत्र च वामभागे सर्वत्रैकैकाङ्कस्थले सर्वगुरुरिति शिवम्। वाणीभूषणेऽप्युक्तम्—'द्वयं द्वयं सम कोष्ठ कृत्वा तेष्वेकमर्पयेत् एवं द्व्येकत्र्येकचतुःक्रमेण प्रथमेष्वपि। शीर्षाङ्कात्तपराङ्काभ्यां शेषकोष्ठान्प्रपूरयेत्। मात्रामेरुरयं दुर्गः सर्वेषामतिदुर्गमः॥' दोहापादाकुलकच्छन्दसी॥

४८. अथ मात्रापताकामाह—

उद्दिष्टसदृशा अङ्काः स्थाप्याः। ते यथा—एकद्वित्रिपञ्चाष्टत्रयोदशाद्याः। ततो वामावर्तेन सर्वान्तिममङ्कं तत्पूर्वेणाङ्केन लोपयेदित्यर्थः। एकेनाङ्केनाग्रिमाङ्कलोपे कृते एकगुरुरूपमानय अन्तिमलोपे द्विगुरुरूपमानय त्रिभिरन्तिमाकलोपे द्विगुरुरूपमानयेत्यादि ज्ञेयम्। एतादृशीमेनां मात्रापताका पिङ्गलः शेषनागो गायति। अथ च य एना प्राप्नोति स परं जन पताकां बोधयतीत्यर्थः। तत्र षट्कलप्रस्तारे यथा उद्दिष्टसदृशा अङ्का एकद्वित्रिपञ्चाष्टत्रयोदश स्थाप्याः ततः सर्वापेक्षया परत्रयोदशाङ्कस्तत्पूर्वोऽष्टमाङ्कस्तेनाष्टमाङ्केन त्रयोदशाङ्कावयवे लुप्तेऽवशिष्टाः पञ्च। तस्य पञ्चमाङ्कस्य तत्पूर्वत्र विद्यमानत्वादष्टमाङ्कलोपात्परकलया गुरुभावाच्च पञ्चमाङ्कात्पङ्क्तिक्रमो विधेय इति तथा च पञ्चमस्थाने ।।।।ऽ एवमाकारं रूपमेकगुर्वस्तीति ज्ञान पताकाफलम्। एवमन्यत्रापि गुरुभावो ज्ञातव्यः। तथा पञ्चभिस्त्रयोदशाङ्के लुप्तेऽष्टाववशिष्यन्ते ते तु पञ्चाधो लेख्याः। तथा त्रिभिस्त्रयोदशलोपे दशावशिष्यन्ते तेऽष्टाधो लेख्याः। तथा द्वाभ्यां त्रयोदशलोपे द्वाववशिष्यन्ते। द्वयोर्विद्यमानत्वात्। परकलया गुरुरित्युक्तेश्च द्वितीयाकमारभ्य गुरुपंक्तिसचारः। ततो द्वाभ्यामष्टभिश्च तल्लोपे त्रयो द्व्यधः। तत एकाष्टभिस्तल्लोपे चत्वारि त्र्यधः। ततः पञ्च। त्रिभिस्तल्लोपादवशिष्टः पञ्चमाको वृत्त एवेति पञ्चभिर्द्वाभ्यां च तल्लोपे षट् चतुर्णामधः। पञ्चैकेन तल्लोपे सप्त। षडधो द्वित्रिलोपो वृत्त एवेति एकस्त्रिभिस्तल्लोपेन च सप्ताध इति द्विगुरुस्थानानि षट् मेरावुक्तत्वात्। तथा त्रिलोपे त्रिगुरुरूपमानयेति त्रिपञ्चाष्टलोपे भागो नास्ति। द्वित्रिपञ्चलोपोऽप्यष्टात्मको वृत्त एवेति पञ्चद्व्येकलोपोऽप्यष्टलोपात्मको वृत्त एवेति एकद्वित्रिलोपोऽपि वृत्त एवेति एकत्र्यष्टभि

मिलित्वा जातैर्द्वादशभिस्तल्लोपे कृते एकोऽवशिष्टः स आद्यस्थाने। सर्वगुर्वात्मकं वक्तव्यम्। षण्मात्रा पताका। एवमन्यत्रापि सप्ताष्टकलाना यथाक्रमं पताका ज्ञातव्येति दिक्। वाणीभूषणेऽपि वर्णपताकामुक्त्वा 'एकैकमत्र मुक्त्वा ज्ञेया मात्रापताकापि'। पादाकुलकं छन्दः ॥

४९. अथ समार्धसमविषमजातिपद्यवृत्तस्यगुरुलघुज्ञानप्रकार माह—

तथा च सर्वछन्दःसु कति गुरवः कति लघवः इति प्रश्ने कृते पृष्टं छन्द उद्भावितचतुष्पदमेव कलाः कृत्वा तासु कलासु छन्दोऽक्षरसंख्यां लभेत्। ततोऽवशिष्टाभिः कलाभिर्गुरुं जानीत। गुरुज्ञाने सति परिशेषाल्लघुं जानीयादित्यर्थः। दोहा छन्दः ॥

अथ वर्णमर्कटीं पादाकुलकच्छन्दश्चतुष्टयेनाह—

तत्रैकाक्षरादिषड्विंशत्यक्षरावधिवर्णप्रस्तारेषु कति वृत्तादयो भवन्ति इति प्रश्ने कृते वर्णमर्कटिकया प्रत्युत्तरं देयम्। तद्विरचनप्रकारो लिख्यते। छप्पन्ती षट्पंक्त्या मनोहराकारया प्रस्तारं कुरु। तत्रैकाक्षरादिषड्विंशत्यक्षरसख्यया कोष्ठक धारय विधेहीत्यर्थः। तत्र प्रथमपक्तौ वृत्तपक्तौ एकादिकान् षड्विंशतिपर्यन्तवर्णास्तत्संकेतरूपानङ्कान्धारय। लिज्जसु गृहाण। वृत्तानीति शेषः। एवंकृते प्रथमा वृत्तपंक्तिः सिद्ध्यति। अथ द्वितीयां प्रभेदपक्तिं साधयति—दोसरेति। ततो द्वितीयायां प्रभेदपंक्तौ तद्द्विगुणान्पूर्वस्थापितवर्णद्विगुणान्प्रभेदसंकेतरूपान्द्वयादिकानङ्कान्कृत्वा देहीत्यर्थः। एवं कृते द्वितीया प्रभेदपक्तिः सिद्ध्यति। अथ क्रमप्राप्तामपि तृतीयां मात्रापक्तिमुल्लङ्घ्य तन्मूलभूता चतुर्थीं वर्णपक्तिं साधयति—उप्परेति। अत्र स्थितैरित्यध्याहार्यम्। तथा चोपरि स्थितैः प्रथमपक्तिस्थितैरेकद्वित्र्यादिभिरङ्कैर्द्वितीयपक्तिस्थिताम् द्विचतुरष्टादिक्रमेण स्थितानङ्कान्गणयित्वा गृहाण। पुनस्तानेवाङ्कान् द्विगुणितान्द्वयष्टचतुर्विंशेत्यादिक्रमेण चतुर्थपक्तौ लिखित्वा देहि स्थापयेत्यर्थः। एवं कृते चतुर्थी वर्णपक्तिः सिद्ध्यति। अथ पञ्चमषष्ठपंक्त्योर्गुरुलघुपंक्त्योः पूरणोपायमुदिशति—चौठीत्युत्तरार्धेन। ततश्चतुर्थपक्तिस्थितार्धाङ्कानेकचतुर्द्वादशादिकानङ्कान्पञ्चमषष्ठपंक्त्योर्निभ्रम यथा स्यात्तथा लिख। चतुर्थाङ्कान्पञ्चम्या लिखितानेवार्धाकान्षष्ठ्या लिखेति। एवं पञ्चमषष्ठपंक्ती गुरुलघुरूपे सिद्ध्यतः। एव पक्तिद्वयं साधयित्वा अथोर्वरिता तृतीयां मात्रापंक्तिं साधयति—ततः पञ्चमपक्तिस्थितानेकचतुर्द्वादशानङ्काश्चतुर्थपंक्तिस्थितान्द्वयष्टचतुर्विंशेत्यादिकानङ्कांश्चैकीकृत्य त्रिद्वादशषट्त्रिंशदादिरूपतामापाद्य तृतीयपंक्तौ मेलय। एकीकृत्य लिखेत्यर्थः। एवं पिङ्गलो जल्पति। एवं कृते तृतीया मात्रापंक्तिः सिद्ध्यति। वर्णमर्कटीफलमाह—वित्तेति। एकाक्षरादीनि वृत्तानीत्यर्थः। प्रभेदास्तत्प्रभेदान्मात्रास्तत्तन्मात्राः वर्णान्गुरूंल्लघून्। इति त्रयोदशवर्णमर्कटी। एवमन्यापि मर्कटी समुन्नेया सुधीभिरित्यलं

पल्लवितेन। तेन संपन्नान् सिद्धाञ्जानीहि। हे लोकाः, एवमक्षरमर्कटीं जानीत। यस्यां ज्ञातायां मनस आनन्दो भवति। अथ च य एनां बुद्ध्यते स एव वृत्तादीनि बुद्ध्यते नान्यः। ततो मर्कटीजाले हस्ती गजो रुद्ध्यते। दुर्गमत्वादिति भावः।

श्रीलक्ष्मीनाथभट्टेन नारायणतनुभुवा।
वर्णमर्कटिका प्रोक्ता पञ्चमे प्रत्यये स्थिता॥

अथ मात्रामर्कटीं सप्रतिज्ञमाह—

अथ तत्रैकमात्रादिनिरवधिकमात्राप्रस्तारेषु कतिकतिजातिसम्बन्धिवृत्तादयो भवन्तीति प्रश्ने कृते मात्रामर्कटिकया प्रत्युत्तरं देयमिति मात्रामर्कटीविरचनप्रकारो लिख्यते—'या पिङ्गलेन कविना न निबद्धा आत्मनो ग्रन्थे। ता मात्रामर्कटिका लक्ष्मीनाथेन विरचिता भणत॥ तत्र तद्विरचनप्रकारे सार्धेन द्विपथा छन्दसा प्रथमपक्तिसाधनोपायमाह—'मात्रासख्यया कोष्ठं कुरु पंक्तिषट्कं प्रस्तारयित्वा। तत्र तत्र द्व्यादिकानङ्कान्धारय प्रथमपक्तौ विचारयित्वा॥ आद्याङ्कं परित्यज्य सर्वपंक्तिमध्ये। भो शिष्य, स्वाभिमतमात्रासख्यया पक्तिषट्क यथा स्यात्तथा कोष्ठक कुरु प्रथमपक्तौ वृत्तपक्तौ यावदित्थं क्रमेण द्व्यादिकानङ्कान्स्थापय। सर्वासा पक्तीना मध्ये प्रथमाङ्कं परित्यज्य। अत्रैवं च प्रतिभाति सर्वकोष्ठेषु प्रथमाङ्कत्यागो न सर्वकोष्ठत्यागपरः किं तु षष्ठगुरुपक्तिप्रथमकोष्ठत्यागपर इति तत्र गुरोरभावात् अतश्च सप्रदायात्पञ्चसु कोष्ठेषु प्रथमाङ्कविन्यासोऽवश्यं कर्तव्य एव। अन्यथा वक्ष्यमाणाङ्कविन्यासभङ्गापत्तेः। एवं कृते प्रथमा वृत्तपक्तिः सिद्ध्यतीति। अथ द्वितीया प्रभेदपक्तिं साधयति चरमार्धेन—'पूर्वयुगलसदृशानङ्कान्धारय द्वितीयपक्तौ विचारयित्वा।' एवमुक्तं भवति—एकद्वित्रिपञ्चाष्टादीञ्शृङ्खलाबन्धन्यायेन क्रमतो धारय। एव कृते द्वितीयप्रभेदपक्तिः सिद्ध्यतीति। अथ तृतीया मात्रापक्तिं साधयति—पढमेति। प्रथमपक्तिस्थिताङ्कैर्द्वितीया पक्तिं गुणय यो योऽङ्को यत्र पतति त तमेव तृतीयपक्तौ भण। एवंकृते तृतीया मात्रापक्तिः सिद्ध्यतीति। द्विपथाछन्दांसि। अथ क्रमप्राप्ता चतुर्थी वर्णपक्तिमुल्लङ्घ्य युगपदेव चतुर्थषष्ठपंक्त्योः साधनार्थं तन्मूलभूतां प्रथम तावत्पक्तिं साधयति—पढमेति। तत्र प्रथमे द्वितीयमङ्क षट्स्वपि पक्तिषु प्रथमकोष्ठत्यागाद्द्वितीयकोष्ठमेवात्र प्रथमं कोष्ठकम्। अतोऽस्मिन्नेव द्वितीयमङ्क तदपेक्षया द्वितीयकोष्ठके च पञ्चमाङ्क दत्त्वा ततो बाणद्विगुण दश तद्द्विगुण विंशतिश्चेत्येतौ द्वावङ्कौ तृतीयचतुर्थयोः कोष्ठयोर्देत्थ। विन्यसतेत्यर्थः। अथ तत्र पञ्चमकोष्ठपूरणप्रकारमाह—काऊणेति। पञ्चमकोष्ठे स्थितान्द्व्यादीनङ्कानेकभावं कृत्वा एकीकृत्य तस्मिन्नेकीकृताङ्के एकमधिकं दत्त्वा ततश्च निष्पन्नेनाष्टत्रिंशता पूर्वापेक्षया पञ्चमं कोष्ठक पूर्णं कुरु। अत्रत्यषष्ठकोष्ठपूरणप्रकारमाह—तज्जिअ इति। पूर्वस्मि-

न्द्वयादिके पञ्चकोष्ठकस्थिताङ्के एकीकृते सत्येतस्मिन्पञ्चममङ्कं त्यक्त्वा पुनरतत्रैकम- धिकं दत्त्वा पूर्ववजातेनैकसप्तत्या षष्ठ कोष्ठं परिपूर्णं कुरु। अथ सप्तमकोष्ठकपूरणो- पायमाह--काऊणेति। पञ्चपंक्तिस्थिताना द्वयादीनामेकभावमैक्यं कृत्वा तेषु पञ्चम- पक्तिं त्यक्त्वा ततस्तेष्वपि चैकं हित्वा सप्तमकोष्ठं त्रिंशदुत्तरेण शताङ्केन पूर्णं कुरु- ष्वेति शेषः। अष्टमकोष्ठपूरणप्रकारमाह—द्वयादित्वात्सप्तमपंक्तिस्थितानङ्कानेकीकृत्य तेष्वेकचत्वारिंशदधिकं ( शतं ) परित्यज्य जातेन पञ्चत्रिंशदधिकेन शतद्वयेनाष्टमं कोष्ठं परिपूर्णं कुरु। नवमकोष्ठपूरणप्रकारमाह-द्व्यादिकानष्टपक्तिस्थितानङ्कानेकीकृत्य तेषु नवत्यङ्कं दूरीकुरु। ततो निष्पन्ने विंशत्यधिकचतुःशतांकेन नवमकोष्ठपूरणं कुरु। दशमकोष्ठपूरणप्रकारमाह। द्वयादिकान्नवपङ्क्तिस्थितानङ्कानेकीकृत्य तेषु सप्ताशीत्यु- त्तरशताङ्कं दूरीकुरु। ततो निष्पन्नेन चतुश्चत्वारिंशदधिकसप्तशताङ्केन दशम कोष्ठं पूरय। एवं कृते चतुर्थपङ्क्तिगर्भा पञ्चमी लघुपङ्क्तिः सिद्ध्यतीति संक्षेपः। 'एव निरवधिमात्राप्रस्तारेऽङ्कपरम्परा। भवतीति तेन कविना न कृतोऽङ्काना विस्तारः॥' अथ षष्ठगुरुपङ्क्तिपूरणप्रकारमाह—तत्र गुरुस्थानीयं प्रथम कोष्ठकं विहाय अग्रिमकोष्ठे प्रथममेकाङ्कं दत्वा पञ्चमपङ्क्तिस्थितैर्द्वितीयादिभिरङ्कैः षष्ठीं पङ्क्तिं पूरय। एव कृते षष्ठी गुरुपङ्क्तिः सिद्ध्यतीति। अथोर्वरितचतुर्थ- पक्तिपूरणप्रकारमाह--काऊणेति। पञ्चमषष्ठपक्तिस्थितान्द्वयेकादीनङ्कान्प्रतिकोष्ठमे- कीकृत्य चतुर्थीं पङ्क्तिं पूरय। अत्र षष्ठपक्तावादिकोष्ठेऽङ्काभावाच्चतुर्थपक्तिप्रथम- कोष्ठे प्रथमाङ्क एव दातव्यः। एव कृते चतुर्थी वर्णपंक्तिः सिद्ध्यतीति। अत्र लघुगुरुपक्तिपूरणप्रकारं सबीजं सुगुप्तं च हरिशंकरः पादाकुलकद्वयेनाह—

"पहिले पाँती लहुदुइ आणहु, सोई ले गुरु दुसरे जाणहु।
गुरु दुण्णा सो मत्ता सेख, सो लहु दुसरें पिङ्गल लेख॥
इम परिपाटी लहुगुरु आणहु, गुरुलहु जोरि वण्ण पुण जाणहु।
मत्ताभीतर गुरु हि मिटावहु, तेहू सों पुणि वण्णह जाणहु॥"

लघुपक्तेः प्रथमकोष्ठे द्वितीयाङ्कमानय। अत्र प्रथमपदं द्वितीयकोष्ठमेव लक्षयति। षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागादेकाङ्के गणनाभावात्तु गुरुकोष्ठा- नुपयोगाच्च। तमेव द्वितीयाङ्कमादाय गुरुपङ्क्तेर्द्वितीयकोष्ठे आनयत। तत्रापि द्वितीयपदं तृतीयकोष्ठपरं ज्ञातव्यम्। अत्र गुरोः प्रथमकोष्ठे प्रथमाङ्क एव देयः। द्वितीयाङ्कस्याग्रे सञ्चारितत्वात्। प्रथमकोष्ठे एकगुरुत्वाच्च। अथ लघुपङ्क्तेर्द्वितीय- कोष्ठे पूरणप्रकारमाह—गुरुदुण्णेति। गुरुकोष्ठस्थितानङ्कान्द्विगुणीकृत्य तत्समा- नमात्राकोष्ठस्थितेष्वङ्केषु लोपय। तच्छेषाङ्कं लघुद्वितीयकोष्ठेषु लिखेति पिङ्गलो भणितवान्। तद्यथा गुरुपङ्क्तेर्द्वितीयकोष्ठे द्वितीयाङ्कस्तद्द्विगुणश्चतुर्थाङ्कस्त तत्समान-

मात्राकोष्ठस्थे नवमाङ्के लोपय। तच्छेषाङ्का दश तान् लघुद्वितीयकोष्ठे लिख। एवमेकगुरुद्वितीयकोष्ठे पञ्चमाङ्कस्तद्द्विगुण दश तास्तत्समानमात्राकोष्ठस्थे विंशतिरूपे लोपय। तच्छेषाङ्का दश तान् लघुतृतीयकोष्ठे लिख। अनया परिपाट्या यथेच्छं लघुपङ्क्तिकोष्ठाङ्कान्गुरुपङ्क्तिकोष्ठाङ्कांश्चानय। एवं लघुपंक्ति च सपाद्योर्वरिता वर्णपङ्क्ति साधयति—गुरुलघुपङ्क्तिस्थितानङ्कानेकीकृत्य तत्समानवर्णपङ्क्तिकोष्ठकेषु यावदिच्छं लिख। अथ वर्णपङ्क्तिसाधने प्रकारान्तरमाह—मत्त इति। मात्रापङ्क्तिस्थिताङ्केषु तत्समानगुरुपङ्क्तिस्थितानङ्कांल्लोपय। तच्छेषाङ्कैरपि वर्णपङ्क्तिः सिद्धयतीति जानीहि। इति गुरुणा गोपितोऽपि मया शिष्यबोधाय विविच्य प्रकाशितः। एव पङ्क्तिषट्क संसाध्य मात्रामर्कटीफलमाह—वित्तमिति। 'वृत्तभेदो मात्रा वर्णा लघुकास्तथा गुरुकाः। एते षट्पङ्क्तिकृताः प्रस्तारा भवन्ति विस्ताराः ॥' मात्रामर्कटीमाहात्म्यमाह—जत्थ इति। यत्र च हस्ती अवरुध्यते बध्यते चित्त च सूत्रसहस्त्रम्। ता मात्रा मर्कटिका दृष्टवा च को न बध्यते सुकविः॥' को नासक्तो भवतीत्यर्थः। एतत्करण कौतुकार्थमित्याह—नट्ठेति। 'नष्टोद्दिष्टं यथा वा मेरुयुगल यथा पताका वा। मर्कटिकापि तथैव कुतूहलकारिणी भणिता॥ उक्तमुपसहरति—इऐति। इति लक्ष्मीनाथकविना रचिते रुचिरे प्रबन्धेऽस्मिन्। प्रत्ययपञ्चकबन्ध पश्यत छंदसः सर्वस्वम्॥'

५०. अथैकाक्षरादिषड्विंशत्यक्षरपर्यन्त समस्तवर्णप्रस्तारपिण्डीभूतसख्यामाह—

'अङ्कानां वामतो गतिः' इति न्यायेन त्रयोदश कोट्यः द्विचत्वारिंशल्लक्षाणि सप्तदशसहस्राणि सप्तशतानि षड्विंशतिश्च। सभूयैकाक्षरादिषड्विंशत्यक्षरावधिप्रस्तारस्य पिण्डसख्येत्यर्थः। अङ्कतोऽपि १३४२१७७२६। 'एकदशशतसहस्रायुतलक्षप्रयुतकोट्यः क्रमशः। अर्बुदमब्ज खर्वंनिखर्वमहापद्मशङ्कवतस्मात्॥ जलधिश्चान्त्य मध्य परार्धमिती दशगुणोत्तराः सख्याः॥'

५१. अथ 'पद्य चतुष्पदी तच्च वृत्त जातिरिति द्विधा। वृत्तमक्षरसख्यातं जातिर्मात्राकृता भवेत्॥' इति प्रथम मात्राकृता जातिमभिधारयन् गाहूप्रभृतीना जातीनां कलागणनामुद्देशक्रमेणाह—

चतुष्पञ्चाशन्मात्रा गाहू भवति। गाथायाः सप्तपञ्चाशन्मात्रा भवन्ति। तथा विगाथा परावृत्त्य क्रियते। मात्राः पर सप्तपञ्चाशदेव। उद्गाथापि षष्टिकलाः। गाथिन्याश्च द्वाषष्टिकलाः। तथैव परावर्तते सिंहिणी। मात्रा द्वाषष्टिरेव। तानि सप्तरूपाणि अन्योन्य चतुर्मात्रगणानि भवन्ति। स्कन्धके चतुःषष्टिर्मात्रा भवन्ति। अत्र सर्वत्र सार्धसप्तगणाः स्कन्धके त्वष्टौ गणाः। रड्डा छंदः॥

५२. अथ गाहू छन्दः—

परमध्ये दलद्वयमध्ये मेरुयुगल भवति । दलद्वयेऽपि षष्ठो गण एकलघ्वात्मको भवतीत्यर्थः । मेरुरिति लघोर्नाम । एतादृश गाहूछंदो भवति । इदमप्येतस्यो-दाहरणम् । तथा च वाणीभूषणे—'गाथोत्तरदलतुल्यं पूर्वदलं भवति यदि बाले । तामिह फणिपतिभणितामुपगीतिं वर्णयति बुधाः ॥' उट्टवणिका यथा—SS, SII, S ;, SII, SS, I, SS, S, II SS, IIII, SS, SII, SS, I, SS, S,

५३. गाहूमुदाहरति—जहा—( यथा )

चन्द्रश्चन्दनहार एते तावदेव रूपं स्वात्मनः श्वैत्याभिमानेन प्रकाशयन्ति चण्डेश्वरस्य राज्ञः कीर्तिर्यावदात्मान न दर्शयति । ततोऽप्येतस्य कीर्त्तिरत्यन्तधवले-त्यर्थः । गाहू निवृत्ता ।

५४. अथ गाथा छन्द :—

यस्याः प्रथमे चरणे द्वादशमात्रास्तथा द्वितीयेऽष्टादशभिः संयुक्ता भवन्ति । यथा प्रथमं तथा तृतीयं द्वादशमात्रम् । या चतुर्थे चरणे पञ्चदशभिर्मात्राभिर्भूषिता भवति सा गाथेत्यर्थः । भूषणेऽपि—'आदितृतीये द्वादश दशाष्टमात्रा तृनीय-चरणे च । तुर्ये पञ्चदश स्युर्गाथेय पिङ्गलेनोक्ता ॥' प्राकृते गाथा संस्कृते आर्येति नामभेदः । इदमप्युदाहरणम् ।

५५. गाथामुदाहरति—जहा

कस्याश्चित्कलहान्तरितायाः सखीं प्रति वचनम् । येन विना न जीव्यते स कृतापराधोऽप्यनुनीयते । उक्तमर्थमर्थान्तरेण दृढीकर्तुमाह—प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः । अपि तु सर्वस्य । उट्टवणिका यथा—SII, SII, SII, IIS, ISI, SS, SII, SS, IIII, SS, IIS, I, SS, S,

५६. अथ गाथायां गणनिभयममाह—

अत्र चतुष्कलाः सप्त गणा दीर्घान्ता गुर्वन्ता इत्यर्थः । अत्र गणो जगणो भवति नगणलघू वा भवत इति नियमः । इह विषमे स्थाने प्रथमतृतीयपञ्चमसप्तमस्थाने जगणो न भवति । तथा गाथाया द्वितीयेऽर्धेऽपि षष्ठ गणमेकलघ्वात्मकं विजानीत । भूषणेऽपि—'सप्ततुरगाः सदीर्घाः सदीर्घो जगणो द्विजो ( IIII ) ऽथवा भवति । षष्ठ लघूत्तरदले विषमे जगणो न गाथायाः ॥' गाथा छन्दः ॥

५७. सर्वगाथासु सामान्यलक्षणमाह—

सर्वस्या गाथायाः सप्तपञ्चाशन्मात्रा भवन्ति । तत्र विवेकः—पूर्वार्धे त्रिंशत् सप्तविंशतिमात्राः परार्धे च । गाथा छन्दः ॥

५८. अथ गाथायाः सप्तविंशतिभेदेषु लक्ष्मीनाम्नीमाद्यां गाथामुप-लक्षयति—

यस्यां गाथाया सप्तविंशति गुरवः श्लाघ्यास्तिस्रश्च रेखास्त्रयो लघवः। पूर्वार्धे षष्ठजगणरेखाद्वयमुत्तरार्धे च षष्ठलघ्वात्मकरेखामात्रं मिलित्वा रेखात्रयं यस्या सा ग्रन्थानां मध्ये आद्या त्रिंशदक्षरा सप्तविंशतिगुरुकलघुत्रयवती लक्ष्मीनामधेया भवति। गाथा छन्दः॥

५९. अथ तत्प्रशंसापुरःसरं भेदानयनप्रकारमाह—

त्रिंशदक्षरा लक्ष्मीं गाथा सर्वे कविपण्डिता वन्दन्ते। अभिवादनपूर्वं स्तुवन्तीत्यर्थः। अत्र यदा एकैको वर्णो ह्रसति न्यूनत्वं प्राप्नोति द्वौ लघू वृद्धिं गच्छतस्तदा सप्तविंशतिनामानि कुरुत। गाथा छन्दः॥

६०–६१. अथाद्या लक्ष्मीमुपलक्षयन्निव गाथाभ्या नामान्युद्दिशति—

अत्र प्रथमा गाथा सप्तविंशतिगुरुकरेखात्रयवती त्रिंशदक्षरा लक्ष्मीः एकगुरुह्रासेन लघुद्वयवृद्ध्या गाथायाः सप्तविंशतिभेदाः स्फुटीकृत्य प्रदर्श्यन्ते—यथा—

| | | | |
|---|---|---|---|
| २७ गुरु. | ३ लघु. | ३० अक्षर. | लक्ष्मीः। |
| २६ गुरु. | ५ लघु. | ३१ अक्षर. | ऋद्धिः। |
| २५ गुरु. | ७ लघु. | ३२ अक्षर. | बुद्धिः। |
| २४ गुरु. | ९ लघु. | ३३ अक्षर. | लज्जा। |
| २३ गुरु. | ११ लघु | ३४ अक्षर | विद्या। |
| २२ गुरु. | १३ लघु. | ३५ अक्षर | क्षमा। |
| २१ गुरु. | १५ लघु. | ३६ अक्षर. | देही। |
| २० गुरु. | १७ लघु. | ३७ अक्षर. | गौरी। |
| १९ गुरु. | १९ लघु. | ३८ अक्षर | धात्री। |
| १८ गुरु. | २१ लघु. | ३९ अक्षर. | चूर्णा। |
| १७ गुरु. | २३ लघु. | ४० अक्षर, | छाया। |
| १६ गुरु. | २५ लघु. | ४१ अक्षर. | कान्ति। |
| १५ गुरु. | २७ लघु | ४२ अक्षर. | महामाया। |
| १४ गुरु. | २९ लघु. | ४३ अक्षर. | कीर्त्तिः। |
| १३ गुरु. | ३१ लघु. | ४४ अक्षर. | सिद्धिः। |
| १२ गुरु. | ३३ लघु. | ४५ अक्षर. | मानिनी। |
| ११ गुरु. | ३५ लघु. | ४६ अक्षर. | रामा। |
| १० गुरु. | ३७ लघु. | ४७ अक्षर. | गाहिनी। |
| ९ गुरु. | ३९ लघु. | ४८ अक्षर. | विश्वा। |
| ८ गुरु. | ४१ लघु. | ४९ अक्षर. | वासिता। |

| | | | |
|---|---|---|---|
| ७ गुरु. | ४३ लघु. | ५० अक्षर. | शोभा। |
| ६ गुरु. | ४५ लघु. | ५१ अक्षर. | हरिणी। |
| ५ गुरु. | ४७ लघु. | ५२ अक्षर. | चक्री। |
| ४ गुरु. | ४९ लघु. | ५३ अक्षर. | सारसी। |
| ३ गुरु. | ५१ लघु. | ५४ अक्षर. | कुररी। |
| २ गुरु. | ५३ लघु. | ५५ अक्षर. | सिंही। |
| १. गुरु. | ५५ लघु. | ५६ अक्षर. | हसी। |

एते सप्तविंशतिभेदाः । एतासामुदाहरणानि मत्कृतोदाहरणमञ्जर्यां क्रमेण द्रष्टव्यानि ॥

६२. अथ गाथापाठप्रकारमुपदिशति—

प्रथम द्वादशमात्रं चरण हंसपदवन्मन्थरं यथा स्यात्तथा पठ्यते। अथवा 'पढमङ्घी' इति क्वचित्पाठः। तत्र प्रथमाङ्घ्रि हसगमनवत्पठेदित्यर्थः द्वितीयचरणे सिहविक्रमो यादृक् तादृक् पठ्यते। तृतीयचरणे गजवरस्य लुलित यथा गतिविशेषो भवति तथा पठ्यते। चतुर्थेऽचरणेऽहिवरस्य लुलित गतिविशेषो यथा भवति तथा पठ्यते। गाथा छन्दः॥

६३. अथ गणभेदेन गाथायाः सावस्थाभेदं दोषमाह—

एकेन जेन जगणेन गाथा कुलीना भवति। जगणस्य नायकपर्यायत्वादिति भावः। द्वाभ्या नायकाभ्यां जगणाभ्यां स्वयग्राहिका सुखग्राह्या भवति। नायकहीना रण्डा भवति। बहुनायका गाथा वेश्या भवति। द्वितीयार्थः स्पष्टः। गाथा छन्दः॥

६४. अथ लघुसख्याभेदेन गाथाया वर्णभेदमाह—

त्रयोदशवर्णा लघुका यस्यां सा तदवधिका विप्रा। ब्राह्मणी भवतीत्यर्थः। एकविंशतिभिर्लघुकैः क्षत्रिया भणिता। सप्तविंशतिभिर्लघुकैर्गाथा वैश्या भवति। शेषा तु ऊनत्रिंशदारभ्य शेषैर्लघुकैः शूद्रा भवति। गाथा छन्दः।

६५. विषमस्थानदत्तजगणाया गाथाया दोषमाह—

या गाथा प्रथमतृतीयपञ्चमसप्तमस्थाने ननु गुरुमध्या जगणयुक्ता भवति गुर्विणीव गुणरहिता सकलकार्यक्षमा सा गाथा दोष प्रकाशयति। अतो विषमस्थानस्थनायका सा न कर्त्तव्येत्यर्थः। गाथा छन्दः॥ गाथा निवृत्ता।

६६. विग्गाहा छन्दः—

विगाथायाः पूर्वार्धे सप्तविंशतिर्मात्रा भवन्ति। चरमदले उत्तरार्धे ननु त्रिंश-

न्मात्रा भवन्तीति जल्पित पिङ्गलेन नागेन । गाथादलवैपरीत्येन विगाथा भवतीत्यर्थः । इदमप्युदाहरणम् । भूषणे तु—'गाथा द्वितीयतुर्यौ पादौ भवतस्तु विपरीतौ । सेय भवति विगाथा फणिनायकपिङ्गलेन सप्रोक्ता ॥' इति ॥

६७. विगाथामुदाहरति जहा—

मानवतीं नायिका प्रति धृष्टस्य नायकस्य वचनम् । यथा हे मानिनि, मान परिहर त्यज । प्रेक्षस्व नीपस्य कदम्बस्य कुसुमानि । युष्मत्कृते खरहृदयोऽत्यन्त कठोराशयः कामोऽस्मिन्वर्षासमये शेषपुष्पाणामभावात् किल गुटिकाधनुर्गृह्णाति । अतस्त्यजैन मानमिति भावः । अथ वा तादृशीं कान्तकृतानुनयमगृह्णतीं नायिका प्रति दूत्युक्तिः ॥ उट्टवणिका यथा—||||, ऽ||, ऽऽ, ऽ||, ||ऽ, |, ऽऽ, ऽ||, ऽ||, ऽ||, ||ऽ, ऽ||, ||ऽ, |ऽ|, ||ऽ, ऽ, विगाहा निवृत्ता ॥

६८. अथोद्गाथा छन्दः—

पूर्वार्धे उत्तरार्धे च यत्र मात्रास्त्रिंशत्सम्यग्भणिता । सुभगेति मात्राविशेषणम् । सा पिंगलकविदृष्टा षष्टिमात्राङ्गा कलाषष्टिशरीरा उद्गाथा वृत्ता । अत्र सर्वत्रावहट्टभाषया लिङ्गव्यत्ययः प्रातिपदिकनिर्देशो वा न दोषाधायक इति गुरवः । इदमप्युदाहरणम् । इयमेव ग्रन्थान्तरे आर्यागीतिरित्युच्यते । भूषणे तु—'गाथा द्वितीयतुर्यावष्टादशमात्रकौ भवतः । मात्राषष्टिशरीरा प्रोक्ता सा गीतिरिह हि फणिपतिना ॥'

६९. उद्गाथामुदाहरति—जहा—

चेदिपतावनुरक्ता काचिद्दर्शनोत्कलिकाकुला कुलवधूका निजसखीमाह—यन्नामश्रवणेनापि सात्विकभावाविर्भावादश्रुपातस्तद्वदनदर्शनमतिदूरापास्तमित्युत्कलिकाकुलाह वीरस्य चेदिपतेः कथ मुख प्रेक्षिष्यामीति सामुक्त्वावाचः (?) । उट्टवणिका यथा—ऽऽ, |ऽ|, ऽऽ, ऽऽ, ||ऽ, |||, ऽऽ, ऽ||, ||ऽ, |ऽ|, ||ऽ, ऽऽ, ||ऽ, |ऽ|, ऽऽ, ऽ, उद्गाथा निवृत्ता ॥

७०. अथ गाहिनीसिंहिन्यौ—

यत्र पूर्वार्धे प्रथमदले त्रिंशन्मात्रा भवन्ति उत्तरार्धे चरमदले द्वात्रिंशन्मात्राः सभूय द्वाषष्टिर्यत्र भवन्ति, पिङ्गलः प्रभणति मुग्धे शृणु सा गाहिनी छन्दः । तद्विपरीता सिंहिनी सत्य भण । कथयेत्यर्थः । अत्र पूर्वार्धे द्वात्रिंशन्मात्रा उत्तरार्धे च त्रिंशन्मात्रा इति विपर्ययार्थः । वाणीभूषणेऽपि—'यदि गाथातुर्यपदं विंशतिमात्र च गाथिनी भवति । फणिपतिपिङ्गलभणितं तद्विपरीत तु सिंहिनीवृत्तं स्यात् ॥' इदमप्युदाहरणम् ।

७१. गाथिनीमुदाहरति—जहा—

सग्रामयात्राया चरणपतिता पत्नीं प्रति हम्मीरवचनम्—मुञ्च सुन्दरि पादम् ।

विघ्न मा कुर्वित्यर्थः । हे सुमुखि, अर्पय हसित्वा मम खड्गम् । खड्गग्रहणानन्तरं प्रतिजानीते—कल्पयित्वा छेदयित्वा म्लेच्छशरीर प्रेक्षते वदनानि युष्माकं ध्रुवं हम्मीरः । अनिकृत्तम्लेच्छशरीरो भवन्मुखं नावलोकयितुं सहिष्य इति भावः ॥

७२. सिंहिनीमुदाहरति—जहा—

कश्चित्कविर्विक्रमादित्य स्तौति । अयमर्थः—अयं कनकस्य वृष्टिं वर्षति, इन्द्रस्तावज्जलवृष्टिं वर्षति । असौ भुवनानि तपति सूर्यबिम्ब भुवन तपति । इन्द्रः सूर्यो वा दिवसे जागर्ति, अयं तु दिवानिशं जाग्रदेवावतिष्ठत इत्यर्थः । उट्टवणिका उभयोर्यथा—ऽ।।, ऽ।।, ऽऽ, ऽ।।, ।।ऽ, ।।।।, ऽऽ, ऽ।।, ऽ।।, ऽ।।, ऽऽ, ऽ।।, ।।ऽ, ।ऽ।।, ऽऽ, ऽ, ।।।।।।, ।।।।, ऽऽ, ऽ।।, ।।ऽ, ।ऽ।, ऽऽ, ऽऽ।।ऽऽ, ऽ।।ऽऽ, ऽ।।, ।ऽ।, ऽऽ, ऽ, ।।, गाहिनीसिहिन्यौ निवृत्ते ॥

७३. अथ स्कन्धक छन्दः—

चतुर्मात्रिका गणा अष्टौ भवन्ति पूर्वार्धे उत्तरार्धे च समरूपाः । दलद्वयेऽपि मिलित्वा चतुःषष्टिमात्रकशरीरं स्कन्धकं विजानीत । पिङ्गलः प्रभणति मुग्धे । बहुसंभेदमष्टाविंशतिप्रभेदमित्यर्थः । भूषणेऽपि—'स्कन्धकमपि तत्कथित यत्र चतुष्कलगणाष्टकेनार्धं स्यात् । तत्तुल्यमग्रिमदल भवति चतुःषष्टिमात्रकशरीरमिदम् ॥' इदमप्युदाहरणम् ॥

७४. स्कन्धकमुदाहरति—जहा—

उट्टवणिका यथा—ऽऽ, ऽऽ, ।।ऽ, ।।।।, ऽ।।, ।ऽ।, ।।ऽ, ।।ऽ, ।।ऽऽ, ऽऽ, ।।ऽ, ऽ।।, ऽऽ, ।ऽ, ।ऽ।।, ऽऽ।।

७५. अथ स्कन्धकस्य व्याप्यव्यापकभावेन सर्वगुरुकृतस्यैकगुरुह्रासे [ लघु ] द्वयवृद्ध्या वाष्टाविंशतिभेदाः । तानुद्दिशति—

हे विज्ञाः, शरभशेशशशधरा प्राकृतकवयः । गुणहु जानीत । अष्टाविंशतिस्कन्धका इति । यथा—

| | | | |
|---|---|---|---|
| ३० गुरु | ४ लघु | ३४ अक्षर | नन्दः । |
| २९ गुरु | ६ लघु | ३५ अक्षर | भद्रः । |
| २८ गुरु | ८ लघु | ३६ अक्षर | शेषः । |
| २७ गुरु | १० लघु | ३७ अक्षर | साराङ्गः । |
| २६ गुरु | १२ लघु | ३८ अक्षर | शिवः । |
| २५ गुरु | १४ लघु | ३९ अक्षर | ब्रह्मा । |
| २४ गुरु | १६ लघु | ४० अक्षर | वारणः । |
| २३ गुरु | १८ लघु | ४१ अक्षर | वरुणः । |

| | | | |
|---|---|---|---|
| २२ गुरु | २० लघु | ४२ अक्षर | नीलः । |
| २१ गुरु | २२ लघु | ४३ अक्षर | मदनः । |
| २० गुरु | २४ लघु | ४४ अक्षर | तालाङ्कः । |
| १९ गुरु | २६ लघु | ४५ अक्षर | शेखरः । |
| १८ गुरु | २८ लघु | ४६ अक्षर | शरः । |
| १७ गुरु | ३० लघु | ४७ अक्षर | गगनम् । |
| १६ गुरु | ३२ लघु | ४८ अक्षर | शरभः । |
| १५ गुरु | ३४ लघु | ४९ अक्षर | विमतिः । |
| १४ गुरु | ३६ लघु | ५० अक्षर | क्षीरम् । |
| १३ गुरु | ३८ लघु | ५१ अक्षर | नगरम् । |
| १२ गुरु | ४० लघु | ५२ अक्षर | नरः । |
| ११ गुरु | ४२ लघु | ५३ अक्षर | स्निग्धः । |
| १० गुरु | ४४ लघु | ५४ अक्षर | स्नेहः । |
| ९ गुरु | ४६ लघु | ५५ अक्षर | मदकलः । |
| ८ गुरु | ४८ लघु | ५६ अक्षर | भूपालः । |
| ७ गुरु | ५० लघु | ५७ अक्षर | शुद्धः । |
| ६ गुरु | ५२ लघु | ५८ अक्षर | सरित् । |
| ५ गुरु | ५४ लघु | ५९ अक्षर | कुम्भः । |
| ४ गुरु | ५६ लघु | ६० अक्षर | कलशः । |
| ३ गुरु | ५८ लघु | ६१ अक्षर | शशी । |

एतेऽष्टाविंशतिभेदाः । एषामुदाहरणान्युदाहरणमञ्जर्यां द्रष्टव्यानि । तालङ्किनी छन्दः ॥

७६. अष्टाविंशतिभेदानयनप्रकारमाह—

अयमर्थः—चतुःषष्टिकलात्मके स्कन्धके त्रिंशद्गुरवश्चत्वारो लघवस्तदा नन्दः । एवमन्येऽपि ज्ञेयाः । षष्ठे जगणस्यावश्यकत्वाच्चत्वारो लघवः इत्युक्तम् । दोहा छन्दः ॥

७७. अथाद्यं नन्दमुदाहरति—

कश्चित्कवी राजान दिवोदासं स्तौति—यथा—चन्द्रः कुन्दं काशः हारः क्षीरम् त्रिलोचनः शिवः कैलाशः यावद्यावच्छ्वेतानि तावद्धे काशीश, ते कीर्त्या र्जितानि । तदपेक्षया ते कीर्त्तिर्धवलेत्यर्थः । उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ऽऽ, ऽऽ।।, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ऽऽ, ऽऽ इति गाथाप्रकरणम् ॥

७८. अथ दोहा छन्द :—

त्रयोदशमात्राः प्रथमचरणे पुनर्द्वितीयचरणे एकादश पुनस्तृतीयचरणे त्रयोदश पुनश्चतुर्थचरणे एकादशैव। द्विपथालक्षणमेतत्।

७९. द्विपथामुदाहरति—

कश्चित्कविर्वीरेश्वरं स्तौति—सुरतरुः कल्पवृक्षः, सुरभिः कामधेनुः स्पर्शमणिश्च एते त्रयोऽपि नहि वीरेश्वरसमानाः। एतेषु कल्पतरुर्वल्कलमयः, ओ अथ च कठिनतनुः काष्ठमयत्वात्, कामधेनुः पशुः विवेकरहिता, स्पर्शमणिः पाषाणो जड एवेति। अयं च मृदुहृदयो विवेचकः सुज्ञो विलक्षणस्वभावः। उट्टवणिकानकपुटे द्रष्टव्या।

८०. तथा द्विपथायास्त्रयोविंशतिभेदानेकैकगुरुह्रासेन लघुद्वयवृद्धयाह—

इति त्रयोविंशतिभेदाः। रड्डा छन्दः।

८१. त्रयोविंशतिभेदानयनप्रकारमाह—

ते यथा—

| | | | |
|---|---|---|---|
| २२ गुरु | ४ लघु | २६ अक्षर | भ्रमरः। |
| २१ गुरु | ६ लघु | २७ अक्षर | भ्रामरः। |
| २० गुरु | ८ लघु | २८ अक्षर | शरभः। |
| १९ गुरु | १० लघु | २९ अक्षर | श्येनः। |
| १८ गुरु | १२ लघु | ३० अक्षर | मण्डूकः। |
| १७ गुरु | १४ लघु | ३१ अक्षर | मर्कटः। |
| १६ गुरु | १६ लघु | ३२ अक्षर | करभः। |
| १५ गुरु | १८ लघु | ३३ अक्षर | नरः। |
| १४ गुरु | २० लघु | ३४ अक्षर | मरालः। |
| १३ गुरु | २२ लघु | ३५ अक्षर | मदकलः। |
| १२ गुरु | २४ लघु | ३६ अक्षर | पयोधरः। |
| ११ गुरु | २६ लघु | ३७ अक्षर | चलः। |
| १० गुरु | २८ लघु | ३८ अक्षर | वानरः। |
| ९ गुरु | ३० लघु | ३९ अक्षर | त्रिकलः। |
| ८ गुरु | ३२ लघु | ४० अक्षर | कच्छपः। |
| ७ गुरु | ३४ लघु | ४१ अक्षर | मत्स्यः। |
| ६ गुरु | ३६ लघु | ४२ अक्षर | शार्दूलः। |
| ५ गुरु | ३८ लघु | ४३ अक्षर | अहिवरः। |

| | | | |
|---|---|---|---|
| ४ गुरु | ४० लघु | ४४ अक्षर | व्याघ्रः । |
| ३ गुरु | ४२ लघु | ४५ अक्षर | बिड़ालः । |
| २ गुरु | ४४ लघु | ४६ अक्षर | शुनकः । |
| १ गुरु | ४६ लघु | ४७ अक्षर | उन्दुरः । |
| ० गुरु | ४८ लघु | ४८ अक्षर | सर्वलघुः सर्पः । |

एते त्रयोविंशतिभेदाः । एतेषामुदाहरणान्युदाहरणमञ्जर्यां द्रष्टव्यानि । दोहा छन्दः ॥

८२. अथ भ्रमर प्रथममुदाहरति—जहा ( यथा )—

८३. अथ लघुसंख्याभेदेन द्विपथाया वर्णभेदमाह—

चतुर्लघुमारभ्य द्वादशलघुपर्यन्ता द्विपथा विप्रा ब्राह्मणी भवति । तथा त्रयोदशलघुकमारभ्य द्वाविंशत्या लघुकैः क्षत्रिया भणिता । त्रयोविंशतिलघुकमारभ्य द्वात्रिंशत्या लघुकैर्वैश्या भवति । या इतरा सा सर्वा शूद्रा भवति । गाथा छन्दः ॥

८४. विषमचरणस्थजगणाय दोषमाह—

यस्या दोहायाः प्रथमे तृतीये च पादे ण ननु जगणा दृश्यन्ते सा दोहा चाण्डालगृहस्थितेव दोषं प्रकाशयति । यद्वा प्राकृते पूर्वनिपातानियमाद्गृहस्थितचाण्डालेव दोषावहा भवति । गाथा छन्दः ॥

८५. दोहाया गणनियममाह—

षट्कलश्चतुष्कलस्त्रिकलश्चानया रीत्या त्रयोऽमी गणा विषमे तृतीये च चरणे पतन्ति । समे पादे तृतीये चतुर्थे च चरणे षट्कलचतुष्कलस्थापनानन्तरमेकामेव कला निवृत्ता कुर्वित्यर्थः । वाणीभूषणेऽपि—

'षट्कलतुरगौ त्रिकलमपि विषमपदे विनिधेहि ।
समपादान्ते चैककलमिति दोहामवधेहि ॥'

दोहा णिव्वुत्ता ( दोहा निवृत्ता ) ॥

८६. अह रसिआ ( अथ रसिका छन्दः )—

प्रथम द्विजवरगणयोश्चतुर्थलघुकगणयोर्युगल धारय । पुनरपि च त्रिलघुको गणः पतति । अनेन विधिना विभिन्नतानि षट्पदानि यत्र तत्र छन्दः शोभते । यथा सुशशी रजन्या तथा रसिअउ रसिकाना मध्य एतदेकादशकल छन्दः । हे मृगनयने हे गजगमने शोभते इति । भूषणे तु—ललितमिति नामान्तरम् । यथा—'द्विजवरयुगमिह रचय, त्रिलघुकगणमिह कलय, सुललित कलितरसपदि, सरसिजमुखि भवति यदि, जगति विदितललितमिति, वरफणिपतिरिति वदति ॥' इदमप्युदाहरणम् ॥

८७. रसिकामुदाहरति—जहा ( यथा )—

कश्चित्कस्यचिदग्रेऽचलनरपतेः समराङ्गणादपमानमनुवर्णयस्तत्कटकक्षोभमुपवर्णयति—विमुखं पराङ्मुख चलितो रणादचलाख्योऽपि परिहृत्य हयगजबलं तदानीमेव मलयनरपतिरपि हलहलित आकस्मिकसंजातसाध्वसोऽभूत्। यस्य यशस्त्रिभुवन पिवति। व्याप्नोतीत्यर्थः। अथ च वाराणसीनरपतिरपि लुलितः पराङ्मुखो बभूव। सकलस्य लोकस्योपरि यस्य यशः पुष्पितम्। विकसितमित्यर्थः उट्टवणिका स्पष्टा।

८८. अथैतस्य छन्दस उक्कच्छेति नामान्तरमाह—

सर्वलघुकं रसिकाछन्दः। आदिकाव्यमर्थात्प्रथम भेद कृत्वा 'उक्कच्छा' इति णाम किउ कृतम्। छन्दोविद्भिरिति शेषः। कीदृशम्। लोहंगिण्यामेतस्यैवापरभेदे छन्दसि सारभूतम्। उत्कृष्टमित्यर्थः। अत्र च यदा गुरुर्वर्धते द्वौ लघू ह्रसतस्तदा तत्तन्नाम विचारय। दोहा छन्दः।

८९. लघुद्वयह्रासेनैकगुरुवृद्ध्योक्कच्छाया अष्टौ भेदास्तानुद्दिशति—

लोहंगिणी, हंसी, रेखा, तालङ्किणी, कम्पिणी, गम्भीरा, काली, कालरुद्राणी, इत्यष्टावुक्कच्छाया नामानि। भेदा इत्यर्थः। गाहाछन्दः॥

९०. अथाष्टभेदानयनप्रकारमाह—

लोहंगिणी सर्वलघुका। यत्रैको गुरुर्भवति सा हंसी। एवं लघुद्वयह्रासेनैवैकगुरुवृद्ध्या यन्नाम यत्र तन्नाम तत्र। अत्र सर्वत्र षट्षष्टिमात्राः। ते यथा—

६६ मात्रा सर्वलघुका लोहंगिणी।

| | | | |
|---|---|---|---|
| ६४ लघु | १ गुरु | ६६ मात्रा | हंसी। |
| ६२ लघु | २ गुरु | ६६ मात्रा | रेखा। |
| ६० लघु | ३ गुरु | ६६ मात्रा | तालङ्किणी। |
| ५८ लघु | ४ गुरु | ६६ मात्रा | कम्पिणी। |
| ५६ लघु | ५ गुरु | ६६ मात्रा | गम्भीरा। |
| ५४ लघु | ६ गुरु | ६६ मात्रा | काली। |
| ५२ लघु | ७ गुरु | ६६ मात्रा | कलरुद्राणी। |

एतेऽष्टावुकच्छाया भेदाः। गाहाछन्दः॥

९१. अथ रोलाछन्दः—

पिङ्गलो ब्राह्मणोऽभवद्यः शेषनागस्तेन रोलाख्यं छन्दो विवृतम्। अत्र रोलाच्छन्दसि एकादश हारा गुरवो योज्यन्ते। एकैकगुरुह्रासेनान्योऽन्यो लघुर्वर्धते। अत्र च यथाकथंचित्प्रतिचरणं चतुर्विंशतिः कलाः कर्तव्या इति। वाणी-

भूषणेऽपि—'रोलावृत्तमवेहि नागपतिपिङ्गलभणितं, प्रतिपदमिह चतुरधिककला-विंशतिपरिगणितम्। एकादशमधिविरतिरखिलजनचित्ताहरणं सुललितपदमदकारि विमलकविकण्ठाभरणम् ॥' इति। इदमप्युदाहरणम् ॥

९२. रोलामुदाहृति—जहा ( यथा )

कश्चित्कविर्वीरहम्मीरप्रयाणमनुवर्णयति—पदभरेण मर्दिता धरणिस्तरणिः सूर्यः स्थितस्तदा धूल्या समाच्छादितः। 'तरणिरथः' इति वा। कमठपृष्ठमधः पतितम्। अतिभारादादिकूर्मोऽप्यधस्ताद् गत इति भावः। मेरुमन्दरयोरपि शिरः कम्पितम्, यदा कोपेन चलितो हम्मीरवीरो गजयूथसुयुक्तस्तदा कृतो हाक्ष्टाक्रन्दः, मूर्च्छित च म्लेच्छानामपि पुत्रैरिति।

९३. यथास्यैकैकगुरुह्रासेन लघुद्वयवृद्ध्या त्रयोदशभेदास्तानुद्दिशति—

यथा—

| | | | |
|---|---|---|---|
| १३ गुरु | ७० लघु | ९६ मात्रा | कुन्दः। |
| १२ गुरु | ७२ लघु | ९६ मात्रा | करतलः॥ |
| ११ गुरु | ७४ लघु | ९६ मात्रा | मेघः। |
| १० गुरु | ७६ लघु | ९६ मात्रा | तालाङ्कः। |
| ९ गुरु | ७८ लघु | ९६ मात्रा | कालरुद्रः। |
| ८ गुरु | ८० लघु | ९६ मात्रा | कोकिलः। |
| ७ गुरु | ८२ लघु | ९६ मात्रा | कमलम्। |
| ६ गुरु | ८४ लघु | ९६ मात्रा | इन्दुः। |
| ५ गुरु | ८६ लघु | ९६ मात्रा | शंभुः। |
| ४ गुरु | ८८ लघु | ९६ मात्रा | चामरः। |
| ३ गुरु | ९० लघु | ९६ मात्रा | गजेश्वरः। |
| २ गुरु | ९२ लघु | ९६ मात्रा | सहस्राक्षः। |
| १ गुरु | ९४ लघु | ९६ मात्रा | शेषः। |

इति त्रयोदश भेदान् भणति नागराजः। फणीश्वरो जल्पति। त्रयोदशगुरु-संख्यामानय। एकादश गुरून्दत्थ। द्वौ द्वौ लघू प्रतिचरणाभिप्रायेणापीति भावः। अथवा त्रयोदशाक्षरेषु गुरुषु अक्षरमक्षरमेकैको गुरुर्यदि पतति लघुद्वयं च वधते तदा तत्तन्नाम जानीत। एतेषामुदाहरणानि द्रष्टव्यानि। रड्डा छन्दः ॥

९४. अथ गन्धा छन्दः—

भोः सुजनाः, सप्तदशवर्णान् प्रथमचरणे भणत। तथा द्वितीयचरणेऽष्टादश-भिर्वर्णैरुपलक्षिता यमकयुगचरणा। यमकद्वययुक्तचरणेत्यर्थः। एतादृशमेव द्वितीय-

दल कुरुतेति भणति पिङ्गलः। गन्धाना नाम रूपकं पण्डितजनचित्तहरं भवति। अत्र यमकत्वाद्दलयोरैक्यमिति। वाणीभूषणेऽप्युक्तम्, 'दशसप्तवर्णमिह रचय प्रथम चरणे' द्वितीयमष्टादशकलितमिति हृदयहरणम्। ईदृशमुत्तर दलमपि हृदयसंधानकं, नागपतिपिङ्गलभणितमिति शृणु गन्धानकम्॥' इदमप्युदाहरणम्॥

९५. पुनरपि शिष्यप्रबोधनाय गन्धानकमेव स्पष्टीकृत्याह—

गन्धानाख्ये छन्दसि सप्तदशाक्षराणि स्थापयत प्रथमचरणे द्वितीयचरणे पुनर्यमकं दत्वाष्टादशाक्षराण्येव विजानीत। दोहा छन्दः॥

९६. गन्धाणामुदाहरति—

कश्चित्कविः कर्णनरपतिं स्तौति—कर्णे राजनि सङ्ग्रामार्थं चलति सति कूर्मः पुनरशरणः सश्चलति स्थानभ्रष्टो भवति। तस्मिश्चलति भुवनभयंकरा मही चलति। मह्या चलन्त्या महीधरा मेर्वादयश्चलन्ति। तथा च सति तदाश्रिताः सुरजनाः देवसंघाश्चलन्ति। एवं कर्णे चलति दिक्चक्रं चलति। तथा त्रिभुवनं चलति। इतस्ततो भ्रमतीत्यर्थः। उट्टवणिका यथा—ऽ।।, ऽऽ, ऽ।।, ।।।।, ।।।।, ऽ, ऽ।।, ऽऽ, ।।।।, ।।।।, ।।।।, ऽ, ।।।।, ऽऽ, ।।।।, ।।।।, ।।ऽ, ऽ।।, ।।ऽ, ऽ।।, ।ऽ।, ।।।।, ।ऽ, गन्धाणा निवृत्ता।

९७. अथ चउपइआ छंदा—अथ चतुष्पदीछन्दः—

चतुष्पदीछन्दो भणति फणीन्द्रः। चतुर्मात्रिकान्सप्त गणान्पादे सगुरून्कृत्वा त्रिंशन्मात्रा धृत्वा चतुःशतमशीतिश्च निरुक्ता। चतुर्षु छन्दःसु योजनीयमेकं न करणीयम्। को जानात्येनं भेदम्। कविः पिङ्गलो भाषते। मृगनयनेऽमृतमेतत्। अयमर्थः—चतुष्पदीछन्दः एतत्पदचतुष्टययुक्तमेकं चरणम्, एतादृशपदचतुष्टयं तादृशं छन्द इत्यभिप्रायः। तत्र चतुर्मात्रिकाः सप्तगणा भवन्ति, पादान्ते च सर्वत्र गुरुः कर्तव्यः। एवं च त्रिंशन्मात्राः पादे भवन्तीति फलितोऽर्थः। एवं च सति विंशत्यधिकं मात्राशतकं चरणचतुष्टयेऽपि भवति। तत्सर्वमेवैकमेव चरणं तदभिप्रायेणात्र मात्राणां चतुःशती साशीतिर्निरुक्ता, तदेकलं न कर्तव्यं चतुश्छन्दोयुक्तमेव कर्त्तव्यमिति। वाणीभूषणे तु विंशत्युत्तरं शतमात्रात्मकमेवोक्तम्—'चौपइयावृत्तं त्रिंशन्मात्रं फणिपति पिङ्गलगीतं, कुरु सप्ततुरगममतिहृदयङ्गममन्ते गुरुमुपनीतम्। यदि दशवसुरविभिश्छन्दोविद्भिः क्रियते यतिरभिरामं, सपदि श्रवसमये नृपतिः कवये वितरति सपदि कामम्॥' इदमप्युदाहरणम्।

९८. ग्रन्थगौरवभयाच्चतुष्पदिकायाः पादमेकमुदाहरति—जहा (यथा)—

स इति प्रसिद्धो भवानीकान्तो युष्मभ्यं संपदं ददातु। बहुसुखं च करोतु। स कः। यस्यशीर्षे गङ्गा स्फुरति। यस्यार्धाङ्गे गौरी वसति। येन ग्रीवायां परिधृतः

फणिहारः । यश्च कण्ठस्थितविषः । यस्य पिधान वासो दिक् । दिगम्बर इत्यर्थः । सतारितस्तारकोपदेशात् ससारो येन तथाभूतः । यश्च किरणावलीना दीप्तिकदम्बाना कन्द उत्पत्तिस्थानम् । 'यद्भासा सर्वमिदं भासते' इति श्रुतेः । नन्दित आनन्दितो हर्षयुक्तश्चन्द्रो यस्मिन् । यस्य नयने भालस्थतार्तीयलोचने अनलो ज्वलनः स्फुरन् । अस्ति इति शेषः । उट्टवणिका यथा—IIS, IIS, SS, IIS, SII, IIII, IIS, S, SS, IIS, SS, IIS, SS, SII, SS, S, IIS, IIS, SS, IIS, SII, IIII, IIS, S, SS, IIS, IIII, IIS, IIS, IIS, SS, S, चौपइया निवृत्ता ।

९९. पिङ्गलकविना द्वाषष्टिमात्राकया कृत्वा अत्युत्कटं घत्तानामक छन्दो दृष्टम् । अत्र चतुर्मात्रिकान् सप्तगणान् द्वयोरपि पादयोस्त्रींस्त्रील्लँघूनन्ते धृत्वा भण । अयमर्थः—घत्ता द्विपदी तत्र चतुष्कलाः सप्तगणास्त्रिलघ्वन्ताः । द्वयोरपि चरणयोः समुदिता मात्राश्चतुःषष्टिः कर्तव्या इति । भूषणेऽपि 'इह चतुष्कलगणनिर्मितपद त्रिलघुविराम भवति यदि । नागाधिपपिङ्गलभणितसुमङ्गलघत्तावृत्तमिद द्विपदि ॥' इदमप्युदाहरणम् ॥

१००. एतस्यैव सविश्रामं लक्षणान्तरमाह—

प्रथमे चरणे प्रथम दशसु मात्रासु विश्रामः । द्वितीयस्थले अष्टसु । तृतीयस्थले त्रयोदशसु मात्रासु विरतिः । इत्येकत्रिंशत्कलात्मकः प्रथमश्चरणः । एवं द्वितीयोऽपि । सभूय द्वाषष्टिः कला इत्यर्थः । गाहू छन्दः ॥

१०१. घत्तामुदाहरति—जहा ( यथा )—

रणदक्षः सग्रामकुशलः, दक्षस्य हन्ता, जितकुसुमधन्वा जितकदर्पः । अन्धकस्यासुरस्य गन्धस्यापि विनाशकरः । गौरीनारीमर्धाङ्गे धारयति यः । तादृशोऽसुरभयकरः स शभुर्युष्मान्रक्षतु । उट्टवणिका यथा—IIS, ISI, IIS, IIII, IIS, IIS, IIS, III, SS, IIS, IIII, IIS, IIS, ISI, SS, III, घत्ता निवृत्ता ॥

१०२. अथ त्रिभेदेन घत्तानन्दमाह—

ततश्छन्दो घत्तानाम । सुच्छन्दःसु कुलेन सार जातिश्रेष्ठम् । मात्रात्मकमित्यर्थः । 'जातिर्मात्राकृता भवेत्' इत्युक्तत्वात् । तत्किम् । यत्र प्रथममेकादशसु मात्रासु विश्रामः । पुनरपि सप्तसु । ततस्त्रयोदशसु मात्रासु विश्रामो भवति । तत्कीर्त्या अपारः, अपारकीर्त्तिर्वा, नागराजः पिङ्गलो घत्तानन्दनाम कथयतीति योजना । वाणीभूषणेऽपि—'एकादशविश्रामि तुरगविश्रामि यदि घत्तावृत्त भवति । छन्दो घत्तानन्दमिदमानन्दकारि नागपतिरिति वदति ॥' इदमप्युदाहरणम् ॥

१०३. अत्रैव गणनियममाह—

आदौ षट्कलं गणं स्थापयतु। ततस्त्रींश्चतुष्कलान्दत्थ। तदनन्तरं पञ्चकलं चतुष्कलयुगलं च गणं दत्वा घत्तानन्दं छन्दो जानीत। दोहा छन्दः ॥

१०४. घत्तानन्दमुदाहरति—जहा ( यथा )—

यो वन्दितः शीर्षो गङ्गया। येन हतोऽनङ्गः। यश्चार्धाङ्गे परिकरं कलत्र धृतवान्। अतएव युवतिजनचित्तहरः। स शिवो जयतीति भावः। कीदृशः। दुरितशङ्काहरः। स्मरणमात्र इति भावः। पुनश्च यः शीर्षस्थितयापि गङ्गया वन्दित इत्युत्कर्षः सूचितः। पुनर्येन अनङ्गः कदर्पो हतः। यस्त्वधिक्षिप्य हन्यते स पूर्वं लक्ष्या ताड्यत इति भावः। पुनः पश्चादर्धाङ्गे परिकरधरः पार्वतीं धृतवान् उट्टवणिका यथा—ऽऽ।।, ।।ऽ, ।।।।, ।ऽ।, ऽऽ।, ।।।।, ।।।।, ऽऽऽ, ।।ऽ, ।।।।, ।ऽ।, ऽऽ।, ।ऽ।, ।।।।, घत्ता णिव्वुत्ता ॥

१०५. अथ छप्पअ—( अथ षट्पदच्छन्दः )—

इतश्च षट्पदप्रकरणमारभ्यते—षट्पदं छन्दो विदग्धाः शृणुत। अक्षरसंयुक्तम्। एकादशकलासु तस्य विरतिः। तदनन्तर त्रयोदशसु कलासु विश्रमो निर्भ्रमम्। द्वे मात्रे धृत्वा प्रथम ततः पुनश्चतुश्चतुष्कलाः क्रियन्ते। मध्यस्थित एको गणः। एव चतुष्कलाः पञ्च। हेट्ठ चरणान्ते सर्वत्र लघुद्वय दीयते। पश्चादुल्लालचरणयोर्द्वाभ्यां पञ्चदशभ्या विरतिः। अष्टाविंशतिमात्रिकौ च चरणौ भवतस्तौ। अत्र सर्वत्रानुक्तस्थले उर्वरितकलासु विश्रामसख्या ज्ञेयेति। एवं जानीत। गुणयन्तु षट्पदपदे मदुक्तलक्षणादन्यथात्र न किमपि भवति। अयमर्थः—पूर्वं मात्राद्वयम्। ततश्चतुष्कलाः पञ्च। अधस्तु मात्राद्वयम्। एवं पदचतुष्टय विधेयम्। अनन्तरमुल्लालछन्दसि पञ्चदशसु मात्रासु त्रयोदशसु विश्रामः तादृश पदद्वयमष्टाविंशतिकलात्मकम्। एवं काव्यं पदचतुष्टयेन उल्लालपदद्वयेन द्वाभ्या छन्दोभ्या षट्पदं भवति। इदमप्युदाहरणम् ॥

१०६. षट्पदमुदाहरति—जहा ( यथा )—

कश्चित्कविर्वीरहम्मीरसुभटस्य जज्जलाख्यस्य सोत्साहं प्रतिज्ञामुपवर्णयति—यथा मया परिधृतो दृढः सनाहः। तुरगोपरि संनाहं दत्त्वा, बन्धून् सभावयित्वा, एषोऽहं रणेऽवतीर्णः, साहिम्मीरवचनं गृहीत्वा, उडुपेऽन्तरिक्षे नभःपथे भ्रमामि। खड्गेनानेन रिपुशीर्षाणि प्रति क्षयामि। सनाहेनैव सनाहमपहस्तयित्वा पर्वतानप्यास्फालयामि। हम्मीरकृते जज्जलो राजपुत्र एव वदति। कोपानलमध्येऽहं ज्वलामि। 'सुलतानः सुरत्राणोऽल्लावदीनः ( जल्लालदीन्द्रः ) तच्छीर्षे करवाल दत्वा त्यक्त्वा च कलेवरं दिवं चलामीति प्रतिज्ञां करोमीति जज्जलस्य वचनम्। उट्टवणिका यथा—ऽ।।।।, ऽऽ, ।ऽ।, ऽ।।, ऽ।।, ।।, ऽ।।।।, ।।।।, ।ऽ, ऽऽ, ।।।।, ।।,

SIIII, IIII, ISI, IIS, IIS, II, SIIS, IIS, ISI, SII, SS, II, SS, ISI, SS, III, SS, IIII, IIII, I, IIS, ISI, IIS, III, SII, SSI, IIII, I

१०७. एतस्यैव प्रकारान्तरेण लक्षणमाह—

पदे पदे प्रतिचरणाधस्तान्निबद्धमात्राश्चतुर्विंशतिः क्रियन्ते। अक्षराडम्बरः सदृश एव भवति। इत्यमुना प्रकारेण कृतं छन्दः शुद्धं भण्यते। तत्र गणनियममाह—आदौ षट्कलो गणो भवति। ततश्चत्वारश्चतुष्कला निरुक्ताः। द्विकलं चान्ते स्थापयन्तु। शेषकविना तद्वस्त्विति नामान्तर निरुक्तम्। मात्रासंख्यामाह—संभूय द्विपञ्चाशदधिकं मात्राशतकं १५२ जानीत। उल्लालेन सहैव गणयन्तु। एतेन काव्यस्य षण्णवत्या ९६ उल्लालस्य षट्पञ्चाशता ५६ संभूय द्विपञ्चाशदधिकं शतमित्यर्थः। भोः शिष्याः, किमिति ग्रन्थग्रन्थन कृत्वा म्रियध्वमिति। भूषणेऽपि—'षट्कलयादौ तदनु चतुस्तुरगं परिसंतनु, शेषे द्विकलं कलय चतुष्पदमेव सचिनु, छन्दः षट्पदनाम भवति फणिनायकगीतम्, रुद्रे विरतिमुपैति तु पतिसुखकरमुपनीतम्। उल्लालयुगलमत्र च भवेदष्टाविंशतिकलमिदम्, शृणु पञ्चदशे विरतिस्थित पठनादपि गुणिगणहितम्।' इदमप्युदाहरणम्॥

१०८. वस्तुनामक षट्पदमुदाहरति—जहा ( यथा )—

यथा शारदः शशिबिम्बः, यथा हरहारहसस्थितिः, यथा फुल्ल सितकमलम्, यथा खण्डीकृतः श्रीखण्डः, यथा [ गङ्गा ] कल्लोलः, यथोज्ज्वलीकृत रौप्यम्, यथा दुग्धवरे मुग्धफेनः। 'फफाइ' इत्यनुकरणम्। ऊर्ध्वं गत्वा स्फुरति। प्रियात्प्राप्य प्रसादहृष्टिं पुनः स्मित्वा हसति यथा तरुणीजनः। तथा हे चण्डेश्वर, राज्ञो वरमन्त्रिन्, तव कीर्त्तिः स्फुरति। इति तथ्यं पश्य। हरिब्रह्मनामको कविर्भणति। क्वचित् 'पुणु विहसि' इति स्थले 'पलु णिहुइ' इति पाठः, तत्र दृष्टिं पातयित्वा अर्थात्प्रिये निभृतं यथा स्यात्तथा हसतीति। उट्टवणिका यथा—ISIII, IIS, IIS, IIS, ISI, II, ISSI, IIII, IIS, IIS, ISI II, ISSI, SS, IIS, SS, IIS, II, ISSI, IIS, ISI, SS, IIS, II, IIS, IIS, SS, IIII, IIII, IIII, IIII, IIS, IIS, IIS, IIS, ISI, IIS, III, षट्पदच्छन्दः खलु छन्दोद्वयेन भवति। काव्यपदचतुष्टयेनोल्लालपदद्वयेनेति॥

१०९. काव्यमात्रालक्षणमाह—

आदावन्ते च यत्र षट्कलगणो गणद्वयस्थाने। मध्ये यत्र तुरगमाश्चतुष्कलास्त्रयो गणाः, तत्र तृतीयो जगणो भवति। किं वा विप्रगणश्चतुर्लघ्वात्मको गणः। तत्काव्यं छन्दः। एतल्लक्षण बुध्यस्व। यदा काव्याभिधेयमेव छन्दः क्रियते तदैव जगणस्तृतीयो भवति। लघूल्लालेन सम क्रियते तदा न नियमः। तत्र एकादशसु विश्राम इत्याशयः। दोहा छन्दः॥

१११. अथानन्तरं लघुद्वयह्रासेनैकैकगुरुवृद्ध्या काव्यस्य पञ्चचत्वारिंशद्भेदान् दर्शयिष्यन् सर्वलघुकं शक्रनामक वृत्तमाह—

चतुरधिकाश्चत्वारिंशद्गुरव एकैकगुरुवृद्धिक्रमेण दातव्याः। यद्गुरुहीनं सर्व-लघुकं तच्छक्रनामकं छन्दः। ततो लघुद्वयह्रासेन एकैकगुरुवृद्ध्या नामग्रहणं कुरुत। दोहा छन्दः ॥

१११. शक्रमुदाहरति—जहा (यथा)—

कश्चिद्भक्तः शिवं प्रार्थयते—यस्य तव करे फणिपतेः शेषस्य वलयः कंकणं विलसति। तनुमध्ये वरतरुणी पार्वती विलसति। नयने अलिकस्थतार्तीयलोचनेऽनलो ज्वलति। गले च गरलं विलसति। विमलः शशी निष्कलङ्कश्चन्द्रो यस्य तव शीर्षे निवसति सुरसरिन्मन्दाकिनी शिरसि वसति। एवंविध, हे सकलजन-दुरितदलनकर, शशिधर, हे हर, मम दुरितं हर। अथ च अतुलमभयवरं हसित्वा वितर। येनाहं कृतकृत्यो भवेयमिति भावः। अत्र प्रतिचरणं चतुर्विंशतिः कलाः सभूय षण्णवत्यो मात्राः ९६ ज्ञातव्याः। विरतिरेकादशे त्रयोदशे च। लघुकं शक्रनामकं छन्दः ॥

११२. पुनः सौकर्यार्थं सावधिकं भेदमाह—

यथा यथा वलयो गुरुर्वर्धते तथा तथा नामानि भेदान् कुरु। शम्भुमारभ्य गणभृङ्गमवधीकृत्य गणय। चतुश्चत्वारिंशन्नामानि जानीहि। दोहा छन्दः ॥

११३, ११४. नामान्येवाह—जहा (यथा)—

यानि गुरुवृद्ध्या नामानि तानि। कथ्यन्ते इति शेषः। यथा—

| | | |
|---|---|---|
| ० गुरु | ९६ लघु | शक्रः। |
| १ गुरु | ९४ लघु | शम्भुः। |
| २ गुरु | ९२ लघु | सूर्यः। |
| ३ गुरु | ९० लघु | गण्डः। |
| ४ गुरु | ८८ लघु | स्कन्धः। |
| ५ गुरु | ८६ लघु | विजयः। |
| ६ गुरु | ८४ लघु | दर्पः। |
| ७ गुरु | ८२ लघु | तालाङ्कः। |
| ८ गुरु | ८० लघु | समरः। |
| ९ गुरु | ७८ लघु | सिंहः। |
| १० गुरु | ७६ लघु | शेषः। |
| ११ गुरु | ७४ लघु | उत्तेजाः। |

| | | |
|---|---|---|
| १२ गुरु | ७२ लघु | प्रतिपक्षः। |
| १३ गुरु | ७० लघु | परिधर्मः। |
| १४ गुरु | ६८ लघु | मरालः। |
| १५ गुरु | ६६ लघु | मृगेन्द्रः। |
| १६ गुरु | ६४ लघु | दण्डः। |
| १७ गुरु | ६२ लघु | मर्कटः। |
| १८ गुरु | ६० लघु | मदनः। |
| १९ गुरु | ५८ लघु | महाराष्ट्रः। |
| २० गुरु | ५६ लघु | वसन्तः। |
| २१ गुरु | ५४ लघु | कण्ठः। |
| २२ गुरु | ५२ लघु | मयूरः। |
| २३ गुरु | ५० लघु | बन्धः। |
| २४ गुरु | ४८ लघु | भ्रमरः। |
| २५ गुरु | ४६ लघु | द्वितीयो महाराष्ट्रः। |
| २६ गुरु | ४४ लघु | बलभद्रः। |
| २७ गुरु | ४२ लघु | राजा। |
| २८ गुरु | ४० लघु | वलितः। |
| २९ गुरु | ३८ लघु | रामः। |
| ३० गुरु | ३६ लघु | मन्थानः। |
| ३१ गुरु | ३४ लघु | बली। |
| ३२ गुरु | ३२ लघु | मोहः। |
| ३३ गुरु | ३० लघु | सहस्राक्षः। |
| ३४ गुरु | २८ लघु | बालः। |
| ३५ गुरु | २६ लघु | दृप्तः। |
| ३६ गुरु | २४ लघु | शरभः। |
| ३७ गुरु | २२ लघु | दम्भः। |
| ३८ गुरु | २० लघु | अहः। |
| ३९ गुरु | १८ लघु | ऊद्दम्भः। |
| ४० गुरु | १६ लघु | वलिताङ्कः। |
| ४१ गुरु | १४ लघु | तुरगः। |
| ४२ गुरु | १२ लघु | हरिणः। |
| ४३ गुरु | १० लघु | अन्धः। |
| ४४ गुरु | ८ लघु | भृङ्गः। |

एतेषु चतुश्चत्वारिंशद्भेदाः शक्रेण सह पञ्चचत्वारिंशद्वास्तूकापरनाम्नः काव्यस्य । हे मुग्धे, छन्दःप्रबन्धः छन्दसा प्रकर्षेण बन्धो यस्मात् एवंविधः पिङ्गलनागो जल्पति । इदं प्राकृतसूत्रम् ।

११५. पुनस्तामेव संख्यामाह—

वास्तुकापरनाम्नि काव्याख्ये छन्दसि शक्रादयः पञ्चचत्वारिंशच्छन्दोभेदा विजृम्भन्ते इति पिङ्गलः कविरद्धा साक्षात्कथयति । हरिहरब्रह्मभिरपि न चलति । तैरप्यन्यथाकर्तुं न शक्यत इत्यर्थः । दोहा छन्दः । एतेषामुदाहरणान्युदाहरणमञ्जर्यामवगन्तव्यानि ॥

११६. अथ षट्पदस्य काव्यस्य दोषानाह—

पदे चरणे अशुद्धः प्राकृतव्याकरणदुष्टः पगुरित्यभिधीयते । हीनमात्रया खञ्जो भण्यते । मात्राधिको वातुलः । तेन शून्य फलं कर्णेन श्रूयते । तथा झकारलकाराभ्यां वर्जितो बधिर इत्यभिधीयते । उपमाद्यलंकाररहितोऽन्धोऽभिधीयते । उद्दवणिकाया यदा पञ्चकलस्त्रिकलो वा भवति तदा वूलः । मूक इत्यर्थः । अर्थेन विना दुर्बलः कथ्यते । हठाकृष्टकटोराक्षरैः डेरः । केकर इत्यर्थः । श्लेषादिगुण रहितः काणः । सर्वैरगैः शुद्धः समरूपगुणः षट्पदच्छन्दः ॥

११७. अथ लघुसंख्याभेदेन वर्णमुपदिशन् प्रतिपदमात्रासंख्या पिण्डसंख्या च कथयन् षट्पदस्याप्येकसततिर्भवन्तीत्याह—

द्वात्रिंशल्लघुभिर्विप्रो भवति । ततो द्विचत्वारिंशद्भिर्लघुकैः षट्पद क्षत्रियो भवति । ततोऽष्टचत्वारिंशदवधिकैर्वैश्यो भवति । उर्वरितैः शेषैः शूद्रो भवति । इति तं सलहिज्जसु सुश्लाघ्यं कुरु । उल्लालरहितायाश्चतुष्पद्याः पदे चतुरधिका विंशति मात्राः स्थापयः । एव च पिण्डसंख्या मात्राषण्णवतिरूपा पादचतुष्टये स्थापय । ततश्च पञ्चचत्वारिंशन्नामभिः काव्यलक्षणं कुरु । अथोल्लालच्छन्दसः षड्विंशति गुरूनेकीकृत्य पादद्वयाभ्यां षट्पद जानीत । तथा च षट्पदस्यापि एकसप्तति नाम्नानि परिशृणु । पञ्चचत्वारिंशन्नामानि काव्यस्य, षड्विंशतिरुल्लालाया संभूय एकसप्ततिरिति । षट्पदी छन्दः ॥

११८. अथोल्लालालक्षणम्—

प्रथम तुरगमास्त्रयश्चतुष्कलगणास्त्रयः, ततस्त्रिकलः, तदनन्तरं षट्कलः, ततः चतुष्कलः, ततस्त्रिकलः, संभूयाष्टाविंशतिः कलाः प्रथमचरणे । एवमुल्लालामुद्दवणिकया सदृशां कुर्वन्तु । तथा च द्वाभ्यां दलाभ्या षट्पञ्चाशन्मात्रा भवन्ति । दोहाच्छन्दः ॥

११९. अथ शाल्मलीप्रस्तारं दर्शयिष्यंस्तत्र पूर्वं सर्वगुरुभेदमुदाहरति—

जहा ( यथा )—

यस्य शिवस्य जाया पार्वती अर्धाङ्गे । तिष्ठतीति शेषः । यस्य शीर्षे गङ्गा लुठति । कीदृशी । सर्वाशाः पूरयन्ती । दुःखानि त्रोटयन्ती । यस्य नागराजो हारः । यस्य दिग्वासोऽन्तः । दिगेव वाससो वस्त्रस्याऽन्तोऽञ्चलं यस्य । यस्य सङ्गे वेतालाः । तिष्ठन्तीति शेषः । पिशाचसहचर इत्यर्थः । दुष्टान्नाशयन् उत्साहेन नृत्यन् ताण्डवं कुर्वन्, तालैर्भूमिः कम्पिता येन । अथ च यस्मिन् दृष्टे मोक्षः स शिवो युष्माक सुखदोऽस्तु ॥

१२० अथैकसप्ततिभेदानयनप्रकारमाह—

चतुश्चत्वारिंशद्गुरवः काव्यस्य, षड्विंशतिरुल्लालायाः सम्भूय सप्ततिः । तेषु यदेकैकक्रमेण गुरुर्ह्रसति, लघुद्वय वर्धते तदा सप्ततिसंख्याका भेदा भवन्ति । सर्वशेषे च सर्वलघ्वात्मकमेकम् । एवमेकसप्ततिप्रस्तारः । दोहा छन्दः ॥

१२१ तदेवाह—

अजयनाम्निषट्पदे द्व्यशीत्यक्षराणि । तत्र विवेकः—सप्ततिर्गुरवः, रविसंख्याका रेखा लघवः, ततो यावद्द्विपञ्चाशदधिकशताक्षरं तावदेकैकमक्षरं सर्वलघुप्रभेदान्तं वर्धते । एकोगुरुर्ह्रसति । लघुद्वय वर्धते । अन्यथा परिपाट्या यावत्सर्वलघुर्भवेत्तावल्लघुकान् देहि । इति प्रथमो भेदः ।

१२१, १२३. अथ तानुदाहरति—

यथा=

| | | | |
|---|---|---|---|
| ७० गुरु | १२ लघु | ८२ अक्षर | अजयः । |
| ६९ गुरु | १४ लघु | ८३ अक्षर | विजयः । |
| ६८ गुरु | १६ लघु | ८४ अक्षर | बलिः । |
| ६७ गुरु | १८ लघु | ८५ अक्षर | कर्णः । |
| ६६ गुरु | २० लघु | ८६ अक्षर | वीरः । |
| ६५ गुरु | २२ लघु | ८७ अक्षर | वेतालः । |
| ६४ गुरु | २४ लघु | ८८ अक्षर | बृहन्नलः । |
| ६३ गुरु | २६ लघु | ८९ अक्षर | मर्कटः । |
| ६२ गुरु | २८ लघु | ९० अक्षर | हरिः । |
| ६१ गुरु | ३० लघु | ९१ अक्षर | हरः । |
| ६० गुरु | ३२ लघु | ९२ अक्षर | ब्रह्मा । |
| ५९ गुरु | ३४ लघु | ९३ अक्षर | इन्दुः । |
| ५८ गुरु | ३६ लघु | ९४ अक्षर | चन्दनम् । |
| ५७ गुरु | ३८ लघु | ९५ अक्षर | शुभकरः । |

| | | | |
|---|---|---|---|
| ५६ गुरु | ४० लघु | ९६ अक्षर | श्वा। |
| ५५ गुरु | ४२ लघु | ९७ अक्षर | सिंहः। |
| ५४ गुरु | ४४ लघु | ९८ अक्षर | शार्दूलः। |
| ५३ गुरु | ४६ लघु | ९९ अक्षर | कूर्मः। |
| ५२ गुरु | ४८ लघु | १०० अक्षर | कोकिलः। |
| ५१ गुरु | ५० लघु | १०१ अक्षर | खरः। |
| ५० गुरु | ५२ लघु | १०२ अक्षर | कुञ्जरः। |
| ४९ गुरु | ५४ लघु | १०३ अक्षर | मदनः। |
| ४८ गुरु | ५६ लघु | १०४ अक्षर | मत्स्यः। |
| ४७ गुरु | ५८ लघु | १०५ अक्षर | तालाङ्कः। |
| ४६ गुरु | ६० लघु | १०६ अक्षर | शेषः। |
| ४५ गुरु | ६२ लघु | १०७ अक्षर | सारङ्गः। |
| ४४ गुरु | ६४ लघु | १०८ अक्षर | पयोधरः। |
| ४३ गुरु | ६६ लघु | १०९ अक्षर | कुन्दः। |
| ४२ गुरु | ६८ लघु | ११० अक्षर | कमलम्। |
| ४१ गुरु | ७० लघु | १११ अक्षर | वारणः। |
| ४० गुरु | ७२ लघु | ११२ अक्षर | शरभः। |
| ३९ गुरु | ७४ लघु | ११३ अक्षर | जङ्गमः। |
| ३८ गुरु | ७६ लघु | ११४ अक्षर | द्युतीष्टम्। |
| ३७ गुरु | ७८ लघु | ११५ अक्षर | दाता। |
| ३६ गुरु | ८० लघु | ११६ अक्षर | शरः। |
| ३५ गुरु | ८२ लघु | ११७ अक्षर | सुशरः। |
| ३४ गुरु | ८४ लघु | ११८ अक्षर | समरः। |
| ३३ गुरु | ८६ लघु | ११९ अक्षर | सारसः। |
| ३२ गुरु | ८८ लघु | १२० अक्षर | शारदः। |
| ३१ गुरु | ९० लघु | १२१ अक्षर | मेरुः। |
| ३० गुरु | ९२ लघु | १२२ अक्षर | मदकरः। |
| २९ गुरु | ९४ लघु | १२३ अक्षर | मदः। |
| २८ गुरु | ९६ लघु | १२४ अक्षर | सिद्धिः। |
| २७ गुरु | ९८ लघु | १२५ अक्षर | बुद्धिः। |
| २६ गुरु | १०० लघु | १२६ अक्षर | करतलम्। |
| २५ गुरु | १०२ लघु | १२७ अक्षर | कमलाकरः। |

| | | | |
|---|---|---|---|
| २४ गुरु | १०४ लघु | १२८ अक्षर | धवलः । |
| २३ गुरु | १०६ लघु | १२९ अक्षर | मनः । |
| २२ गुरु | १०८ लघु | १३० अक्षर | ध्रुवः । |
| २१ गुरु | ११० लघु | १३१ अक्षर | कनकम् । |
| २० गुरु | ११२ लघु | १३२ अक्षर | कृष्णः । |
| १९ गुरु | ११४ लघु | १३३ अक्षर | रञ्जनम् । |
| १८ गुरु | ११६ लघु | १३४ अक्षर | मेघकरः । |
| १७ गुरु | ११८ लघु | १३५ अक्षर | ग्रीष्मः । |
| १६ गुरु | १२० लघु | १३६ अक्षर | गरुडः । |
| १५ गुरु | १२२ लघु | १३७ अक्षर | शशी । |
| १४ गुरु | १२४ लघु | १३८ अक्षर | सूर्यः । |
| १३ गुरु | १२६ लघु | १३९ अक्षर | शल्यः । |
| १२ गुरु | १२८ लघु | १४० अक्षर | नवरङ्गः । |
| ११ गुरु | १३० लघु | १४१ अक्षर | मनोहरः । |
| १० गुरु | १३२ लघु | १४२ अक्षर | गगनम् । |
| ९ गुरु | १३४ लघु | १४३ अक्षर | रत्नम् । |
| ८ गुरु | १३६ लघु | १४४ अक्षर | नरः । |
| ७ गुरु | १३८ लघु | १४५ अक्षर | हीरः । |
| ६ गुरु | १४० लघु | १४६ अक्षर | भ्रमरः । |
| ५ गुरु | १४२ लघु | १४७ अक्षर | शेखरः । |
| ४ गुरु | १४४ लघु | १४८ अक्षर | कुसुमाकरः । |
| ३ गुरु | १४६ लघु | १४९ अक्षर | दीपः । |
| २ गुरु | १४८ लघु | १५० अक्षर | शङ्खः । |
| १ गुरु | १५० लघु | १५१ अक्षर | वसुः । |
| ० गुरु | १५२ लघु | १५२ अक्षर (१५२ मात्रा) | शब्दः । |

इति ज्ञात्वा मनसि विचारयित्वा नागराजः पिङ्गलः कथयति । इत्येकसप्ततिः षट्पदाना नामानि । छन्दस्कारः प्रस्तार्य लभते । नामभेदानिति शेषः ॥

१२४. षट्पदच्छन्दसि नामसख्यानयनप्रकारान्तरमाह—

यावन्तः सर्वे लघवो भवन्ति । द्विपञ्चाशदधिकशतकला इत्यर्थः । तासु कलास्वर्धं विसर्ज्य । अवशिष्टा षट्सप्ततिः । तास्वपि शरसख्या विसर्ज्य । एव सति यावत्योऽवशिष्यन्ते । प्रकृते एकसप्ततिः । एतत्प्रमाणाणि नामानीति दोहाछन्दः । एतेषामुदाहरणान्युदाहरणमञ्जरीतोऽवगन्तव्यानि क्रमेण । षट्पद निवृत्तम् ॥

१२५. अथ पज्झडिआ ( अथ पज्झटिका छन्दः )—

चतुर्मात्रिकांश्चतुरो गणाश्चतुःस्थाने चतुश्चरणे स्थापयित्वा नियमेन पयोधरं चतुष्कल चतुर्थे स्थापयित्वा । एवं पदचतुष्टयेन चतुःषष्टिभिः ( दृष्ट्वा ) मात्राभिः पज्झटिका भवति । यथा इन्दुश्चन्द्रमाः षोडशकलाभिरमृतं क्षरति तथा षोडशमात्राभिरेकचरणोऽस्याः पीयूषवर्षी भवतीति भावः । तथा सति षोडशकलैव पज्झटिकानामकं छन्दो निष्पाद्यते इति । भूषणेऽप्युक्तम्—'चत्वारि चतुष्कलानि देहि, तत्रापि जगणमन्ते विधेहि । भणिता फणिनायकपिङ्गलेन, पज्झटिकेय षोडशकलेन ॥' इदमप्युदाहरणम् ॥

१२६. पज्झटिकामुदाहरति—जहा (यथा)—

कश्चित्कविः कर्णं स्तौति—कर्णस्य पराक्रम कोऽपि बुध्यते । अपि तु न कोऽपि । येन गञ्जितो गौडाधिपतिः । यस्य भयेन उद्दण्ड उद्गनदण्डोऽपि उड्डीसो उत्कलेशः पलायितः । गुरुर्विक्रमो यस्यैवं विक्रमो येन युद्धे जितः । तस्मात्कस्तव पराक्रम जानीयादिति भावः । उट्टवणिका यथा—SS, IIS, SII, ISI, SS, ISI, IIII, ISI, IIS, IIS, IIII, ISI, SS, IIS, IIS, ISI,

१२७. अथाडिल्लाछन्दः—

अत्र षोडशमात्राः पादे लभ्यन्ते । द्वयोरपि दलयोर्यमकौ भवत इति कलया भवति । न पयोधरः जगणः कथमपि । अन्तेषु चतुर्ष्वपि चरणेषु सुप्रियो लघुद्वयात्मको गणो भवति यत्र तच्छन्दोऽडिल्लानामकमित्यर्थः । भूषणेऽप्युक्तम्—'छन्दसि षोडशकले विलासिनि, प्रतिपदमन्ते यमकविलासिनि । अडिल्लनामपयोधरधारिणि, शेषे नियत लघुद्वयधारिणि ॥' इदमप्युदाहरणम् ।

१२८. तामुदाहरति—जहा ( यथा )—

येन कर्णेन [आ] सावरी देशः मार्गणेभ्यो दत्तः । येन च सुस्थिरं डाहरराज्य पार्वतीयान्विजित्य गृहीतम् । येन च कालजरे दुर्गे कीर्त्तिः स्थापिता । येन च धनमावर्ज्य धर्मार्थमेवार्पितमर्थिभ्यः । स कर्णो जयतीति वाक्यशेषः ॥ उट्टवणिका यथा—IIS, SII, SS, SII, SII, SII, SS, SII, SS, IIII, SS, SII, IIS, SII, SII, SI

१२९. अथ पादाकुलकं छन्दः—

यत्र लघूनां गुरूणा वा एकोऽपि नियमो नास्ति । पदे पदे उत्तमरेखा भवन्ति । अन्तरान्तरा लघुर्गुरुश्च भवतीत्यर्थः । अथ च सुकवेः फणीन्द्रस्य पिंगलस्य कण्ठवलय कण्ठाभरण षोडशमात्रं पादाकुलकं छन्दो भवतीति । भूषणेऽपि—'अक्षरगुरुलघुनियमविरहित, भुजगराजपिंगलपरिभणितम् । भवति सुगुम्फितषोडशकलक, वाणीभूषण पादाकुलकम् ॥' इदमप्युदाहरणम् ।

१३०. तदुदाहरति—जहा (यथा)—

कस्यचिद्विदूषकस्य वचनम्—सेरमात्रं यदि प्राप्यते घृतं तथा मण्डकान् विंशतिं पचामि नित्यम्। तत्र टङ्कमात्रं यदि सैन्धवं लवणं प्राप्तं तदा य एवाहं रङ्कः स एवाहं राजा उट्टवणिका यथा—ऽ।ऽ।।।ऽ।।ऽऽ, ऽऽऽ।।ऽ।।ऽऽ, ऽ।ऽ।।।ऽ।।ऽऽ, ऽ।।ऽ।ऽ।।।ऽऽऽ यथा वा—मलयपवनहृतकुसुमपरागः, परभृतनिभृतरणितवनभागः। चिरतरसंचितमानदुरन्तः, कस्य न मुदमुपनयति वसन्तः॥'

१३१. अथ चउवोलाछन्दः—

षोडशमात्राभिर्द्वौ चरणौ प्रथमतृतीयकौ प्रमाणयत। द्वितीये चतुर्थे चरणे च चतुर्दशमात्राः। एवं षष्टिमात्राभिश्चतुष्पदं जानीत॥

१३२. चउवोलामुदाहरति—

कस्याश्चित्तरूण्यामासक्तस्य [कस्यचित्] वचनम्—हे धणि हे वनिते, मत्तमतङ्गजगामिनि, हे खञ्जनलोचने, हे चन्द्रमुखि, यतश्चञ्चलमिदं यौवनं हस्तस्थितजलमिव गच्छन्न जानासि। अतः छइलेभ्य अस्मदादिविटेभ्यः कुतो न समर्पयसि। अहो ते भ्रम इति भावः॥ उट्टवणिका यथा—ऽ।।ऽ।।ऽ।।ऽ।-ऽ।ऽ।।ऽ।।ऽ, ऽ।।ऽ।।ऽ।।ऽ।।, ।।।।ऽ।।ऽ।।ऽ

१३३. अथ रड्डाछन्दः—

प्रथमे पदे पञ्चदश मात्रा विरचय। पदे द्वितीये द्वादश। तृतीयस्थाने पञ्चदशमात्रा जानीत। चतुर्थे एकादशमात्राः। पञ्चमे पञ्चदशमात्रा आनयन्तु। एवं पञ्चपदेषु अष्टषष्टिं मात्रा पूरयन्तु। अग्रे दोहा दत्थ। राजसेनो नाम राजा सुप्रसिद्धामिमा रड्डा भणति। इदमप्युदाहरणम्।

१३४. एतस्या एव गणनियममाह—

विषमे पदे प्रथमतृतीयपञ्चमे प्रथमं त्रिकलं स्थापयन्तु। ततस्त्रयः पदातयः चतुष्कलगणाः क्रियन्ताम्। अत्र प्रथमपादस्यान्ते नरेन्द्रो भगणः। किंवा विप्रगणं चतुर्लघ्वात्मको भवति। ततोऽपरत्र समे द्वितीये चतुर्थे च द्वे मात्रे प्रथमतो दत्त्वा त्रयः पदातयः चतुष्कलास्त्रयोगणाः, पूर्वस्थापितमात्राद्वयेन सह कर्तव्या इत्यर्थः। सर्वेषु पदेषु लघुमन्ते विसर्जयन्तु। चतुर्थे चरणे विचारयित्वा कार्यः। उट्टवणिका विधाय तुरीयचरणे एकं लघुमाकृष्य गृह्णन्तु। तेन चतुर्थे चरणे एकादशैव कलाः। अतस्तृतीयो गणस्त्रिकलस्त्रिलघ्वात्मको भवति, इत्येवं पञ्चसु पादेषु उट्टवणिकां कृत्वा अष्टषष्टिमात्राश्च पूरयित्वा वस्तुभूतं तच्छन्दसो नाम पिंगलः करोति। 'वस्तु' इत्येतस्यैव नामान्तरम्। वापां (?) स्थापयित्वा दोषहीनं दोहाचरणं राजसेनो नाम राजा रड्डामिति भणति। षट्पदोच्छन्दः॥

१३५. तामुदाहरति—जहा ( यथा )—

काचित्प्रोषितभर्तृका समागतं वसन्तमवलोक्यात्मानं शोचति—यथा हे सखि, मधुकरो भ्रमरो भ्रमति। स्फुटितमरविन्दम्। विकसितमित्यर्थः। नवकिंशुककाननं च पुष्पितम्। अथ च सर्वदेशे पिकः पञ्चमं कूजति। शीतलपवनो मलयानिलः मलयकुहरस्थनववल्लीमभिनवलतां प्रेरयित्वा लघु मन्दं वहति। एव वसन्ते जाते सति चित्तं च मनोभवशरो हन्ति। दूरे दिगन्तरे कान्तः। कथमिदानीमात्मानं स्थापयिष्यामि। एवं पतितं दुरन्तं दुःखमिति। एतस्या एवान्यत्र नवपदमिति नामान्तरम्। उट्टवणिका यथा—III, IIII, SII, ISI, IIS, ISI, IIII, SI, SII, ISI, SII, IIII, IIII, III, III, IIII, ISI, SII, SIIS, IIII, III, SIIS, IIS, I, SIIS, IIS. III, IIIII, IIS, ।

१३६. अथैतस्य छन्दसः सप्तभेदा भवन्तीति नामतस्तानुद्दिशति—
करभी, नन्दा, मोहिनी, चारुसेना, भद्रा, राजसेना, तालङ्किनी, इति प्रिये सप्त भेदा वस्त्वपरनामकरड्डाच्छन्दसो निष्पन्नाः। दोहाच्छन्दः॥

१३७. तेषां लक्षणमाह—

प्रथमतृतीयपञ्चमपदेषु यस्यास्त्रयोदश मात्राः। अथ च द्वितीयचतुर्थयोरेकादश मात्राः। एवं पञ्च पदानि, एतदग्रे दोहा यस्यास्ता करभीं भणति। दोहाच्छन्दः॥

१३८. यस्याः प्रथमतृतीयपञ्चमपादेषु चतुर्दश मात्रा। द्वितीयचतुर्थयोरेकादश, ता विचार्य दोहा च दत्वा नन्दां भणति। दोहाच्छन्दः॥

१३९. प्रथमतृतीयपञ्चमपदेषु नव दश ऊनविंशतिर्मात्राः यस्या द्विचतुर्थे एकादश। अग्रे दोहा यत्र ता मोहिनीं जानीहि। दोहाच्छन्दः॥

१४०. प्रथमतृतीयपञ्चमपदेषु मात्राः पञ्चदश। द्वितीयचतुर्थयोरेकादश। सदोहा तां चारुसेना जानीहि। दोहाच्छन्दः॥

१४१ प्रथमतृतीयपञ्चमपदेषु पञ्चदश। द्वितीयचतुर्थयोर्द्वादश मात्रा दत्वा दोहां भद्रानाम्नीं कथय। दोहाच्छन्दः॥

१४२. प्रथमतृतीयपञ्चमपदेपु पञ्चदश मात्राः, द्वितीये द्वादश, चतुर्थे-एकादश, तस्यान्ते दोहा, ता राजसेनां भण॥

१४३. प्रथमतृतीयपञ्चमपदेपु षोडश मात्राः, द्वितीये द्वादश, चतुर्थे एकादश, अन्ते दोहा यस्यास्ता तालङ्किनीं भणति। एतेषामुदाहरणानि सुबुद्धिभिः स्वयमूह्यानि। इति रड्डाप्रकरणम्।

१४४. अथ पद्मावती छन्दः—

यस्याः स्थाने स्थाने चतुर्ष्वपि चरणेषु चतुर्मात्रिकाश्चतुष्कला गणा अष्टौ भवन्ति। सा पद्मावती भण। के के गणा इत्याह—कर्णः गुरुद्वयात्मको गणः। करतलः गुर्वन्तश्चतुष्कलः। विप्रः चतुर्लघ्वात्मको गणः। चरणः आदिगुरुर्भगणाख्यः। ध्रुवं निश्चितम्। एत एव गणाः पौर्वापर्येण वसुसख्याकाः पादे पादे उत्कृष्टाः कार्याः। अत्र 'ध्रुवधम्मो' इति क्वचित्पाठः। तत्र धर्मो युधिष्ठिरः, तेन कुन्तिपुत्रत्वाद्गुरुद्वयं विवक्षितम्। अत्र यदि पयोधरो जगणः पतति तदा किमिय मनोहरा, (मनोहरा) न भवतीत्यर्थः। अथ च यस्य कवित्व क्रियते तस्य नायकस्य तथा गुण पोड़यति, पितर त्रासयति, कवित्वस्य पिता कविरेव विवृणोति—कविमुद्वासयति, तस्मादत्र छन्दसि अय जगणश्चण्डालचरित्रः सर्वथा त्याज्यः। उक्त च भूषणे—'यत्राष्टचतुष्कलगणनिर्मितपदकरपदकर्णद्विजविहिता, सा पद्मावतिका विबुधसुमहिता जगणविरहिता सुकविहिता। इह दशवसुभुवनैर्भवति विरामः सकलाभिमतफलाय तदा, फणिनायकपिङ्गलभणितसुमङ्गलरसिकमनःसंविहितमदा ॥'

१४५. पद्मावतीमुदाहरति—जहा (यथा)—

कश्चित्कविः काशीश्वरस्य राज्ञो विजयप्रयाणमनुवर्णयति—वगा वगदेशीया भयेन पलायिताः। अथ च कलिंगाः कलिंगदेशस्थाः तेऽपि भग्नाः। तैलगा अपि रणं त्यक्त्वा चलिताः। धृष्टा महाराष्ट्राः। एकत्रीभूय लग्नाः काष्ठाः। लग्नाः दिश इत्यर्थः। सौराष्ट्राः भयेनागत्य पादे पतिताः। अथ च चम्पारण्यदेशीयानां कम्पो जातः। पार्वतीया उत्थी उत्थी उपर्युपरि जीवानां मनुष्याणा हरे गृहे एव झम्पा निलीनाः। जीवगृहे गोप्यस्थले झम्पा निलीना इति वा। एतत्प्रतापतपनभयादुलूका इव स्थिता इत्यर्थः। उट्टवणिका यथा—॥ऽ, ॥ऽ, ऽऽ, ॥ऽ, ऽऽ, ऽऽ, ॥ऽ, ॥ऽ, ॥ऽ, ऽऽ, ऽऽ, ॥ऽ, ऽऽ, ऽऽ, ॥ऽ, ॥ऽ, ऽऽ, ॥ऽ, ऽऽ, ॥ऽ, ऽऽ, ऽऽ, ऽऽ, ॥ऽ,

१४६. अथ कुण्डलिकाछन्दः—

प्रथम द्विपथालक्षणं पठित्वा काव्येनार्धं निरुक्त्वा कुडलिकां जानीत। कीदृशीम्। उल्लालेन सयुक्ताम्। उल्लालनमेव उल्लालः परावर्तन, तेन युक्तमेव पद पुनः पठेदित्यर्थः। ननु षट्पदवदुल्लालेन छन्दसा युक्तामिति, तस्मात् सिहावलोकनन्यायेन निकटवर्तिना पदेन शुद्ध यमक श्लाघ्यते। तत्राष्टसु पदेषु कियत्यो मात्रा इत्याकाङ्क्षायामाह—चतुश्चत्वारिंशदधिकं शतं मात्रा यत्र भवन्ति। सुकविना दृढो बन्धः कथ्यते। दोहाया अष्टचत्वारिंशत्, काव्यस्य षण्णवतिर्मिलित्वा चतुश्चत्वारिंशदधिकशत कलाः तनुभूषणशोभा यस्यास्ता कुण्डलिका मुणहु जानीत। एतेनाष्टपदी कुण्डलिकेति तात्पर्यार्थः। तथा चोक्तं भूषणे—

कुण्डलिका सा कथ्यते प्रथम दोहा यत्र।
रोलाचरणचतुष्टय प्रभवति नियत तत्र ॥
प्रभवति नियत तत्र पद प्रति सुललितयमकम्।
अष्टपदी सा भवति विविधकविकौशलगमकम् ॥
अष्टपदी सा भवति सुखितपण्डितमण्डलिका।
कुण्डलिनायकभणितविबुधकर्णे कुण्डलिका ॥'

इदमप्युदाहरणम् ॥

१४७. तामुदाहरति—( जहा ) यथा—

कश्चिद्बन्दी वीरहम्मीरप्रयाणमनुवर्णयति—यदैव दिल्लीमध्ये प्रयाणडिण्डिमः समाहतस्तदानीमेव मूर्च्छितं म्लेच्छशरीरैः। अनन्तरं च पुरस्कृतजज्जलमन्त्रिवरः चलितो वीरहम्मीरः। ततश्च हस्त्यश्वपदातिचरणभरेण मेदिनी कम्पते। दिङ्मार्गे नभसि चान्धकारः स्फुरति। धूलिः सूर्यरथमाच्छादयति। एव दिङ्मार्गे नभःपथे चान्धकारो विस्तृतिमानीतः। खुरासानस्य ओलो दण्डः, हेराजन् त्वं चरणमद (दं) नेन दमसि (दाम्यसि) विपक्षान्। किमुत सग्रामेण। एवं यस्य तवाहतो डिण्डिमो दिल्लीमध्ये इति' उट्टवणिका यथा—SSS, IIS, III, SIIS, IIS, I, IISS, SS, III, IIISI, SS, I, IIISI, SS, ISI, IIS, IIS, II, IIIIII, SS, ISI, SII, IIS, II, IIIIII, SS, ISI, IIS, IIS, S, IIIIII, IIS, ISI, SS, IIS, S।

१४८. उट्टवणिकामेव स्पष्टीकरोति—

प्रथममेव द्विपथाचतुष्पद ततश्चतुष्पद काव्यस्य दत्थ। एव कुण्डलिकामष्टपदीं पदे पदे यमक च कुरुत। दोहाच्छन्दः ॥

पशुपतिस्तु आदौ दोहा। ततः सोरट्ठा, अर्थाद्विपरीतदोहा। ततः काव्यमिति कुण्डलिकालक्षणमाह। तस्मिन्पद्ये एकशत द्विनवतिर्मात्रा भवन्ति ॥

१४९. अथ गगनाङ्गन छन्द—

मात्राविभूषितमिदं भवतु। कथ्यते इति शेषः। अस्य च ज्ञात्वा पद पद स्थापयत। अत्र प्रतिपद विंशतिः कलाः शराधिकाः पञ्चविंशतिः कलाः करणीयाः। लघुगुरुभ्या शोभिताः। सर्वत्र पादान्ते लघुगुरू दातव्यावित्यर्थः। अत्रैव गणनियममाह—चतुर्ष्वपि चरणेषु प्रथम मात्राश्चतस्रो यस्मिन्नेतादृशश्चतुष्कलो गणः कार्यः। अग्रे च यथासुख गणैः प्रकाशितमक्षरनियममाह—विंशत्यक्षराणि सकलेषु पादेषु तथा चरणचतुष्टये च गुरुः, एव यस्य तद्गगनाग छन्द इति। इदमप्युदाहरणम् ॥

१५०. उक्तामेवोट्टवणिका स्पष्टीकृत्याह—

चतुर्ष्वपि चरणेषु प्रथमं चतुष्कलो गणः। चरणान्ते हारो गुरुर्देयः। अथ (त्र) चाक्षराणि विंशतिः। भण पठ। मात्राः पञ्चविंशतिः। एव गगनागन छन्दो विचारय ॥ दोहा छन्दः ॥ उट्टवणिका यथा—||||, |||ऽ|||ऽ||ऽ||ऽ'ऽ, ऽ|||||, |||||ऽ|ऽ, ||||, ऽ|ऽ|||ऽ|||||ऽ|ऽ, ऽऽ, ||||||||||ऽ|'ऽ|ऽ। वाणीभूषणे तु मात्रागणनियमोन्यथाक्षरनियमो नास्तीत्युक्तम्। यथा—'षट्कलमादौ विरचय शेषे रगणविभूषितं, मध्ये नियमविहीन द्वादशके यतिसंगतम्। फणिपतिपिंगलभणित कविकुलहृदयरञ्जन, पञ्चाधिकविंशतिकलं वृत्तमिद गगनागनम् ॥'

१५१. गगनांगनमुदाहरति—जहा (यथा)—

भग्नो मलयपतिः। चोलपतिर्निवृत्तः। गञ्जितो गुर्जरपतिः। मालवराजो मलयगिरौ लीनः। परित्यज्य कुञ्जरान्। खुरासानाधिपती रणमध्ये खुह्रिअ विक्षोभ प्राप्य अहितसागर लंघते स्म। यद्वा अधिक यथा स्यात्तथा। हम्मीरे चलिते सति हारावो रिपुषु कातरेषु पतितः। उट्टवणिका यथा—ऽ||, |||, ऽ||, |||, |ऽ|, |ऽ|, ऽ, ऽ||, ऽ||, |||, ऽ||, ||, ||ऽ, |||, |||, ||ऽ, ||ऽ|, ऽ, ऽऽ, |||, |ऽ|, |||, |||, |||, ऽ|, ऽ।

१५२. अथ द्विपदीछन्दः—

आदिस्थ इन्दुः षट्कलो गणः प्रथम यत्र भवति। ततो दीयन्ते त्रयो धनुर्धरा श्चतुष्कलगणा यत्र। तथा पदातियुगल परिसंस्थापयन्तु। एव विधितो विचित्र-सुन्दरमितिच्छन्दोविशेषणम् सरस्वत्याः सकाशात्प्रसाद गृहीत्वा तथा पृथिव्या कुरुत कवित्व कविजनाः। मधुरो गुरुस्त चरणान्ते दत्थ। एतादृशं द्विपदीछन्दो जानीत बुधाः। अत्रेद लक्षणद्वय [द्विप] दीद्वयेन ज्ञातव्य न तु पदचतुष्टयम्। द्विपदीति नामविरोधात्तथोदाहरणाच्च। अत्रेन्दुर्यद्यपि लघुद्वयगुरुद्वयात्मकः (||ऽऽ) षट्कलस्तथापि षट्कलमात्रोपलक्षणः लक्ष्ये तथैव दर्शनात् ॥

१५३. उक्तामेवोट्टवणिका दोहाच्छन्दसा स्पष्टीकृत्याह—

षट्कल मुखे स्थापयित्वा ततश्चतुष्कलान्पञ्चगणान्कुरुत। अन्ते च एकहारो गुरुस्त दत्वा द्विपदीछन्दः कथयतु। भूषणेऽपि—'आदौ षट्कलसगतमेतत्तदनु पञ्च-चतुष्कलम्। गुर्वन्त द्विपदी भवतीह हि विंशत्यष्टकलदलम् ॥' इदमप्यु-दाहरणम् ॥

१५४. तामुदाहरति—जहा (यथा)—

दानवदेवौ द्वावपि सग्रामार्थमेकदा परस्पर मिलितौ। अत एव गिरिवरस्य सुमेरोः शिखर कम्पितम्। अथ च हयगजपादघातोद्भूतधूलिभिर्गगन च विशेषेण पिहितम्। उट्टवणिका यथा—ऽ||ऽ, |ऽ|, ऽऽ, ||||, ||||, |ऽ|, (२८) ||||ऽ, |ऽ|, |ऽ|, |ऽ|, ||||, |ऽ|, ऽ (२८)।

१५५. अथ झुल्लहणा छन्दः—

प्रथमं दश मात्रा दीयन्ते। अर्थात्तत्र विरतिः क्रियते। पुनरपि तथा कर्त्तव्या। पुनरपि सप्तदशमात्रासु विरतिर्जाता च। अनयैव रीत्या दलद्वयेऽपि मात्राः सप्तत्रिंशत्पतन्ति यत्र तामिमां नागराजः पिंगलो झुल्लाणामिति कथमिति। इदमप्युदाहरणम् ॥

१५६. तामुदाहरति—जइ (यथा)—

सहस्रं मत्तान् नागान्। सहस्रशब्दोऽसख्य.तवाची। लक्षं लक्षं सनद्धानश्व-वारान् सज्जीकृत्य साहिदुपाति (?) साहिद्वय कन्दुकमिव खेलति। अतिसुन्दर-सगर रचयतीत्यर्थः। अतो हे प्रिय, आकुश्य गज़ (?) तत्र स्थापयित्वा विमल-यशो मह्यां कोऽपि तुरुष्को हिन्दू वा त्वा न जेष्यति। काचिन्महाभटं स्वभर्तार-मुत्साहयति ॥ उट्टवणिका यथा—।।।ऽ।।।, ऽ।।ऽ।।।, ऽ।।। ऽ।ऽ, ऽ।ऽऽ (३७) ऽ ।।ऽ।।।, ऽ।।। ।।। ।।, ।।।।ऽ।।।, ।।।ऽऽ (३७)

१५७. अथ खञ्जा छन्दः—

यत्र निश्चितं धृत्वा पूर्वं द्विजवरस्य चतुर्लघुकचतुष्कलस्य नव गणान् हे कमल-नयने, विबुधजनमनः सुखयति। जुय (?) च्छन्दः। तत्र यथाशशी रजन्यां शोभते रगणो नवद्विजगणोपरि शोभते। हे गजवरगमने, पुनरपि विरतिः पदद्वयेपि नव विप्रगणः पश्चाद्रगण इति खञ्जाछन्दः। वरः श्रेष्ठः फणिपतिर्भणति। [ हे ] बुधजनमनोमोहकं तत्स्मरेति। इदमप्युदाहरणम् ॥

१५८. एतदेव दोहाछन्दसा स्पष्टीकृत्याह—

यदत्र दलद्वये नव गणा विप्राश्चतुर्लघ्वात्मका पतन्ति। अन्ते जोहल रगणं स्थापयतु। संभूयैकचत्वारिंशन्मात्राः खञ्जाछन्दसः पतन्ति गास्तत्र दश पतन्तीति जानीति। भूषणेऽपि—'द्विजवरनवगणमुपनय तदनु च विमलकमलदलमृदुल-सुतनु रगणमिह खञ्जके। द्विदलममलमिति फणिवरनृपतिनिगदित [ मिद ] मतिशयगुणसहृद [ यहृदयसु ] रञ्जके ॥' इदमप्युदाहरणम् ॥

१५९. तामुदाहरति—जहा ( यथा )—

कस्यचित्समरमनुवर्णयति—परकटकभारेणाहिः शेषो ललति चलति। स्थानभ्रष्टो भवतीत्यर्थः। अतएवावष्टम्भकाभावान्मही चलति। तस्मादेकगिरिः कैलाशः पतति। तदाश्रयो हरः स्खलति। अत एव शशी घूर्णते। घूर्णनेनामृतं वमति। अतोऽमृतसम्पर्कादेव मृता अपि सुभटा जीवित्वोत्तिष्ठन्ति। ततश्च भूमिस्ता-दृशभारवती भवति। अतः शेषाहिः पुनरपि तरति। पुनः स्खलति, पुनर्ललति। पुनर्घूर्णते, पुनर्वमति। पुनश्चजीविता विविधाः परितः समरे दृष्टा भटाः। अत्र

महीचलने शेषचलनं हेतुः । कैलासपतने महीचलनमित्युत्तरोत्तरं प्रति पूर्वस्य हेतुत्वमिति ·····अलंकारः । उट्टवणिका यथा—IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIII, ऽIऽ ( ४१ ) IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIII, ऽIऽ ( ४१ )=( ८२ ) ।

१६५. अथ सिक्खा ( शिखा ) छन्दः—

हे शशिवदने, हे गजगमने, यत्र पदे पदे द्विजगणषट्क भवति । तदुपरि पयोधरेण जगणेन सशिखम् । उपरिस्थितजगणमित्यर्थः । एवविध प्रथमदलं पठ । पश्चाद्द्वाभ्या द्वाभ्या लघुभ्या प्रकटितोऽधिक एको द्विजगणो:लभ्यते । तेन द्वितीये दले सप्तविप्रगणानन्तर यत्र जगणो भवति स इति प्रसिद्धः । शेषस्तच्छिखानामक छन्दो भणति । इदमप्युदाहरणम् ॥

१६१. उक्तलक्षणमेव गाहूछन्दसाह—

यत्राष्टाविंशतिर्मात्राः प्रथमे दले भवन्ति । द्वितीयदले द्वात्रिंशन्मात्राः । पदयोरन्ते लघुर्यत्र तच्छुद्ध शिखाछन्दो विजानीत ॥ भूषणेऽपि—'द्विजवरमिह हि रसगुणितमुपनय तदनु जगणमपि विधेहि । स्वरगणितमिह परदलमधिकुरु फणिनरपति सुभणितरुचिरशिखा हि ॥' इदमप्युदाहरणम् ॥

१६२. तानुदाहरति—जहा ( यथा )—

काचित्प्रोषितभर्तृका सखीमाह—हे सखि, पुष्पिता मधुका भ्रमराः । स्थिताः पुष्पेषु इति शेषः । किंच रजनीप्रभोश्चन्द्रस्य किरणा बहवो विशेषतः अत्र इदानीं पुनर्वसन्त इत्यर्थः । परमसतापका इति भावः । अथ च मलयाचलकटककोटरमभिव्याप्य पवनो वहति । अत एवैतत्सर्वं सोढव्य कथमिति त्वमेव भण । निकटे नास्ति कान्तः । अतो यदुचित भण ॥ उट्टवणिका यथा—IIII, IIII, IIII, IIII, IIII, IIII, ISI, IIII, IIII, IIII, IIII, IIII, IIII, ISI,

१६३ अथ मालाछन्दः—

हे शशिवदने, हे मृगनयने कर्णो गुरुद्वयात्मको गणो भवति । शेषं द्वितीयचरण गाथाया अर्ध यस्मिस्तन्मालाछन्दः पिङ्गलनागो भणति ॥ इदमप्युदाहरणम् ॥

१६४. उक्तलक्षणमेव दोहाच्छन्दसाह—

यत्र प्रथम नव विप्रगणाः ततो जोहल रगणः पुनर्गुरुद्वयम् । एवं पञ्च चत्वारिंशन्मात्राः पश्चाद्गाथायाः अर्ध सप्तविंशतिर्मात्राः उत्तरार्धे यत्र तन्मालाछन्दः ॥ तथा चोक्त वाणीभूषणे—'द्विजवरनवगणमतिशयसुरुचिरमिह कुरु तदनु रगणमपि कलय कमलमुखि कर्णवच्छेषे ॥ अपरदल गाथाया मालावृत्त विचित्रं तत् ॥' इदमप्युदाहरणम् ॥

१६५. तामुदाहरति—जहा ( यथा )—

काचित्प्रोषितभर्तृका वर्षासमयमालोक्य सखीमाह—हे सखि, वर्षति जलम् । भ्रमति घनः । शीतलः पवनो मनोहरणः । वहति इति शेषः । किं च [क] नकपीता नृत्यति विद्युत् । नीपाः [ फुल्लिताः ] एवंविधेऽपि समये जाते प्रस्तर-विस्तारहृदयो महापाषाणहृदयः प्रिय इदानीमपि नायाति । अतः किं विधेयमुप-दिशेति व्यज्यते ॥ उट्टवणिका यथा—।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ऽ।ऽ, ऽऽ, ( ४५ ) ऽ।।, ऽ।।, ।।ऽ, ।।ऽ, ऽ।ऽ, ऽ ( २७ ) ।

१६६. अथ चुलिआलाछन्दः—

तच्चुलिआलानामक छन्दः । यदि दोहाया उपरि पञ्च मात्रा अधिका दीयन्ते । तदेवाह—पदे पदे उपरि शुद्धः कुसुमगण एको लघुः, ततो गुरुः, ततो लघुद्वयम् । एवंरूपं पञ्चकलं स्थापयन्तु । 'पदे पदे' इत्युक्ते दोहापदचतुष्टयेऽपि पञ्चकल-दानं........आह—सपञ्चकलो गणोऽन्ते द्विपदाप्रथमदलान्ते चरमदलान्ते च दीयते । एतेनार्धे ऊनत्रिंशन्मात्रा भवन्ति । एवं दलाभ्यामष्टपञ्चाशन्मात्राश्चुलि-आलाछन्दसो भवन्ति ॥ इदमप्युदाहरणम् ॥

१६७. उक्तलक्षणमेवाह—

दोहासंख्या संस्थापयन्तु । उपरि पञ्चैव मात्राः । एवमष्टादशोपरि चत्वारिंश-न्मात्राः सम्भूयष्टपञ्चाशन्मात्राभिश्चुलिआला आख्याता ॥ भूषणेऽपि—'दोहादलशेषे यदा पञ्चकलो विमलोहि विराजति । फणिवरनृपतिः किल तदा चुलिआलामिह तामनुगायति ॥' इदमप्युदाहरणम् ॥

१६८. तामुदाहरति—जहा ( यथा )—

हे मित्र, राजा [लु]ब्धः, समाजः खलः, वधूः कलहकारिणी, सेवको धूर्तः एवं सति यदि जीवनं सुखरूपं प्रार्थयसे तर्हि गृह परिहर । विरज्य सन्यासं कुरु । इति कश्चिद्गृहस्थ प्रति मित्रमाह । उट्टवणिका यथा—ऽऽऽ, ।।ऽ, ।।।, ।।।।ऽ, ।।ऽ, ।, ।ऽ।।, ऽ।।ऽ, ।।ऽ, ।।।, ।।।।।, ।।।।, ।, ।ऽ।।, इति चुलिआलछन्दः ॥

१६९. अथ सोरट्ठा छन्दः—

ता सोरट्ठां जानीहि । या विपरीतैव दोहा स्थिता । तत्र च पदे पदे यमक व्याख्येहि । इति नागराजपिङ्गलः कथयति । प्रथमचरणे एकादश, द्वितीये त्रयोदश, तृतीये एकादश, चतुर्थे त्रयोदशेति । भूषणेऽप्युक्तम्—'तत्सोरट्ठा वृत्तममलमुरगपतिरिति वदति । यद्दोहाविपरीतमिह जनहृदि मुदमुपनयति ॥' इदम-प्युदाहरणम् ।

१७०. तामुदाहरति—जहा ( यथा )—

कश्चित्कस्मैचिच्छ्लाघ्यते—स एव मान्यते पुण्यवान् यस्य तनयो भक्तः, अर्थात्पितुः, पण्डितश्च। यस्य च गृहिणी गुणवती स तु पृथिव्यामपि वर्तमानः स्वर्गनिलयोऽमरो भवति। उट्टवणिका यथा—SS||||S| (११) S|S|S||||(१३) S||||||S| (११) S||||S||||| (१३)

१७१. हाकलिछन्दः—

यत्र सगणो गुर्वन्तश्चतुष्कलः भगणो गुर्वादिः, द्विजगणश्चतुर्लघ्वात्मकश्चा अत एव व्यस्तसमस्ता गणा भवन्ति। अन्ते वक्र गुरुरेक संस्थाप्य मात्राश्चतुर्दश मिलित्वा वर्णाश्चैकादश पदे पदे उत्तरार्धे दश पतन्ति, तदिद हाकलिच्छन्दोरूपं कथितम्। इदमप्युदाहरणम् ॥

१७२. उक्तलक्षणमेव साक्षरनियममाह—

यत्र मात्राश्चतुर्दश पदे पतन्ति, एकादशवर्णैश्च पूर्वदल दशाक्षरैरुत्तरदलम् यत्र तद्धाकलिच्छन्दः कथय ॥ वाणीभूषणे त्वक्षरनियमो नोक्तः। 'द्विजगणसगण-भगणकलिता, भवति चतुर्दशकलकलिता। अन्ते गुरुमुपधाय सदा, हाकलिरेषा भवति तदा ॥' इदमप्युदाहरणम् ॥

१७३. तामुदाहरति—जहा ( यथा )—

उच्चा छदिः विमल गृह विनयपरा तरुणी चेद्गृहिणी यस्य वित्तैः पूरितं मूलगृह तस्य वर्षासमयाः सुखकरा भवन्ति। इति दरिद्रवचन वयस्य प्रति। उट्ट-वणिका यथा—S||S||||||S, ||S||S||||S, S |S||S|'S, ||SS||S||S

१७४. अथ मधुभारच्छन्दः—

यस्य पतति शेषे दलद्वयान्ते पयोधर एकः। जगण एकः। पततीत्यर्थः। तत्पश्चाच्चतुर्मात्रिका गणास्त्रयो यत्र तन्मधुभारच्छन्दः। वाणीभूषणे तु गणनियमो यद्यपि दर्शितस्तथापि चतुष्कलमात्रे पर्यवसन्नो ज्ञेयः। 'सगण निधाय जगण विधाय। श्रुतिसौख्यधाम मधुभारनाम ॥' इदमप्युदाहरणम् ॥

१७५ तामुदाहरति—जहा (यथा)—

यस्य चन्द्रः शीर्षे। यस्य परिधान दिशः। स शंभुरेव तुभ्य शुभ ददात्विति। उट्टवणिका [ यथा ]—||S, |S|, S||, |S|, SS, |S|, ||S, |S|,

१७६ अथाभीरच्छन्दः—

यत्रैकादश मात्राः प्रतिपद क्रियन्ते। यत्र चान्ते जगणो दीयते। एतच्छन्द आभीरनामकमिति जल्पति पिङ्गलः। भूषणेऽपि—एकादशकलधारि कविकुल-मानसहारि। इदमाभीरमवेहि जगणमन्तमभिधेहि ॥' इदमप्युदाहरणम् ॥

१७७. तामुदाहरति—जहा (यथा)—

उट्टवणिका यथा—SIISIISI, SIISIISI, SIISIISI, SIISIISI

१७८. अथ दण्डकला छन्दः—

कुन्तकरः, धनुर्धरः, हयवरः, गजवरः, चतुष्कलाश्चत्वारो गणाः ततः षट्कलो गणः, ततः पदातिद्वयं चतुष्कलगणद्वयम्, अन्ते गुरुरिति द्वात्रिंशन्मात्राः पदेषु प्रसिद्धा जानीत बुधजना हृदयतले । समुदितमात्रासख्यामाह—अष्टाविंशत्यधिकशतकलाः सपूर्णा यस्मिंस्तद्रूप फणिपतिभाषितं भुवने लोके दण्डकलेति निरुक्त गुरुसयुक्तमिदं छन्दः पिङ्गलो जल्पति । इदमप्युदाहरणम् ॥

१७९. तामुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी काशीश्वराहितानां पलायनमनुवर्णयति—हे काशीपते, तवाहिता राजानो भग्नाः पलायिता अतएव दिक्षु लग्नाः । किं कृत्वा । हयगजगृहगृहिणीः परित्यज्य । अथ च तासां पुरंध्रीणां लोहरहिं अश्रुभिः सरोवराः कासारा भृताः पूर्णाः । तन्मध्ये पट्टमहिषी काचिद् धरिण्या लुठति, रोदिति, तनुमाहन्ति, पुनरप्युत्तिष्ठति, सभलिअ अवधार्य । कथभूता । करे दत्तागुलेर्बालस्य तनयस्य करयमले करद्वये करो यस्याः । स्वकरेण विधृतबालकरद्वयेत्यर्थः । एव जाते सति काशीश्वरो राजा स्नेहलः स्नेहयुक्तः कायो यस्य । करेण दण्डेन पुनर्मांआं दया स्थापयित्वा धृतवान् शत्रुराज्यमित्युपरिष्ठादेतेन दण्ड गृहीत्वा तांश्च राज्ये प्रतिष्ठापयामास । उट्टवणिका यथा—SI SSS III SSS IIIIIIIIII S, SIIIIIIIIIIIIII SII SIIIII S, IISIISIIIISSIIS IIIIIIIII S, SSIISSSII SSIISSIISIIS ।

१८०. अथ दीपकछन्दः—

आदौ चतुर्मात्र गण देहि । तस्यान्ते एक लघु देहि । ततस्तयोश्चतुष्कलमध्ये ... ...त्रय......बुध्यस्व । तदुक्त भूषणे—'तुरगैकमुपधाय सुनरेन्द्रमवधाय । इह दीपकमवेहि लघुमन्तमभिधेहि ॥' इदमप्युदाहरणम् ।

१८१. जहा ( यथा )—

यस्य राज्ञो हस्ते करवालः खड्गः शोभते । कीदृशः । शत्रुकुलकालकल्पः । यस्य च शिरसि वरमुत्तम छत्र शोभते सपूर्णशशिवत् ॥ उट्टवणिका यथा—IISIII SISSIIISI, IISIIISISSIIISI.

१८२. अथ सिंहावलोकच्छन्दः—

भो गुणिगणाः, विप्रसगणाभ्यामेव प्रतिपद षोडश मात्रा धृत्वा भणन्तु सिंहावलोकन छन्दः । ध्रुवं निश्चित बुध्यस्व । नागो भणति । अत्र जगणो न भगणो न च कर्णगणो भवति । व्यस्तसमस्ताभ्या विप्रगणमेव षोडशकलं सिंहावलोकन छन्दो भवति । एतश्च शृङ्खलाबन्धनक्रमेण चरणान्तवर्णद्वयावलम्बनेन भवतीति

ज्ञेयम् । तथा चोक्तं वाणीभूषणेऽपि—'शृणु सिंहावलोकितवृत्तवरं वरयमकमनोहरचरणधरम् । धरणीपतिमानसमधिकलितं किल वेदचतुष्कलगणललितम् ॥' इदमप्युदाहरणम् ।

१८४. उक्तामेवोट्टवणिकां स्पष्टीकरोति—

अत्र छन्दसि विप्रगणसगणावेव द्वौ गणौ पदे पततः । ततोन्ते हारं गुरुं विसर्जय । सगणस्यान्ते गुरुत्वात् सगण एव पदान्ते देय इत्यर्थः । छन्दसोऽन्वर्थकतामाह—पदान्ते यदक्षरद्वयं तदेवाग्रिमपदादौ देयमित्यर्थः । अत एव सिंहावलोकनमिति ॥

१८८. तामुदाहरति—जहा ( यथा )—

कश्चित्कर्णमुपवर्णयति—हतमुज्ज्वलमतिस्फीतं गुर्जरराज्यस्य दल सैन्यम् । येन दलेन स्वसेनासमुदायेन दलितं चूर्णीकृतम्, अतएव चलित महाराष्ट्राणां बलं कटकम् । येन बलेन बलात्कारेण मोटितमुत्खात मालवराजस्य कुलम् । एवंविधः कुलोज्ज्वलः कलचुलिवंशोद्भवः कर्णः फुला स्फुरति । अथवा स्फुटं सत्यम् । कर्ण एव कलावतीर्ण इति भावः ॥ उट्टवणिका यथा—IIऽIIऽIIऽIIऽ, IIIIIIIIIऽII-ऽ, IIऽ IIऽ IIऽ IIऽ, IIऽ III III ऽऽ.

१८५. अथ प्लवगमच्छन्दः—

एतस्यैव चतुर्थचरणादौ परहा इति बन्दिनः पठन्ति (१) । हे मुग्धे, यत्र प्रथम षण्मात्रो गणः पदे पदे दृश्यते । ततश्च पञ्चमात्रश्चतुर्मात्रो गणो नान्यत्र क्रियते । अथ सस्मृत्यान्ते पदान्ते लघुर्गुरुश्च एकैकस्य चरणस्यान्ते चाहए अपेक्षते । एवमुक्तलक्षण तत्प्लवगमाख्यं छन्दो विचक्षणान्मोहयतीति । भूषणेऽपि—'षट्कलमादिगुरुं प्रथम कुरु सतत, पञ्चकल च ततोऽपि चतुष्कलसगतम् । नायकमत्र चतुर्थमितोगुरुमन्तके, एकाधिकत्रिंशतिः प्लवगमवृत्तके ॥' इदमप्युदाहरणम् ॥

१८६. उक्तमेव लक्षण विशदी कृत्याह—

........सकलेषु सस्कारेषु निर्भ्रमः पिङ्गलो भणति । तन्मात्राणामेकविंशत्या दृष्ट प्लवगमाख्य छन्दो भवति । गाथा छन्दः ॥

१८७. तमुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका सखीमाह—हे सखि, नृत्यति चञ्चला विद्युत् । उतान्यत्किंचिदेतदिति जानीहि । अह त्वेव मन्ये । मन्मथखड्गकणिका सज्जलधरशाणके इति । अपि च पुष्पिताः कदम्बाः । अम्बरडम्बरो मेघाडम्बरो दृश्यते । अतः प्रावृट् प्राप्ता । हे सुमुखि, घनाघनो वर्षुकघनो वर्षतीति वाक्योवाक्यम् ॥ उट्टवणिका यथा—ऽIIऽIIऽIIऽIIऽIऽ, ऽIIऽIIऽIIIIIऽIऽ, ऽIIऽIIऽIIऽIIऽIऽ, ऽIIऽIIऽIIIIIऽIऽ,

१८८. अथ लीलावती छन्दः—

यत्र छन्दसि लघौ गुरौ वा नियमो नास्ति। अक्षरेऽपि न नियमः। अत्र विषमे चरणे जगणः समेऽपि पयोधरो जगणः पतति। अत्र कोऽपि नियमो नास्तीत्यर्थः। तरलस्तुरगो यथा प्रसरति दिक्षु विदिक्षु अगम्ये गम्ये च। स्थले इति शेषः। तथा सुतरा परितो लीलया समन्ततः खेलया इय लीलावती परिचलति। करः कर्णो द्विजगणो भगणो जगण इति चतुष्कलाः पञ्चापि गणा निरन्तरमेकोपक्रमेण पतन्ति। तत्रान्ते ध्रुव निश्चित स······दिःयगणो भवति। किंच सा लीलावती द्वात्रिंशत्कलासु विश्राम करोति। लघुगुर्वपेक्षया गणेऽपि नियमो नास्ति। यथाकथचिद्द्व त्रिंशत्कलाः पूरयितव्याः। तथा च भूषणे—'गुरुलघुवर्णनियम विरहितमिह हि सुकलय चतुष्कलमष्टगण, द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयदुःखहरणम्। लीलावतिका भवति च करकर्णद्विजगणभगणजगणकलिता फणिनायकपिङ्गलविरचितमद्भुतवृत्तमगलगुम्फनललिता॥' इदमप्युदाहरणम्॥

१८९. तामुदाहरति—जहा (यथा)—

कश्चिद्बन्दी हम्मीरप्रयाण वर्णयति—यस्मिन्क्षणे वीरो हम्मीरश्चलितस्तस्मिन्नेक्षणे शत्रुगृहेषु लग्नोग्निः धहधहेति कृत्वा ज्वलति। नास्ति पन्था कुत्रापि। दिङ्मार्गोऽनलेन भृतः। तस्मिन्नेव च क्षणे सर्वदेशे प्रसृतः पदातिश्चलति। यः पदातिवर्गधनीना शत्रुवधूना स्तनौ गृह्णन् जघनादि द्विधा करोति। 'धण' इति धण्ण स्तनौ इति सपदातिश्चलतीति। यस्य हम्मीरस्य भैरवभेरीशब्दे पतिते सति पलायमानवैरितरुणीगणाः श्रान्ताः सन्तो भयेन क्वचिन्निलीनाः। रिपुरपि मह्या लुठति। शिरः पिट्टइ। आहन्तीत्यर्थः। त्रोटयति। केशानिति शेषः। उट्टवणिका यथा—।।ऽ, ।।ऽ, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।ऽ, (३२) ।।ऽ, ।।।।, ऽऽ, ।।।।, ।।।।, ।।।।, ।।ऽ, ।।ऽ, (३२) ।।ऽ, ।।ऽ, ।।ऽ, ।।।।, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, (३२) ।।ऽ, ।।ऽ, ।।।', ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, (३२)॥

१९०. अथ हरिगीताछन्दः—

भो शिष्याः, गणाश्चतुरः पञ्चकलान् स्थापयत। द्वितीयस्थाने षट्कल कुरुत। प्रतिपदमन्ते चैक गुरु कुरुत। छन्दः वर्णनेन सुतरा सर्वं लातीति तादृशम्। तत्र चरणेषु मात्रानियममाह—दश, चत्वारः, द्वौ, दश, पुनर्द्वौ, एतत्सर्वं मिलित्वा पादे अष्टाविंशन्मात्रा इति आनयन्तु। तदेतच्छन्दो हरिगीतानामक प्रसिद्ध पिङ्गलेन प्रकाशित जानीत॥ भूषणेऽपि—'इन्द्रासन प्रथम विसर्जय त'नु सञ्चिनु षट्कलं ननु तदनु पञ्चकलत्रय किल कुरु विरामे कुण्डलम्। अष्टाधिकामिह विंशतिं च कलाः कलावति सुन्दर हरिगीतनिति हरिगीतक वरवृत्तमतिरसमन्दिरम्॥' इदमप्युदाहरणम्॥

१६१. उक्तलक्षणमेवाह—

द्वितीयस्थाने एक षट्कलं कथयन्तु। अवशिष्टाश्चत्वारः पञ्चकला गणा देयाः। पिण्डसङ्ख्यामाह—द्वादशोत्तरं शतं मात्राः। पादचतुष्टयेऽपि मानसमेकं गुरुमन्ते स्थापयत। तेन प्रतिपदमष्टाविंशतिर्मात्राः॥

१६२. तामुदाहरति—जहा ( यथा )—

कश्चिद्वन्दी सङ्कुल युद्धमनुवर्णयति—गजा गजैर्युक्ताः, तरणिर्धूलिभरेण निलीनः तुरगास्तुरगैः सह युयुधिरे, रथा रथैर्योजिताः। अत एव धरणी पीडिता। तस्मिन्समये आत्मीयाः परकीयाश्च न ज्ञाताः। अथ बलानि मीलित्वा परस्परमेकीभूतानि। पदातयस्ततो धाविताः, अतएव पत्तिभरेण कम्पितानि च गिरिवरशिखराणि उच्छलति च सागरः। कातर्येण दीना दीर्णाः। कातरा इति वा। वैरमतिदीर्घं वर्धितम्। उट्टवणिका यथा—IIII, SIIII, SIII, IIIII, ISII, S, ( २८ ) IIIII, SIIII, ISII, SIII, IIIS, S, ( २८ ) IIIII, SIIS, ISII, SIII IISI, S, ( २८ ) SIII, SII, ISII, SIS, IISI, S, ( २८ )॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'सखि बम्भ्रमीति मनो भृश जगदेव शून्यमवेक्ष्यते परिभिद्यते मम हृदयमर्मं न शर्म सप्रति वीक्ष्यते। परिहीयते वपुषा भृश नलिनीव हिमततिसगता रुदती पर वदतीति सा सुदतीरतीशवशं गता॥'

१६३. अथ तिब्भगी ( त्रिभगी ) छन्दः—

अत्र प्रथम दशसु मात्रासु रहण विश्रामः, ततोऽष्टसु विरतिः, पुनरपि वसुषु विरतिः, ततो रसेषु षट्सु विरतिः, अन्ते पदचतुष्टयस्यान्ते यत्र गुरुः शोभते तच्छन्दस्त्रिभुवन मोहयति। सिद्धोऽपि वरतरुणोऽपि श्लाघ्यते इति तस्य च्छन्दसः प्रशसा। दोषमप्याह—यद्येतस्मिञ्छन्दसि पयोधरो जगणः पतति तदा किमिदं मनोहरम्। अपि तु नेत्यर्थः। किंच यस्य कवित्व क्रियते तस्य कलेवरं हरति कत्तरपि। तस्मादत्र जगणो न कर्तव्यः। एतत्त्रिभगीछन्दः सुखानन्दजनकं विमलमतिः फणीन्द्रो भणति। अत्र चरणे द्वात्रिंशन्मात्रा भवन्ति, अष्टौ चतुष्कला गणा भवन्ति॥ भूषणेऽपि—'प्रथम यदि दशम वदति विराम तदनु निकाम वसुवसुकं, चसुविमलतुरगममतिहृदयगम ह्रषितभुजगमनृपतिलकम्। त्रिंशद्द्विकलासविहितविलास सततनिवास हृदयमुदः, मदमुदितभुजङ्गीमोहनरङ्गी वदति त्रिभङ्गीवृत्तमदः॥' इदमप्युदाहरणम्॥

१६४. उदाहरति—जहा ( यथा )—

कश्चिद् भक्तः शिव स्तौति—भो लोकाः, एतादृश हर नमत। कीदृशम् शीर्षे कृता गगा येन। कृता गौरी अर्धांगे। हतोऽनगो येन। पुरस्य त्रिपुरस्य

दहनो यस्तम् । कृतः फणिपतेः शेषनागस्य हारो येन । त्रिभुवने सारं श्रेष्ठम् । विरचित भस्म येन विरचितभस्मालेपनरिपूर्णम् । रिपूणामन्धकगजादीना मथनम् । सुरेशैरिन्द्रादिभिः सेवितचरणम् । मुनिगणाना शरण रक्षितारम् । भवभयहरणं संसारभीतिनाशनमन्ते तारकोपदेशात् । शूलधरम् । आनन्देन सहितं वदन यस्य । सुन्दर रमणीय लोचन यस्य । गिरिवरः कैलाशस्तत्र शयन यस्य ॥ उट्टवणिका यथा—IIऽ, IIऽ, ऽऽ, IIऽ, ऽII, ऽII, ऽI', IIऽ, (३२) IIII, IIऽ, ऽII, IIऽ, ऽऽ, IIऽ, ऽII, IIऽ, ( ३२ ) IIऽ, IIII, ऽII, IIII, ऽII, IIII, ऽऽ, IIII, ( ३२ ) ऽऽ, IIII, ऽऽ, IIII, ऽII, IIII, ऽII, IIऽ, ( ३२ ) ॥ वाणीभूषणे यथा—विविधायुधमण्डित समरपण्डितरणपण्डितपाखण्डभटे चण्डासुरखण्डिनि पुरहरमण्डिनि शशधरखण्डिनि बद्धजटे । भवसागरतारिणि दुर्गतिहारिणि मंगलकारिणि मयि सुचिरं गिरिराजसुवासिनि शैलनिवासिनि शंभुविलासिनि देहि वरम् ॥'

१९५. अथ दुम्मिल ( दुर्मिला ) छन्दः—

हे नरा बुधजनाः, पिंगलः दुर्मिलका नामकं छन्दो भणति । तत्किम् । तद् त्रिशन्मात्राभिः परिसयुक्तम् । पाद इति शेषः । यच्च विश्राम्यति त्रिषु स्थानेषु एताहग्भागेषु विरतिर्भागत्रितयेषु । पदे पदे प्रतिपद दृश्यते कर्णगणो गुरुद्वयात्मकः तत्प्रथम विश्रामस्थान दशसु वे द्वितीय विरतिस्थान अष्टाश्रं अष्टम स्थानम् । ततश्चतुर्दशसु मात्रासु तृतीयविरत्या कृतनिलयम् । यदेताहशं त्रिभुवनवन्दितं छन्दः, तद्बुध्यध्वमहो जना इति पिङ्गलो भणति इति ॥ इदमप्युदाहरणम् ॥

१९६. उक्तलक्षणमेवाह—

दश-अष्ट चतुर्दशमात्रासु विरतिं कुर्वंतु । तत्र विश्रामे कर्णगणान्दत्थ । अन्तराले विप्राश्चतुर्लघुकाः पदातयः साधारणाश्चतुर्मात्रा गणास्तान्भणन्तु । एव दुर्मिला छन्दः कथयन्तु ॥ भूषणेऽपि—'द्वात्रिंशन्मात्र भवति पवित्रं फणिपतिजल्पितवृत्त, दशवसुभुवनैर्यतिरत्र प्रभवति कविकुलहृदयानन्दकरम् । यत्राष्टचतुष्कलकलित सकलपदमिति दुर्मिलनामधरं, नरपतिवरतोषणवन्दिविभूषणभुवनविदितक्षतापहरम् ॥' इदमप्युदाहरणम् ॥

१९७. तामुदाहरति—जहा ( यथा )—

कश्चित्कविः काशीश्वरप्रयाणमनुवर्णयति—येन धारा व्यूहः कृतः । अस्मिन्नेवान्तरे नृपालाः शत्रवो जिता एव । 'णेवाला' इति क्वचित्पाठः । तत्र नेपाला जिताः । भोटान्तदेशस्थो लोकः पीडयन्नुरः शिरश्च ताडयन्निर्गतः । भग्नाश्चीनाश्चीनदेशस्थाः । कीदृशाः । दर्पेण हीनाः । लोहावले देशे हाक्रन्दो हाहाकारः पतितः । उत्कल उड्डायितः । ततश्च कीर्त्तिरपि प्राप्ता । मोटितं च मालवराजस्य बलम् ।

तैलङ्गास्तु बहुतरऋणग्रस्ता भग्नाः पलायिनाः । एककाशीश्वरो राजा यस्मिन्क्षणे चलितः, तस्मिन्नेव क्षणे इयमवस्था जातेत्यर्थः ॥ उट्टवणिका यथा—SS, ||S, ||S SS, |S|, |S|, |S|, ||S, ( ३२ ) SS, ||S, SS, |S|, SS, S||, SS, ||S, ( ३२ ) SS, SS, ||S, SS, ||S, ||S, ||S, ||S, ( ३२ ) SS, SS, |||', ||S, ||S, S||, ||||, ||S, ( ३२ ).

१९८ अथ हीरच्छन्दः—

भोः शिष्य, हीरनामकमिदं छन्दो नागः पिङ्गलः प्रभणति तत्त्व शृणु । तत्र त्रीन् षट्कलगणान् कुरु । तस्यान्ते जोहल रगण कुरु । षट्कले विशेषमाह—हार गुरु पूर्वं स्थापयित्वा । हे सुप्रिय सुतरा ᳚िय शिष्य, हारानन्तरं विप्रगणैश्चतुष्कलैः सर्वलघुकैः शबलमिति च्छन्दोविशेषणम् । पदे कलासंख्यामाह—तिण्णीति त्रीन्धारय द्वौ कुरु 'अङ्कस्य वामा गतिः' इति गणिते त्रयोविंशतिः कलाः पादे भवन्तीत्यर्थः । अन्ते रगणं लेखय । कश्छन्दस्कार एतच्छन्दो जानाति । अपि तु न कोऽपि । दर्पेण गर्वेण हीरस्तु कविर्भणति अन्यः कः प्रेक्षते । अद्यावधि कस्यापि नयनगोचरो नाभवदिति भावः । अत्र च्छन्दःकविनाम्नोरैक्यमवगन्तव्यम् । इदमप्युदाहरणम् ।

१९९. उक्तमेवाह—

हे सुप्रिय शिष्य, पूर्वं हारं गुरु भण । ततो विप्रगणश्चतुर्लघुकः । स च त्रिधा भिन्नशरीरः । एव त्रिवारं कर्तव्यः । तदन्ते जोहलं रगण स्थापय । एव सति त्रयोविंशतिर्मात्रा हीरच्छन्दसः पदे पतन्ति समुदिता द्विनवतिर्मात्रासंख्या ॥ भूषणेऽप्युक्तम् 'वह्निरगणमन्त्यरगणमेकचरणशोभित, पश्य सुदति नागनृपतिरत्र वदति नो हितम् । रामभजनकालपठन एव रटनरञ्जन, हीरकमिति नाम भवति काममवति सज्जनम् ॥'

२००. हीरमुदाहरति—जहा ( यथा )—

धिक्कदलनेत्यादि घोटकगतिशब्दानुकरणम् । एव रङ्गे युद्धस्थाने रङ्गेण कौतुकेन वा चलन्ति तुरंगा धूलिधवलाः । हक्केण वीरकृतशब्दविशेषेणोपलक्षिताः सबलाः समर्थाः पक्षिण इव प्रबलाः प्रकृष्टबलाः पदातयोऽपि । चलन्तीति शेषः । एव कर्णे चलति सति कूर्मो ललति स्थानभ्रष्टो भवतीत्यर्थः । भूमिर्भ्रियते कीर्त्या । अत्र चतुर्ष्वपि चरणेषु 'ए ए' इति ससम्भ्रमाश्चर्ये ॥ उट्टवणिका यथा—S||||, S||||, S||||, S|S, ( २३ ) S||||. S||||, S||||, S|S, ( २३ ) S||||, S||||, S||||, S|S, ( २३ ) S||||, S||||, S||||, S|S, ( २३ ) ॥ वाणीभूषणेऽपि—'ध्यानमटत साम पठत नाम रटत केशव, धर्ममयन शर्म भजत कर्मसृजतशैशवम् । द्वारभवनदाररमणधारचयनवासना, तावदयति नावतरति कालनृपतिशासना ॥'

२०१. अथ जनहरणच्छन्दः—

हे विकचकमलमुखि, पदे पदे स्थापयित्वा कलाः, तत्र प्रथमं दशसु कलासु विरतिं कुरु। ततो वसुकलासु पुनरष्टसु पुनः पट्सु विरतिं कुरु। सर्वपदेषु मुनिद्विजगणान्देहि। विरामे सप्तगणान्ते सगण नियमेन देहि। एवमष्टौ गणान् कुरु इति श्रीफणिपतिः सुकविवरो भणति। दश त्रिगुणिताः कलाः कुरु। एव त्रिंशत् पुनरपि धारय गुरुकलाम्। एव द्वात्रिंशत्कलाः पदे भवन्ति। एवं परिपाट्या परिस्थापय चतुश्चरणेषु (पाठान्तरे) कलाः परिस्थापय। किंच यदि पतति कदाचिद्गुरुः, तदा कदापि मा परिहर मा त्यज। इद बुधजनमनोहरं जनहरणनामक छन्द इति। इदमप्युदाहरणम्।

२०२. उक्तलक्षणमेव स्पष्टीकृत्याह—

अत्र द्वात्रिंशन्मात्रा भवन्ति अन्ते सगणान्स्थापय तन्मध्ये एव। अत्र गुरुरेको द्वौ वा पादे भवतः तदा न दोषः। अधिके तु भवत्येव। गाहू छन्दः। भूषणे तु— 'लघुगुरुकनियमगतमिह फणिमणिमतमतिसुखनिगदपदं, दशवसुभुवनैर्यतिरिह यदि भवति रसिकजनहृदयविहितमदम्। बहुविमलचतुष्कलगणहृतगुणिगणचरणविरामाहितसगणं, क्वचिदपि गुरुसहित भवति कविहित छन्दः सुन्दरि जनहरणम्॥'

२०२. तमुदाहरति—जहा (यथा)—

कश्चिद्बन्दी हम्मीरप्रयाणमनुवर्णयति—खुरेत्याद्यनुकरणम्। मह्यामेतादृशानुकरण कृत्वा घग्घरेत्यादिरवं च कृत्वा णणणेत्याद्यनुकरण कृत्वा तुरङ्गाश्चलिताः। टटटेत्याद्यनुकृत्य पतति टापः खुराघातो येषाम्। अत एव ध्वस्ता भवति धरणिः। धनुषश्चक्रमकं करोति। दशदिक्षु चमराश्च वाजिकण्ठेषु बद्धाश्चकमकन्ति। एवंविधं दल दमकि दमकि अहमहमिकया चलितम्। ततश्च पत्तिबलमपि चलति। ततः घुलकि घुलकि गम्भीरघोरस्वर कृत्वा करिवरा अपि चलिताः। एवं सेनाग्रे चलिते वरमानुषाः सिंहपराक्रमाः शत्रवस्तेषामलाः समूहाः। अलशब्दः समूहार्थे देशीयः। त एव कमलं तस्य विपक्षश्चन्द्रस्तत्सकोचकत्वात्। यद्वा यदा संग्रामसान्निध्यादलकेपु मलो मालिन्य येषाम्। एवविधा ये वरमानुषा विपक्षास्तेषा हृदयशल्यो हम्मीरवीरो यदा रणाय चलितस्तदा पूर्वोक्ता एव चलिता इति॥ उट्टवणिका यथा—IIII, IIII, IIII, IIII, IIII, IIII, II I, IIऽ (३२) IIII, II I, IIII, IIIII, IIII, IIII, IIII, IIऽ (३२) I II, IIII, IIII, II I, I II, IIII, IIII, IIऽ, (३२) IIII, IIII, IIII, IIII, IIII, IIII, IIII, IIऽ, (३२).

२०४. अथ मअणहरा (मदनगृह) छन्दः—

हे प्रिये, मनोहर मदनगृह नाम छन्दो भणामि। किं कृत्वा पयोधर प्रेरयित्वा (?) जगण दूरीकृत्येत्यर्थः। त्व सुभगस्वभाव, सुस्निग्ध मनः क्षण स्थिरं कुरु। दत्तचित्ता भवेत्यर्थः। यदि राज्य विमन्त्यते तदानुसर क्षत्रियजातिम्।

छन्दःशास्त्रसागराद्बहिराकृष्येदं छन्दो भण। तत्प्रशंसामाह—यथा परकीयमृण खलु सदा स्मृतिपथमुपैति, तथैतदपि ॥ उट्टवणिकामाह—द्वौ द्वौ शल्यौ लघु लघु प्रथम वहिल्लिअ स्थापयित्वा ततस्तुरगहयगजपदातयो नव चतुष्कला जगण-रहिताः प्रसरन्ति। शेषे गुरुः सञ्जीकृत्य स्थापितः। कीदृशः अस्मिञ्छन्दसि पदान्ते जगि जाग्रत् श्रेष्ठत्वेन सगणत्वेन यदि निरुक्तः तदा चतुष्कलगणदशकेन युक्त-मिति छन्दोविशेषम् ॥ चउसधौ पदचतुष्टये चत्वारिंशन्मात्राः। समुदितखण्ड चतुष्टयपिण्डकलासख्या षष्ट्युत्तरशतात्मिका भवतीति धरास्थानकानि। एतादृश लक्षणलक्षितं दशवसुभुवनाष्टकविरतिक मदनगृहं नाम छन्दः। इदमप्युदाहरणम्।

२०५. उक्तलक्षणमेवाह—

द्वे मात्रे शिरसि आदौ स्थापयित्वा अन्ते पदान्ते वलयं गुरु स्थापयन्तु। ततो। मात्राद्वयगुर्वोर्मध्ये नव चतुष्कलगणान्धृत्वा मदनगृह नाम छन्दः कुरुत।

२०६. किं च—

पदचतुष्टये चत्वारिंशत्कलाः पदचतुष्टयेऽपि दश गणाञ्जानीत। हे सुप्रियाः, पयोधर जगणं वर्जयित्वा मदनगृहमिति छन्दः कुरुत ॥ भूषणे त्व [न्य] थोक्तम्—'प्रथमं कुरु षट्कलमन्ते कुण्डलमिह मध्ये वसुतुरगधर सतापहर, दश वसुभुवनाष्टभिरत्र चरणमपि भवति विरामो यदि ललित कविवलयहितम्। फणिनायकभणित जगणविरहितं चत्वारिंशत्कलकलित भुवने महित, वृत्त रसनिकर तन्मदनहरं नर-पतिससदि लब्धपद गुरुशोकनुदम् ॥"

२०७. मदनगृहमुदाहरति—जइा ( यथा )—

येन कंसो विनाशितः, अतएव कीर्तिः प्रकाशिता। येन मुष्टिकारिष्टयोर्विनाशः कृतः येन च गोवर्धनो गिरिर्हस्तेन धृतः। येन च यमलार्जुनौ भग्नौ। येन च पदभरेण गञ्जित [ कालिय ] कुलम्। येन च यशसा भुवन भृतम्। येन चाणूरोऽपि विखण्डितः येन च निजकुल यादववृन्दं मण्डितम्। येन च राधामुख [ मधु ] पान कृत यथा भ्रमरवरेण सरसिजमकरन्दः पीयते। स नारायणो विप्रप-रायणो युष्माक चित्तचिन्तित ददातु। कीदृशः। भवभीतिहरः संसारभयनाशनः ॥ उट्टवणिका यथा—॥ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ, ( ४० ) ॥, ॥॥, ऽ॥, ॥॥, ऽ॥, ऽऽ, ।॥, ।॥, ऽ॥, ॥॥, ( ४० ) ऽ, ऽ॥, ऽ॥, ॥॥, ऽ॥, ऽऽ, ।॥, ।॥, ऽ॥, ॥॥, ( ४० ) ऽ, ऽ॥, ऽ॥, ॥॥, ऽ॥, ऽऽ, ॥॥, ऽ।, ॥॥, ऽ, ( ४० ); ऽ, ऽ।, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ।, ऽ।, ऽ॥, ऽ॥, ऽ, ( ४० ) ॥ ग्रन्थान्तरेऽपि—विरहानलतप्ता सीदति गुप्ता रचितनलिनदलतल्पतले रमकतविमले, करकलितकपोल गलितनिचोल नयति सततघटितेन निशामनिमेष-

दृशा। न सखीमभिनन्दति रुजमनुविन्दति निन्दति हिमकरनिकरं परितापकं मनुते हृदि भारं मुक्ताहारं दिवसनिशाकरदीनमुखी जीवितविमुखी ॥'

२०८. अथ मरहट्टा छन्दः—

सुलक्षणमेतच्छन्दो भण्यते यद्विचक्षणः पिङ्गलनागो जल्पति यद्विश्राम्यति पूर्वं दशाक्षरेषु पुनरष्टसु पुनरेकादशस्थाने। अत्राक्षरशब्दो मात्रावाचकः, तद्वृत्तत्वात् [ उट्टवणिकाप्रकारमाह— ] आदौ षट्कल एकः, तत पञ्च चतुष्कलाः, तत एको-गुरुः, ततो लघुरेक इति प्रकारेण पादे एकोनत्रिंशत्कला इत्थ। खण्डचतुष्टयपिण्ड-कलासंख्या षोडशाधिकशतक ( ११६ ) मात्रा यत्र तदेतन्मरहट्ठानामकं छन्दो भण। भूषणेऽपि—आदौ कुरु षट्कलमत्र चतुष्कलपञ्चानन्दमितोऽपि, दशवस्वे कादश भवति विरतिवशमधिकशुचामपलोपि। विंशतिनवसख्य कविकुलसख्य वन्दितगुणिगणकोटि, मरहट्ठावृत्त किल जयकृये (ते) कृतरिपुविनतकरोटि ॥'

२०९. मरहट्ठामुदाहरति—जहा ( यथा )—

यस्य मित्रं धनेशः, श्वसुरो गिरीशः, तथापि खलु पिधानं वस्त्रं दिगेव। यद्यप्यमृतकन्दो निकटस्थश्चन्द्रः, तथापि यस्य भोजनं विषमेव। यद्यपि कनक-सवर्णा गौरी अर्धाङ्गे, तथापि खलु डाकिनीसंगः योगिनीसहचरः। यो यशो ददाति। भक्तेभ्य इति शेषः। यश्च दैवस्वभावः कदापि न भवति तस्य भंगः। उट्टवणिका यथा—।।ऽ।।, ऽऽ, ।।।।, ऽऽ, ।।।।, ऽ।।, ऽ। ( २९ ) ।।।।।।, ऽऽ, ।।।।, ऽऽ, ।।।।, ऽ।।, ऽ।, ( २९ ) ।।।।।।, ऽऽ, ऽ।।, ऽऽ, ।।।।, ऽ।।, (२९) ।।।।ऽ, ऽऽ, ऽ।।, ऽऽ, ।।।।, ऽ।। ऽ।, (२९)। वाणीभूषणेऽपि—'अभिमतधनदाता सिद्धिविधाता जगदन्तरगतिशील, दुरितद्रुमदाही विश्वविगाही कल्पक्षयकृतलील। भुवनत्रयवन्दितगिरिजानन्दितहरशिरसि स्थिरवास, दह हुतवह पापं देहि दुरापं वसुहततिमिरविलास ॥"

॥ इति लीलावती प्रकरणम् ॥

एतानि पञ्चचत्वारिंशत्स्थानकानि। अन्यान्यपि प्रस्तारगत्या सुधीभिरूधानि ॥ शिवम् ॥

पिङ्गला [चा]र्यैविरचितमात्रावृत्तप्रकाशकम्।
छन्दःप्रदीपममलं जगद्भवनदीपकम् ॥
मुनीषुरसभूमीभिर्मितेऽब्दे श्रावणे सिते।
नागराजतिथौ भट्टलक्ष्मीनाथोऽप्यरीरचत् ॥

इत्यालंकारिकचक्रचूडामणिश्रीमद्रामभट्टात्मजश्रीलक्ष्मीनाथभट्टविरचिते पिंगल-प्रदीपे मात्रावृत्ताख्यः प्रथमः परिच्छेदः ॥

---

# द्वितीयः परिच्छेदः

मदजलपरिमलपरिमिलदलिकलकलकपटकलितकमलवन ।
जय जय निजपदसरसिजनमदभिमतघटनजवन गजवदन ॥
कृत्वा कौतूहलतो मात्रावृत्तस्य पिङ्गले भाष्यम् ।
लक्ष्मीनाथस्तनुते सद्भाष्यं वर्णवृत्तस्य ॥

अथैकाक्षरपादादारभ्यैकैकाक्षरवर्धितैः पादैः षड्विंशत्यक्षरपर्यन्तं वर्णवृत्तान्युच्यन्ते ।

१. इतश्च लक्ष्यलक्षणयोरैक्यमवगन्तव्यम् ॥

सा श्रीः । श्रीनामकं छन्द इत्यर्थः । यत्र गो गुरुर्भवतीत्यर्थः ॥ अत्र सर्वत्र—'गुरुरेको गकारो लघुरेको लकारः' इति संकेतः ॥

भूषणेऽप्युक्तम्—'यद्गः सा श्रीः ॥

२. श्रियमुदाहरति—जहा ( यथा )—

गौरी युष्मान्रक्षतु ॥

३. यथा वा—

अत्रैकाक्षरप्रस्तारे द्वौ भेदौ गुरुर्लघुश्च । तत्राद्यो गुरुरुक्तः । द्वितीयः सुधीभिरूह्यः ॥

४. अथ द्व्यक्षरप्रस्तारे कामछन्दः—

यत्र द्वौ दीर्घौ तत्कामाख्यं छन्दः रामोऽभिराम इत्यर्थः ॥ अक्षरद्वयात्मकं पदम् ॥ भूषणेऽपि—'यस्मिन्हारौ कामः स स्यात् ॥'

५. काममुदाहरति—जहा ( यथा )—

युद्धे संग्रामे तुभ्यं शुभं ददातु शंभुरित्यर्थः ॥ यथा वा ( भूषणेऽप्युक्तम् ) 'कल्याणं वः । शंभुर्देयात्' । ग्रन्थान्तरे 'गौ स्त्री श्री' इति नामान्तरम् ॥ उद्दवणिका यथा—ऽऽ (८).

६. अथ मधुछन्दः—

यत्र लघु लघुद्वयं तन्मधुनामकं छन्दो निश्चितम् ॥ भूषणेऽपि—'द्विकलघु मधुरिति' ॥

७. उदाहरति—जहा ( तथा )—

हे हर मम पापम् हर । उद्दवणिका यथा—।।, (८).

८. अथ महीछन्दः—यत्र पूर्वं लघुः, ततो गुरुः, तन्मही कथिता ॥ भूषणेऽपि—'लघुर्गुरुमही स्मृता'।

९. तामुदाहरति—जहा (यथा)—

उमा गौरी त्वां रक्षतु कीदृशी। सती पतिव्रतेत्यर्थः ॥ उट्टवणिका यथा—।S, (८).

१०. अथ सारुछन्दः—

यत्र पूर्वो गुरुः, द्वितीयो रेखा लघुः, तत्सारुनामकं छन्द ॥

११. सारुमुदाहरति जहा (यथा)—

अयं शंभुर्युष्मभ्यं ददातु ॥ उट्टवणिका यथा—S।, (८). अत्र चत्वारो भेदा उदाहृताः ॥

१२. अथ त्र्यक्षरप्रस्तारे तालीछन्दः—

यत्र पूर्वं गो गुरुः, अनन्तरं कर्णो गुरुद्वयात्मकः। सर्वगुरुः (त्रिवर्णः) सा तालीनामकछन्दः ॥ भूषणेऽपि—'ताली सा निर्दिष्टा।......मो यत्र'॥ ग्रन्थान्तरे नारीति ॥

१३. तामुदाहरति—जहा (यथा)—

स प्रसिद्धचण्डेशः शिवो युष्मानस्मान्रक्षतु ॥ उट्टवणिका यथा—SSS, १२ ॥

१४. अथ प्रियाछन्दः—

हे प्रिये, यत्र रे रगणे त्रीणि अक्षराणि, सा प्रिया लक्ष्यते ॥ भूषणेऽपि—'जोहल दृश्यते। सा प्रिया कथ्यते ॥"

१५. तामुदाहरति—जहा (यथा)—

शं सुखं करोतीति तथा शंकरः शिवः नः पातु, नः पातु ॥ आदरे वीप्सा ॥ उट्टवणिका यथा—S।S, १२ ॥

१६. अथ शशीछन्दः—

यत्र पदे यो (यगण) आदिलघुर्यगणो जनित उत्पादितस्तच्छन्दः फणीन्द्रेण भणितम् ॥ भूषणेऽपि—'यकारो यदा स्यात्। शशी कथ्यते तत् ॥'

१७. तामुदाहरति—जहा (यथा)—

दुरितं हरन्ती हसन्ती भवानी युष्मानव्यादिति शेषः ॥ उट्टवणिका यथा—।SS, १२ ॥

१८ अथ रमणछन्दः—

सख्यः यत्र पदे सगणो गुर्वन्तो गणः, तद्रमणाख्यं छन्दः कथितम् ॥ भूषणेऽपि—'सगणो रमणः। कविना कथितः ॥"

१९. रमणमुदाहरति—जहा ( यथा )—

यथा शशिना रजनी शोभते तथैव पत्या सयुक्ता तरुणी राजते ॥ उट्टवणिका यथा—॥ऽ, १२ ॥

२०. अथ पञ्चालछन्दः—

यत्र तकारस्तगणोऽन्त्यलघुर्दृष्टः स पञ्चाल उत्कृष्ट इति ॥ भूषणे तु—'कर्णेन गन्धेन । पञ्चालमाख्याहि ॥'

२१. तमुदाहरति—जहा ( यथा )—

स शिवो दुःखानि सवृत्य सुखानि ददातु ॥ भूषणेऽपि—'शर्माणि सर्वाणि । देयानि शर्वाणि ॥' उट्टवणिका यथा—ऽऽ।, १२ ॥

२२. अथ मृगेन्द्रच्छन्दः—

नरेन्द्र जगणं गुरुमध्यम गण स्थापयन्तु मृगेन्द्रनामकं छन्दः कुर्वन्तु ॥ भूषणेऽपि—'नरेन्द्रमुदेहि । मृगेन्द्रमवेहि ॥'

२३. तमुदाहरति—

दुरन्तो वसन्तः, स कान्तो दिगन्ते ॥ उट्टवणिका यथा—।ऽ।, १२ ॥

२४. अथ मन्दरछन्दः—

हे सखि, भो भगणो गुर्वादिगणो यत्र तन्मन्दरनामकमतिसुन्दर छन्दः । भूषणेऽपि—'भो यदि वञ्चति । मन्दरमञ्चति' ॥

२५. मन्दरमुदाहरति—जहा ( यथा )—

स प्रसिद्धो हरः शिवो युष्माक मकटं संहरतु ॥ उट्टवणिका यथा—ऽ॥, १२॥ मन्दरो निवृत्तः ॥

२६. अथ कमलच्छन्दः—

हे सुमुखि, यत्र नगणस्त्रिलघ्वात्मको गणः क्रियते तत्कमलनामक वर्णत्रयात्मकं छन्दः ॥ तथा च वाणीभूषणे 'कमलमयतु । नगणमिह तु ॥'

२७. कमलमुदाहरति—जहा ( यथा )—

हे रमण, कुत्र गमन क्रियत इति शेषः । उट्टवणिका यथा—।।।; १२ । कमल निवृत्तम् ॥ अत्रापि त्र्यक्षरप्रस्तारगत्याष्टौ भेदा भवन्तीति तावन्तोऽप्युदाहृत्य प्रदर्शिताः ॥

२८. अथ चतुरक्षरप्रस्तारे प्रथम तीर्णा छन्दः—

भोः शिष्य, यत्र चत्वारो हारा गुरवो भवन्ति इष्टाः ( ? ) कराः । तत्र चरणे गणनियममाह—एकस्मिन्पादे द्वौ कर्णौ गुरुद्वयात्मकगणौ भवतः तत्तीर्णाख्य छन्दः । वर्णचतुष्टयात्मक पदम् ॥

वाणीभूषणेऽप्युक्तम्—'यस्मिन्वृत्ते कर्णः कर्णः । वेदैर्वर्णैः सा स्यात्तीर्णा ॥'

२९. तीर्णामुदाहरति—जहा (यथा)—

कश्चिन्मित्रं प्रति वदति—जाया वधूर्माया महावञ्चिकेत्यर्थः। पुत्रा अपि धूर्ताः। एवं ज्ञात्वा क्रियतां युक्तम् इति ॥ उट्टवणिका यथा—ऽऽऽऽ। तीर्णोत्तीर्णा ॥

३०. अथ धारीच्छन्दः—

हे मुग्धे, यत्र वर्णाश्चत्वारः पदे भवन्ति सा धारी। तस्यामुत्तरोत्तरो हारो गुरुद्वयम् द्वौ शरौ लघुद्वयं च ॥ अयमर्थः चतुर्वर्णात्मकपादे धारीनाम्नि च्छन्दसि प्रथमं गुरुः, ततो लघुः, अनन्तरं गुरुलघू। इत्युक्तं भवति—रगणः, ततश्चैको लघु—इति ॥ तदुक्तं वाणीभूषणे—'यत्तु पक्खि दण्ड लक्खि। वेद वर्ण धारि धारि' इति ॥

३१. धारीमुदाहरति—जहा (यथा)—

देवानामपि देवः स शंभुर्युष्मभ्यं शुभं ददातु। यस्य शीर्षे चन्द्रो दृश्यते। चन्द्रशेखर इत्यर्थः। उट्टवणिका यथा—ऽ।ऽ।; ४×४=१६ ॥ धारी निवृत्ता ॥

३२. अथ नगाणी छन्दः—

यत्र पयोधरो जगणो गुरुमध्यमो गणो गुरूत्तरो गुर्वन्तो भवतीत्यर्थः। वर्णचतुष्टयात्मकं पदम्। तन्नगाणी छन्दो भवति। अर्थात्—द्वितीयश्चतुर्थश्च वर्णो गुरुर्भवतीति ॥ तदुक्तं वाणीभूषणे 'द्वितुर्यके गुरुर्यदा। नगाणिका भवेत्तदा ॥'

३३. नगाणीमुदाहरति—जहा (यथा)—

सरस्वती प्रसन्ना भवतु कवित्वं स्फुरतु ॥ उट्टवणिका यथा—।ऽ।ऽ; १६। नगाणी निवृत्ता ॥ अत्रापि चतुरक्षरस्य प्रस्तारगत्या षोडश भेदा भवन्ति। तेषु ग्रन्थविस्तरशङ्कया त्रयो भेदाः प्रदर्शिताः ॥ अन्यैः (न्ये) सुधीभिरूहनीयाः इति ॥

३४. अथ पञ्चाक्षरप्रस्तारे सर्वगुरुः समोहाछन्दः—

यत्र वे द्वौ कर्णौ गुरुद्वयात्मकगणौ पूर्वं भवतः। तत एको हारो गुरुः। एवमेकस्मिंश्चरणे पञ्चापि गुरवो भवन्ति तत् भूतलसारं समोहानामकं छन्द इत्यर्थः। तथा च वाणीभूषणे 'द्वौ कर्णौ हारः समोहा सारः। वर्णाः पञ्चैवं नागाधीशोक्तम् ॥

३५. समोहामुदाहरति—जहा (यथा)—

उद्दण्डा महिषासुरादिविध्वंसेनोद्भटा चण्डी कात्यायनी दुरितं खण्डयतु (त्रैलोक्यस्य सुखम्) मे मोक्षं च ददातु, इति कश्चिद्भक्तो देवीं प्रार्थयते इति ॥ उट्टवणिका यथा—ऽऽऽऽऽ; ५×४=२० ॥ समोहा निवृत्ता ॥

३६. अथ हारीछन्दः—

आदौ हाराभ्यां गुरुभ्यां तथा चान्ते हाराभ्यां संयुक्तम् तयोर्मध्ये गन्धो लघुरेको यत्र तत् हारी छन्दः । पञ्चाक्षरपदम् । आदावन्ते कर्णौ मध्येलघुः एव पञ्चवर्णात्मक पदमित्यर्थः ।। वाणीभूषणेऽपि—'आद्यन्तवर्णाः पञ्चैव वर्णाः । लघ्वेकधारी वाच्यः स हारी ।।'

३७. हारीमुदाहरति—जहा ( यथा )—

या भर्तृभक्ता धर्मैकचित्ता भवति सैव नारी धन्या प्रिया च भर्तुर्भवतीति भावः ।। उट्टवणिका यथा, ऽऽ।ऽऽ, ५×४=२० ।। हारी निवृत्ता ।।

३८. अथ हंसच्छन्दः—

भोः शिष्याः, पिङ्गलेन दृष्ट भगण दत्वा पूर्वं सृष्टम् पश्चात्कर्णं गुरुद्वयात्मकगणं दत्वा हंसाख्यं पञ्चाक्षरपद छन्दो भवतीति ज्ञातव्यम् ।। अत एव वाणीभूषणे—'पिंगलदिष्टो भादिविशिष्टः । कर्णयुतोऽसौ भामिनि हंसः ।।'

३९. हंसमुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका सखीमाह—हे सखि, स मम कान्तोऽधुना दूरे दिगन्ते वर्तते । इयं च प्रावृट् आगता चेतश्चालयति । किमिदानीमाचरणीयमिति शिक्षयेति भावः ।। उट्टवणिका यथा—ऽ।।ऽऽ, ५×४=२० ।। हंसो निवृत्तः ।।

४०. अथ यमकच्छन्दः—

हे मुग्धे, यत्र सुप्रियगणो द्विलघुक एव गणो भवति । अथ च शरेणैकेन लघुना सुगुण संयुक्तं एतादृश [ न ] गण सरहश्लाघ्यमेतस्य गणस्य कुर्वित्यर्थः । एतादृश सर्वलघ्वात्मकपञ्चाक्षरप्रस्तारान्त्यभेदं पञ्चाक्षरपदं यमकाख्य छन्दो भण पठेत्यर्थः । वाणीभूषणेऽप्युक्तम्—'नगणमनु द्विलघु कुरु । फलितमिति यमकमिति ।।'

४१. यमकमुदाहरति—जहा ( यथा )—

पवनो मलयानिलो वहति । कीदृशः । शरीरसहः शरीरं साहयत्यसौ सहः । 'षहम् गतौ' इत्यस्य दिवाद्यस्य ( ? ) रूपम् । यद्वा तादृशं पवन शरीर कर्तृ सहते । 'साहयत्याहवक्षोभं सहति द्रविणव्ययम् । अन्याय सहते नासौ सिध्यति क्षितिरक्षणः ।।' इति कविरहस्ये हलायुधवचनप्रामाण्यादिति । अपि च मदनो हन्ति तापयति च मनः । इति प्रोषितपतिकावचन सखीः प्रतीति व्याख्येयमिति । उट्टवणिका यथा—।।।।।, ५×४=२० ।। यमक निवृत्तम् । अत्र प्रस्तारगत्या पञ्चाक्षरस्य द्वात्रिंशद्भेदा भवन्ति । तेषु भेदेषु चतुष्टयमुक्तम् । शेषभेदा नोदाहृता ग्रन्थविस्तारभीत्या, सुधीभिस्तूह्या इति ।।

४२. अथ षडक्षरप्रस्तारे सर्वगुरुरूपमाद्यं भेदं शेषाख्यं छन्दो लक्षयति—

यत्र द्वादशमात्राः। शिष्यबोधनार्थं मात्रासंख्या। गणनियममाह—यत्र च त्रयः कर्णा गुरुद्वयात्मकास्त्रयो गणा भवन्ति। षडक्षरं पदम्। एतदेव द्रढयति—षड्भिर्हारैर्गुरुभिर्बन्धो यत्र तच्छेषाख्यं छन्दःसु राजा। श्रेष्ठं छन्द इत्यर्थः॥ तदुक्तं वाणीभूषणेऽपि—'एषा वर्णैः षड्भिः प्रोक्ता छन्दोविद्भिः। सर्वे वर्णा यस्या दीर्घा शेषा सा स्यात्॥

४३. शेषामुदाहरति—जहा (यथा)—

उद्दामे संग्रामे [युध्यमाना] नृत्यन्ती कालिका हम्मारो अस्माकं दुरित तापं संहरतु॥ उट्टवणिका यथा—SSSSSS; ६×४=२४, शेषा निवृत्ता॥

४४. अथ तिलकाछन्दः—

हे प्रिये तत्तिलकाख्य छन्दः। यत्र ध्रुवं निश्चितं सगणद्वयमन्त्यगुणद्वय भवति। षड्वर्णात्मकं पदम्। पदे चाष्टौ कला धृता यत्रेति कला संख्या शिष्यबोधनार्थं पदपूरणार्थं वा। अन्यथाक्षरवृत्ते वर्णसंख्याया एवावश्यकत्वादिति॥ वाणीभूषणेऽपि—'सखि सद्वितयं सुदतीह यदा। रसवर्णपदा तिलकेति तदा॥'

४५. तिलकामुदाहरति—जहा (यथा)—

कश्चित्स्वमित्रं प्रत्याह प्रियभक्ता प्रिया, गुणवान् सुतः, धवनद्गृहं बहुसुखकरमित्येतत्सर्वं यस्य भवति स धन्य इति भावः॥ उट्टवणिका यथा—IISIIS; ६×४=२४॥ तिलका निवृत्ता॥

४६. अथ विज्जोहाछन्दः—

यत्र पादे पादे षडक्षराणि स्थितानि। यत्र च पञ्चद्विगुणा दश मात्राः। तत्रैव गणनियममाह—विण्णि द्वौ जोहागणौ रगणौ यत्र तत् विज्जोहाछन्दः नामगणयोरैक्यम्॥ वाणीभूषणे तु 'विमोहा' इति नामान्तरम्—'यत्र पादद्वये दृश्यते रद्वयम्। नागराजोदिता सा विमोहा मता॥'

४७. विज्जोहामुदाहरति—

कंससहारी पक्षिसचारी देवकीनदनो मे मह्यं निर्भयं ददातु। ममाभयप्रदो भवत्वित्यर्थः॥ उट्टवणिका यथा—SISSIS; ६×४=२४ विज्जोहा निवृता॥

४८. अथ चतुरंसाच्छन्दः—

यत्र द्विजवरश्चतुर्लघ्वात्मको गणः प्रथमम्, ततः कर्णो द्विगुरुर्गणः, अत एव स्फुटं रसवर्णं षडक्षर पद यत्र ता फणिपतिभाषितां चतुरंसा स्थापय॥ वाणीभूषणेऽपि—'द्विजवरकर्णाविह रसवर्णा। भवति यदा सा किल चतुरंसा॥'

४९. चतुरंसामुदाहरति—जहा (यथा)—

गौरीकान्तो यदि यदा अभिनये सत्ताण्डवे वर्तमानो यस्य प्रसन्नः, स तदा द्यावापृथिव्योर्धन्यः॥

५०. जहा वा ( यथा वा )—

भुवनानन्दस्त्रिभुवनकन्दो भ्रमरसवर्णो जयति कृष्णः ॥ उद्दवणिका यथा—||||SS; ६×४=२४ ॥ चतुरंसा निवृत्ता ॥

५१. अथ मन्थाणच्छन्दः—

हे मुग्धे, यत्र कामावतारार्धेन पादेन मात्रा दश शुद्धाः प्रतिपादमत्र भवन्ति। तन्मन्थाननामक छन्दः ॥ अयमर्थः—अग्रे वक्ष्यमाणस्य विंशतिकलात्मनः कामावतारस्य छन्दसोऽर्धेन दशमात्रात्मकेन षडक्षरेण पादेन मन्थाननाम छन्दो भवति। तत्र गणनियम उच्यते 'पूर्वतगणोऽनन्तरमपि स एव' इति ॥ वाणीभूषणे तु—'कर्णध्वजानन्दमाधाय सानन्द। वर्णै रसैर्वेत्तु मन्थानमेतत्तु ॥'

५२. मन्थानमुदाहरति—जहा ( यथा )—

हे सज्जन, राजा यत्र लुब्धः पण्डितोऽपि मुग्धः। तत्र राजकुले त्व स्वकीर्तिं करे रक्ष। स्वविद्याप्रकाशं मा कुर्वित्यर्थः। स वादोऽप्युपेक्ष्यताम्। यत्र न ज्ञाता कश्चिदिति भावः। उद्दवणिका यथा—SSISSI, ६×४=२४ ॥ मंथानं निवृत्तम् ॥

५३. अथ शङ्खनारीछन्दः—

यत्र षड्वर्णाः पदे भवन्ति भुजङ्गप्रयातस्याग्रे वक्ष्यमाणस्य यगणचतुष्टयात्मकस्य च्छन्दसोऽर्धेन यद्द्वयेनैतस्य चरणो भवति पादे पादे यगणद्वय भवति तच्छङ्खनारी-छन्दः ॥ वाणीभूषणे तु—'ध्वजानन्दकर्णाः षडेवात्र वर्णाः। बुधानन्दकारी भवेच्छङ्खनारी ॥''

५४. शङ्खनारीमुदाहरति—जहा (यथा)—

यस्य गुणाः शुद्धाः, यस्य वधू रूपेण मुग्धा सुन्दरी, यस्य गृहे वित्त जाग्रदस्ति तस्य मही पृथ्वी स्वर्गः ॥ उद्दवणिका यथा—ISS ISS, ६×४ = २४, शङ्खनारी निवृत्ता ॥

५५. अथ मालतीछन्दः—

हे कान्ते, यत्र प्रथम ध्वजो लघ्वादिस्त्रिकलः ततः शरद्वय लघुद्वयम्, ततश्च मणिगुणो हारो गुरुरित्यर्थः। ततोऽन्ते एको लघुर्देयः। सा मालतीनामक छन्दो भवतीति जानीहीति जगणद्वयेन मालती छन्द इति फलितोऽर्थः ॥ तथा च वाणीभूषणेऽपि—'यदा जगणद्वि भवेदमलघु। फणी वितनोति स मालतिकेति ॥'

५६. मालतीमुदाहरति—जहा (यथा)—

हे सखि बहुगुणवन्तः प्रसादाद्यनेकगुणयुक्ताः किरणाः प्रसूताः प्रफुल्लिताः-कुन्दाः, उदितश्चन्द्र इति कस्याश्चिन्नायिकायाः सखीं प्रति वचः ॥ उद्दवणिका यथा—ISIISI, ६×४=२४, मालती निवृत्ता ॥

५७. अथ दमनकच्छन्दः—

यत्र प्रथमं द्विजवरश्चतुर्लघुको गणः क्रियते पश्चात्सुप्रियो लघुद्वयात्मको गणो भण्यते। नगणद्वयेन [ दमनक छन्दः ] इति फलितोऽर्थः तद्दमनक छन्द इति गुणो फणिपतिर्भणति ॥ वाणीभूषणे तु—'द्विगुणनगणमिह वितनुहि। दमनकमिति [ प्रति ] गदति हि ॥'

५८. दमनकमुदाहरति—जहा ( यथा )—

कमलनयना अमृतवचना तरुणी गृहिणी यदि पुनर्मिलति तदा तां विहाय न कुत्रापि गमिष्यामीति कस्यचिद्विदेशस्थस्य कामिनो मित्रं प्रति वचनम् ॥ उट्टवणिका यथा—।।।।।।, ६×४=२४, दमनकं निवृत्तम् ॥ अत्र प्रस्तारगत्या षडक्षरस्य चतुःषष्टिर्भेदा भवन्ति। तेष्वाद्यन्तभेदसहिता अष्टौ भेदा प्रोक्ताः। शेषभेदाः सुधीभिरूहनीयाः। ग्रन्थविस्तारशङ्कया नात्रोक्ता इति ॥

५९. अथ सप्ताक्षरप्रस्तारे समानिकाछन्दः—

हे प्रिये, सा समानिकाछन्द इत्यर्थः। यत्र पदे चत्वारो हारा गुरवः क्रियन्ते। अन्तरान्तरा च त्रयो गन्धा लघवः क्रियन्ते। एव सप्ताक्षराणि यस्यां गुरुलघुरूपेण स्थितानि सा समानिकेत्यनुषज्यते ॥ तथा च वाणीभूषणे—'हारमेरुगा यदा रज्जुगा भवेत्सदा। सप्तवर्णसंगता सा समानिका मता ॥'

६०. समानिकामुदाहरति—जहा ( यथा )—

कुञ्जरा दन्तावलाश्चलन्ति स्म अत एव पर्वताः पतन्ति। यद्वा पर्वतान्प्रेरयन्तो गजाश्चलन्ति स्मेति योजनीयम्। अतश्चादिकूर्मस्यापि पृष्ठं कम्पितं धूल्या सूरस्तरणिः समाच्छादितः इति कस्यचिद्वन्दिनश्चलति कर्णे राजनि वचनम् ॥ उट्टवणिका यथा—ऽ।ऽ।ऽ।ऽ, ७×४=२८, समानिका निवृत्ता ॥

६१. अथ सुवासच्छन्दः—

हे प्रिये, यत्र लघवः सुतरां विशिष्यन्ते। तदेवाह—आदौ चतुर्मात्रकं विरच्य अन्ते भगणमादिगुरुगणं दत्त्वा सुवासनामक छन्दो भण ॥ तदुक्तं वाणीभूषणे—'द्विजगणमाहर भगणमुपाहर। भणति सुवासकमिति फणिनायक ॥'

६२. सुवासकमुदाहरति—जहा ( यथा )—

गुरुजनभक्ता बहुगुणयुक्ता यस्य त्रयः पुत्रा स एव पुण्यवान् पुरुषः ॥ उट्टवणिका यथा—।।।।ऽ।।; ७×४=२८ ॥ यथा च वाणीभूषणे—'गिरिवरनन्दिनि दुरितनिकन्दिनि। विहितनतौ मयि कुरु करुणामयि ॥' सुवासको निवृत्तः ॥

६३. अथ करहञ्ची—

भोः शिष्याः, यत्र चरणे प्रथमं विप्रश्चतुर्लघुको गणः स्थाप्यते, तस्यान्ते

जगणो मध्यगुरुको गणस्ता करहचीं जानीत ॥ अतएव वाणीभूषणे—'द्विज गणमवेहि जगणमनुदेहि। विविधरसस्त्रि भवति करहश्चि ॥'

६४. करहञ्चीमुदाहरति—जहा ( यथा )—

काचिदनुगमनपरा सुभटी विधातारमाह—हे धातरित्युपरिष्टात्। एह एषाहं त्यजामि गत्वा देहम्। यदि कदाचिदतः परमपि जिवउ जीवामि पुनर्जन्मान्तरं लभेयमि (?) त्यर्थः। तदा मम निर्गुणः सगुणो वा स एव रमणो भवतु विरहस्तु कदापि मा भवत्विति प्रार्थये त्वामिति भावः ॥ उट्टवणिका यथा—।।।।।ऽ।, ७×४=२८ ॥ करहची निवृत्ता ॥

६५. अथ शीर्षरूपक छन्दः—

हे मुग्धे, यत्र चरणस्थाः सप्तापि वर्णा दीर्घा गुरवो भवन्तीत्यर्थः। तत्र गणनियममाह—कर्णा गुरुद्वयात्मका गणास्त्रयस्तेषामग्र एक ग गुरुमानय। एवं पदे सप्त। मात्रानियममाह—चतुर्दश मात्रा द्विगुणार्थमवगन्तव्या। वर्णवृत्त वर्णानामेव सख्यानियमादिति। अत एव भूषणे—'उक्ता वर्णाः सप्तास्या सर्वे दीर्घाः स्युर्यस्याम्। एषा शीर्षा निर्दिष्टा केषा हर्षे नादेष्टा ॥'

६६. शीर्षामुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी कर्णमुपेत्य तत्कीर्तिं वर्णयति—हे राजन्, चन्द्रो धवलकरः, कुन्दो माध्य पुष्पम्, काशः शरदि जायमान तार्णं कुसुमम्। ए इति भाषया एते। किच हारो मुक्तैकावली हीर वज्र हसो मराल एते। अनुक्ताश्च जगति ये ये पारदकैलास हरहासशारदनीरदप्रभृतयः श्वेता वर्णितास्तानशेषानेषा युष्मत्कीर्तिर्जितवती ॥ उट्टवणिका यथा—SSSSSSS, ७×४=२८ ॥ यथा वाणीभूषणे—'दृष्टः कृष्णः कालिन्दीतीरे गोगोपानन्दी। वेणुक्वाणैरुत्काना चेतोहर्ता गोपीनाम् ॥' इति ॥ शीर्षा निवृत्ता ॥ अत्र प्रस्तारगत्या सप्ताक्षरस्याष्टाविंशत्यधिकशात ( १२८ ) भेदेषुचत्वारो भेदाः प्रदर्शिताः। ग्रन्थविस्तारभीत्या शेषभेदा नोदाहृताः-सुधीभिरूह्यास्त इति ॥

६७. अष्टाक्षरप्रस्तारे सर्वगुर्वात्मकमाद्यं विद्युन्मालाछन्दो लक्षयति—

भोः शिष्याः यत्र पादे चरणे लोलाश्चञ्चलाश्चत्वारः कर्णा द्विगुरवो गणा भवन्ति गुरुद्विगुणाः षोडशमात्राश्च, तद्विद्युन्मालाछन्दो वेदविश्राममेवरूपं चतुष्पादं वसुगुरुचरण भवतीति खत्री क्षत्रीयजातिनागराजो भत्ती भक्त्या जल्पतीति वित्थ ॥ अत एवोक्त कालिदासेन—'सर्वे वर्णा दीर्घा यस्या विश्रामः स्याद्वेदैर्वेदैः। विद्वद्वन्दैर्वीणावाणि व्याख्याता सा विद्युन्माला ॥' वाणीभूषणेप्युक्तम—'उक्ता। यस्यामष्टौ वर्णाः पादे पादे सर्वे दीर्घाः। विश्रामः स्यात्तर्ये तुर्ये विद्युन्माला निर्दिष्टा सा ॥' इति ॥

६८. विद्युन्मालामुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी संगरं वर्णयति—उन्मत्ता वीररसाविष्टा योधाः सुभटा ढुक्न्ताः परस्परं मिलिता इत्यर्थः। कीदृशाः। विपक्षाणामहितानां मध्ये लुक्खन्ता निलीयमानाः। एव निष्क्रान्ताः परबलं व्यापाद्य निर्गता यान्तो निजबलादरातिचक्रं प्रतीत्यर्थः। धावन्त इतस्ततश्चारीष्ठवरणार्थमित्यर्थः। अत एव नितरा भ्रान्ता त्रैलोक्यभ्रमणशीला कीर्तिं प्राप्ताः कीर्तिशेषा जाता इत्यर्थः॥ उट्टवणिका यथा—SSSSSSSS; ८×४=३२॥ यथा वाणीभूषणे—आगामिन्यो नो यामिन्यो या या याता भूयो भूयः। अभ्रच्छायावत्तारुण्य मानेनानेन स्यात्किं ते॥' ग्रन्थान्तरे तु—'मो मो गो गो विद्युन्माला'। मगणद्वय गुरुद्वय च यस्मिंस्तद्विद्युन्मालाच्छन्द इति गणभेदेन लक्षणमभिहितम्। यथा—'वासोवल्ली विद्युन्माला बर्हश्रेणी शाक्रश्चापः। यस्मिन्स स्यात्तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः॥' उट्टवणिका यथा—SSS SSS SS, ८×४=३२॥ विद्युन्माला निवृत्ता॥

६९. अथ प्रमाणिका छन्दः—

यत्र लघुर्गुरुश्च निरन्तर भवति सा प्रमाणिकाछन्द इत्यर्थः। सा कतिवर्णेत्यपेक्षायामाह—अट्ठअक्खरा। अष्टाक्षरेत्यर्थः। सेयं प्रमाणिका चेद्द्विगुणा क्रियते। षोडशाक्षरपदेत्यर्थः। तदा स नराचो भण्यत इत्युत्तरत्र षोडशाक्षरपदच्छन्दसो लक्षणमपि लक्ष्यतेऽनेनेति॥ वाणीभूषणेऽपि 'प्रसूनकुण्डलक्रमैरिहाष्टवर्णविभ्रमैः। भुजंगराजवर्णिता प्रमाणिकेति सा मता॥'

७०. प्रमाणिकामुदाहरति—जहा ( यथा )—

निशुम्भशुम्भयोर्दैत्ययोः खण्डिनी खण्डयित्री गिरीशस्य रुद्रस्य गेह मण्डयत्यलंकरोति या सा गेहमण्डिनी कलत्ररूपेणेत्यर्थः। एवंविधा प्रचण्डाना दैत्यभटाना मुण्डखण्डिका चण्डिका कात्यायनी वः प्रसन्नास्तु। ग्रन्थान्तरे तु 'नगस्वरूपिणी' इति नामान्तरम्॥ अत एव कालिदासग्रन्थे—'द्वितुर्यषष्ठमष्टम गुरु प्रयोजित यदा। तदा निवेदयन्ति ता बुधा नगस्वरूपिणीम्॥' इत्याह॥ उट्टवणिका यथा—ISISISIS; ८×४=३२॥ छन्दोमञ्जर्यां तु—'प्रमाणिका जरौ लगौ'॥ जगणरगणौ लगौ लघुगुरू च यस्मिंस्तत्प्रमाणिकाछन्द इति गणभेदेन लक्षणमभिहितम्। यथा—'पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः। श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका।'' उट्टवणिका यथा—IS IS IS IS, ८×४=३२, प्रमाणिका निवृत्ता॥

७१. अथ मल्लिकाछन्दः—

हारो गुरुः, गन्धो लघुः, बन्धुरेण प्रथम गुरुरनन्तर लघुरेवं क्रमेण दृष्टान्यक्षराणि यत्रेति तादृशेन चरणेन द्वादशमात्रेण मल्लिकाख्य छन्दो जानीहि॥

तदुक्तं वाणीभूषणे—'हारशङ्खक्रमेणमण्डिताष्टवर्णकेन । वर्णिता कुतूहलेन मल्लिकेति पिंगलेन ॥' इयमेव ग्रन्थान्तरे 'समानिका' इत्युच्यते ॥

७२. मल्लिकामुदाहरति—जहा ( यथा )—

येन भगवता धृतपरशुरामावतारेण क्षत्रियवंशो जितः । अथ च येन कृतकृष्णावतारेण अरिष्टो मुष्टिकः केशीकंसश्च जित इत्यनेनैवान्वयः । येन च बाणासुरस्य सहस्रबाहोः पाणयः कर्तिताश्छिन्नाः ॥ स युष्मभ्य सुख ददातु ॥ उट्टवणिका यथा—ऽ। ऽ। ऽ। ऽ।, ८×४=३२, मल्लिका निवृत्ता ॥

७३ अथ तुगाछन्दः—

हे तरलनयने, यत्र प्रथमगणेन गणः सुरगो भवति । कति गणास्तत्रेत्यपेक्षायामाह—नगणयुगलेन बद्धो गुरुयुगलेन च प्रसिद्धस्तुगाख्य छन्दः । पूर्वं नगणद्वयम्, अनन्तर गुरुद्वयमिति फलितोऽर्थः । तदुक्त भूषणे—'द्विगुणनगणकर्णैः सुललितवसुवर्णैः । रसिकविहितरगा प्रभवति किल तुगा ॥'

७४. तुगामुदाहरति—

कमले बद्धाना भ्रमराणा जीवो जीवनदाता बन्धनमोचनादिति भावः । सकलभुवनदीपस्त्रिभुवनप्रकाशकत्वादिति भावः । दलितस्तिमिरस्य डिम्ब उपप्लवो येन । 'प्रादुर्डिम्ब उपप्लवे' [ इति ] देशीकोषात् । एतादृशस्तरणिबिम्ब उदेति ॥ उट्टवणिका यथा—।।। ।।। ऽऽ, ८×४=७२ ॥ तुंगा निवृत्ता ॥

७५. अथ कमलच्छन्दः—

हे सखि, यत्र प्रथमो विप्रगणश्चतुर्लघ्वात्मको गणः, द्वितीयस्तथा नरेन्द्रो जगणः तस्यान्ते गुरुः । अनया रीत्या पदेऽष्ट वर्णा भवन्ति तत्कमलनामकं छन्दः । उक्त च भूषणे—'द्विजवरगणान्वित जगणगुरुसगतम् । फणिनृपतिजल्पितं कमलमिति कल्पितम् ॥'

७६. कमलमुदाहरति—जहा ( यथा )—

असुरकुलमर्दनो गरुडवरवाहनो वनेः सकाशाद्भुवनापेक्षकः स जनार्दनो जयति सर्वोत्कर्षेण वर्तत इति ॥ उट्टवणिका यथा—।।।।ऽ।ऽ; ८×४=३२, कमल निवृत्तम् ॥

अथ माणवकक्रीडितक छन्दो ग्रन्थान्तरस्थमुच्यते—

भादिगण कर्णधर सान्तमिद वृत्तवरम् ।
पन्नगराजेन कृत माणवकक्रीडितकम् ॥

यत्र प्रथम भगणः ततः कर्णः, ततोऽपि सगणः तद्वृत्तं माणवकक्रीडितकमिति ॥

यथा—

कोकवधूशोकहरं पद्मवनीबोधकरम् ।
गाढतमोनाशकरं नौतितरामुष्णकरम् ॥

उट्टवणिका यथा—SIISSIIS ८×४=३२ छन्दोमञ्जर्यां तु—'भात्तलगाः माणवकम् ।' भाद्भगणात्तलगास्तगणलघुगुरवो यत्र भवन्ति तन्माणवकं छन्द इति गणभेदेनोक्तम् ॥ यथा—चञ्चलचूड चपलैर्वत्सकुलैः केलिपरम् । ध्याय सखे स्मेरमुख नन्दसुत माणवकम् ॥' उट्टवणिका यथा—SII SSI IS, ८×४=३२ ॥ माणवकक्रीडितक निवृत्तम् ॥

अथानुष्टुप्छन्दः—

लघु स्यात्पञ्चमं यत्र गुरु षष्ठं च सप्तमम् ।
द्वितुर्यपादयोर्ह्रस्वमष्टाक्षरमनुष्टुभम् ॥

यत्र छन्दसि पञ्चममक्षरं चरणचतुष्टयेऽपि लघु तथैव षष्ठं गुरु द्वितीय-चतुर्थयोः पादयोः सप्तमं ह्रस्वं लघ्वित्यर्थः । शेषवर्णा अनियता यत्र । एवमष्टाक्षरं वृत्तमनुष्टुभं जानीयादिति शेषः । अन्यत्रापि—'पञ्चमं लघु सर्वत्र सप्तमं द्वि-चतुर्थयोः । षष्ठं गुरु विजानीयाच्छेषास्त्वनियता मताः ॥' इति ॥

यथा—

हृदयं मदयन्त्येते मदोन्मत्ताः शिलीमुखाः ।
विषाक्ताः पुष्पधनुषो मूर्ता इव शिलीमुखाः ॥

अथ क्रमेण 'अलिबाणौ शिलीमुखौ' इत्यमरनिर्देशादर्थोऽवगन्तव्य इति । उट्टवणिका यथा—IISIISSS, ISISISSI, ॥ इदमेव हलायुधवृत्त्यादिषु छन्दो-ग्रन्थेषु नानागणभेदेन विषमवृत्तेषु वक्त्रसंज्ञा लभते । सकलपुराणेषु च साधारण्ये-नाष्टाक्षरपादस्यानुष्टुबिति प्रसिद्धिः । विशेषतस्तु विद्युन्मालादीनि वृत्तान्यष्टाक्षर-प्रस्तारे दर्शितानि । अत एव छन्दोमञ्जर्यामेकाक्षरादिषड्विंशत्यक्षरपादानां वृत्तानां पृथक्पृथक्साधारणसंज्ञाः प्रोक्ताः ।

यथा—

'आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम् ॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप्च जगती चैव तथातिजगती मता ।
शक्वरी चातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः सकृतिश्चैव तथाविकृतिरुत्कृतिः ॥
इत्युक्ता छन्दसा सञ्ज्ञाः' इति ।

विशेषतस्तु तत्र तत्र प्रस्तारे तत्रैव सञ्ज्ञा ज्ञातव्या । इत्यास्ता विस्तरेण ॥ अत्र प्रस्तारगत्याष्टाक्षरस्य षट्पञ्चाशदधिकं द्विशत भेदाः । येषु कियन्तो भेदा उदाहृताः शेषभेदा ऊहनीयाः सुबुद्धिभिरिति ॥

७७. अथ नवाक्षरप्रस्तारे महालक्ष्मीछन्दः—

हे मुग्धे, यत्र नागराजेन पिङ्गलेन ये वर्णितास्ते त्रयोऽत्र जोहागणा रगणा । मध्यलघुका गणा इति यावत् । दृष्टाः । अतो नवाक्षर पदम्, पदे च मासार्ध-सख्याभिः पञ्चदशभिर्मात्राभिः स्थिता महालक्ष्मिका जानीहि । तदुक्त वाणीभूषणे—'दृश्यते पक्षिराजत्रयं यत्र वृत्ते मनोहारके । सतत पिङ्गलेनोदिता सा महा-लक्ष्मिका कीर्तिता ॥'

७८. महालक्ष्मीमुदाहरति—जहा ( यथा )—

सा सिंहासना सिंहाधिरूढा चण्डिका वः पातु । सा का । यस्या गले मुण्डाना माला कण्ठिका कण्ठभूषेत्यर्थः । यस्या नागराजो भुजाया संस्थितः । कथभूता चण्डिका । व्याघ्रकृत्त्या पुण्डरीकचर्मणा कृत वसन वस्त्र यथाभूता वः पात्विति ॥ उट्टवणिका यथा—ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ९×४=३६ ॥ महालक्ष्मी निवृत्ता ॥

७९. अथ सारङ्गिका छन्दः—

हे सखि, यत्र प्रथम द्विजवरश्चतुर्लघुको गणः, ततः कर्णो द्विगुर्वात्मको गणः ततः सगणोऽन्तगुरुर्गणः एवप्रकारेण यत्र पदे पदे मात्रागणन क्रियत इति शेषः । तदेवाह—शराः पञ्च मुनयः सप्त मिलित्वा द्वादश मात्राः पादे लभ्यन्ते यस्याः सा सारङ्गिका कथ्यते द्विजवरकर्णसगणैर्नवाक्षरपदा सारङ्गिका छन्द इति फलितोऽर्थः ॥ तथा च वाणीभूषणे—'द्विजवरकर्णौ सगण विरचय यस्याश्चरणम् । जगदभि-रामं हि तया भवति हि सारङ्गिकया ॥'

८१. सारङ्गिकामुदाहरति—जहा ( यथा )—

हे प्रियसखि, त्वया सा दृष्टा । कीदृशी । हरिणसदृश नयन चञ्चलत्वात्त-दुपमा यस्याः सा एणाक्षीत्यर्थः । कमलसदृश विकच सुगन्धि च वदन यस्याः सा पुनर्युवजनाना चित्त हरति तच्छीला इति कस्याश्चित्सख्याः सखीं प्रति वचनम् ॥ उट्टवणिका यथा—।।।।, ऽऽ, ।।ऽ, ९×४=३६ ॥ यथा वाणीभूषणे—'प्रणमत राधारमण नृगनृपबाधाशमनम् । असुरमदापाहरण यदुकुलचूडाभरणम् ॥' सारङ्गिका निवृत्ता ॥

८१. अथ पाइत्ताछन्दः—

भो शिष्याः, यत्र कुन्तीपुत्रः कर्णस्तयोर्युगं तेन गुरुचतुष्टयं पूर्वं यत्र लभ्यते तीए ततस्तृतीये वा स्थाने ध्रुवं निश्चितं विप्रश्चतुर्लघुको गणः कथ्यते। यत्र चान्ते चरणान्ते हारो गुरुर्जन्यते तदेतत् 'पाइत्ता' छन्दसो रूप फणिना पिङ्गलेन भणितम् ॥ तथा चोक्तं भूषणे—'आदौ कर्णद्वयललित कृत्वा विप्र गुरुसहितम्। तद्वृत्त पिङ्गलभणित पाइत्तेति श्रवणहितम् ॥'

८२. पाइत्तामुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका निजसखीमाह—हे प्रियसखि, 'वर्षासमयेऽहमागमिष्यामि' इति प्रतिज्ञाय प्रस्थितो वल्लभः। तदिदानीं नीपाः कदम्बाः पुष्पिताः, भ्रमरा द्विरेफा भ्रमन्ति, मेघा अपि जलभरा नीरमिश्रिता दृष्टाः विद्युत्सौदामिन्यपि नृत्यति। अतः परमपि कथय कान्तः कदायास्यतीति। एतादृशेऽपि समये नागतश्चेन्निश्चित स कान्त एव सुखनाशकत्वात् न तु वल्लभ इति भावः ॥ उट्टवणिका—ऽऽ, ऽऽ, ॥, ॥, ऽ, ९×४=३६ ॥ पाइत्ता निवृत्ता ॥

८३. अथ कमलच्छन्दः—

भोः शिष्याः, यत्र सरसौ रमणीयौ द्विजगणौ चतुर्लघुकगणौ पतितौ। पदान्ते च गुरुर्ध्रियते। एव पदे नव वर्णाः दश कलाश्च प्रतिपद यत्र पतिताः तत्कमलनामक छन्द इति ॥ यथा च वाणीभूषणे—'द्विजवरकगणयुगं कलय गुरुविरतिगम्। भणति फणिपतिरिद कमलपतिरतिपदम् ॥'

८४. कमलमुदाहरति—जहा ( यथा )—

चलति कमलनयना, स्खलति स्तनवसनम्, हसति परनिकटे, अत एव ध्रुवं निश्चितमिय वहुलिआ वधूटी असतीत्येव मन्ये इति शेषः ॥ उट्टवणिका यथा—॥॥, ॥॥, ऽ, ६×४=३६, कमल निवृत्तं।

८५. बिम्बच्छन्दः—

भो गुणिनः, स्वभावादेव गुणयत नात्र काठिन्यं किंचिदिति भावः। यत्र गुरुयुगल सर्वशेषे पादान्ते शिरसि आदौ द्विजश्चतुर्लघुर्गणः मध्ये विप्रकर्णयोर्मध्ये राजा जगणो गुरुमध्यो गणो यस्मिंस्तत्फणिना पिङ्गलेन रचितं बिम्बनामक छन्द इति ॥ भूषणे तु गणभेदेनोक्तं यथा—'नगणकरगन्धकर्णं भवति नववर्णपूर्णम्। फणिवदनभूषण यद्भवत्ति किल बिम्बमेतत् ॥'

८६. बिम्बमुदाहरति—जहा ( यथा )—

हे वयस्य राजन् वा, एतच्चल वित्त चलति। कि च तरुणत्ववेशस्तारुण्यरूपं नश्यति। अतः कारणात्सुपुरुषस्य शौर्यौदार्यगाम्भीर्यमर्यादाप्रभृतिगुणेन वद्धा

नद्धा शुद्धा शरच्चन्द्रावदाता स्थिरा कल्पान्तस्थायिनी कीर्तिरवतिष्ठते वित्तयौवनादिकमतिचञ्चलत्वान्नश्वरमित्य [ तः ] कीर्तिमेकामुपार्जयेति राजानं प्रति मित्रं प्रति वा कस्यचिन्निपुणमतेर्वचनमिदम् ॥ उट्टवणिका यथा—||||, |S|, SS, ९×४=३६, बिम्बो निवृत्तः ॥

८७. अथ तोमरच्छन्दः—

हे कान्ते, यस्यादौ हस्तं रुगण गुर्वन्तं गणं विश्राण विजानीहि। तथा द्वौ पयोधरौ जगणौ गुरुमध्यमौ गणौ जानीहि। नागनरेन्द्रो दर्वीकराधारः प्रकर्षेण भणतीति तत्प्रामाण्यादेवं तोमराख्य छन्दो मानय ॥ वाणीभूषणेऽप्युक्तम्—प्रथमं कर त्रिनिधाय जगणद्वयं च निधाय। इति तोमरं सुखकारि कविराजवक्त्रविहारी ॥'

८८. तोमरमुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका वसन्तसमयेऽपि कान्तमनागतं मत्वातिनिर्विण्णमानसा साकूतं सखीमाह—हे सखि, कोकिलशावकाः पिकपोतकाश्चूत रसाल प्रति चलिताः। अथ च मधुमासेऽस्मिन्पञ्चम स्वरं च गायन्ति। अतः प्राप्ते वसन्ते मनोमध्ये मन्मथस्तपति । यद्वा मम मनो मन्मथस्तापयति। न खलु कान्तोऽद्याप्यायातीति ॥ यथा वा [ णीभूषणे ]—'सखि मादके मधुमासि व्रज सत्वरं किमिहासि। सह तेन किं विहरामि किमु पावकं प्रविशामि ॥' उट्टवणिका यथा—IS, |S|, |S|, ६×४=३६, तोमर निवृत्तम् ॥

८९. अथ रूपमालीच्छन्दः—

भोः शिष्याः, नागराजः पिंगलः सारमत्युत्कृष्टमिदं छन्दो जल्पति। यत्र च चत्वारः कर्णाः द्विगुरवो गणाः अन्ते पदान्ते हारो गुरुः। ए एक इत्यर्थः। एव नवाप्यक्षराणि गुरूणि मात्राश्चाष्टादश द्विगुणाभिप्रायेण गुरूणां यत्र पादे तद् रूपमालीनामकछन्दः कथ्यते इति ॥ अयं च नवाक्षरप्रस्तारे प्रथमो भेदः। अत एव वाणीभूषणे—'चत्वारोऽस्मिन्कर्णा जायन्ते छन्दस्येक हार कुर्वन्ते। रम्या वर्णाः पादे राजन्ते रूपामालीवृत्त तत्कान्ते ॥'

९०. रूपामालीमुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका सखीमाह—यद्यस्माद्विद्युत्तडिन्नृत्यति । मेघान्धकाराश्च हरितो यस्मात्। यतश्च नीपाः कदम्बाः प्रफुल्लिताः। किं च मयूराः कूजन्ति। केकारवं कुर्वन्तीत्यर्थः। वान्ति मन्दाः शीता वाताः। कम्पन्ते गात्राणि। अतः प्राप्ता प्रावृट्। कान्तः पर नागत इति ॥ यथा वा [ णीभूषणे ]—'हत्वा शत्रु नृत्यन्ती चण्डं सा चण्डी वः कल्याण कुर्यात्। देवेन्द्राद्याः प्रीत्या सप्राप्ताः ससेवन्ते यत्पादाम्भोजम् ॥' उट्टवणिका यथा—SS, SS, SS, SS, S, ९×४=३६ ॥

रूपामाली निवृत्ता ॥ अत्रापि प्रस्तारगत्या नवाक्षरस्य द्वादशाधिकपञ्चशतभेदेषु सप्त भेदा दर्शिताः। शेषभेदा ऊहनीयाः सुमतिभिरिति ॥

९१. अथ दशाक्षरप्रस्तारे संयुताछन्दः—

हे सुन्दरि, यस्यादौ हस्तः सगणो गुर्वन्तो गणो विज्ञातः। तथा वे द्वौ पयोधरौ जगणौ मध्यगुरुकगणौ ज्ञातौ अन्ते पदान्ते गुरुः। तत्पिङ्गलेन जल्पितं संयुतेति फलितोऽर्थः ॥ तथा च भूषणे—'सगणं पुरः कुरु शोभित जगणद्वय गुरुसंगतम्। फणिनायकेन निवेदिता भवतीह संयुतका हिता ॥'

९२. सयुतामुदाहरति—जहा ( यथा )—

काचित्सखी प्रोषितपतिका नायिकामभिसारार्थं प्रेरयन्त्याह—हे सुन्दरि, सर्वावयवरमणीये, दुर्जनस्थापना कुलीनतारूपव्यवस्था परित्यज्य अप्पणा आत्मनैव याहि। सकेतनिकुञ्जगतमभिमतमिति भावः। यतः—विकसत्केतकीसपुटे प्राविट्काले न खल्वद्याप्यागतः स वराक इति ॥ उट्टवणिका यथा—॥ऽ, ।ऽ।, ।ऽ।, ऽ, १०×४=४०, [ संयुक्ता निवृत्ता ॥ ]

९३. अथ चम्पकमालाछन्दः—

भोः शिष्याः, अत्र प्रथम हारो गुरुः स्थाप्यते। ततः काहलद्वयम्। लघुद्वयमित्यर्थः। ततः कुन्तीपुत्रः कर्णो द्विगुरुको गणः। कीदृशः कर्णः। एगुरुजुत्ता एकगुरुयुक्तः। ततो हस्तः सगणो गुर्वन्तगणः क्रियते। पदान्ते हारो गुरुः स्थाप्यते। एव दश वर्णाः पादे यत्र क्रियन्ते तच्छन्दश्चम्पकमालेति कथ्यते। वाणीभूषणे प्रकारान्तरेणोक्तम्, 'पादविराजन्नूपुरयुग्मा कुण्डलशोभासङ्गिसुवर्णा। शङ्खवती हारद्वयपूर्णा चम्पकमाला भाति सुवर्णा ॥' क्वचिदियमेव रुक्मवती, क्वचिच्च रूपवतीति ॥

९४. चम्पकमालामुदाहरति—जहा ( यथा )—

शाल्योदन गोघृतदुग्धसंयुक्तम्, किंच मोइणिमच्छा मत्स्यविशेषः, नालिचः शाकः, एतत्सर्वं कान्तया स्वहस्तेन रम्भापत्रे कदलीदले दीयते पुण्यवता भुज्यते इति कस्यचिदाध्यूनस्य विदूषकस्य वा सोपहास वचनमिति ॥ उट्टवणिका यथा—ऽ॥, ऽऽ, ऽ, ॥ऽ, ऽ, १०×४=४० ॥ चम्पकमाला निवृत्ता ॥

९५. अथ सारवतीछन्दः—

भोः शिष्याः, यत्र प्रथमं दीर्घो गुरुः, तदनन्तरं लहूजुअ लघुद्वयमित्यर्थः। ततोऽपि दीर्घो गुरुः, तदनन्तरमेको लघुः ततश्चान्ते दीर्घलघ्वोरन्ते पयोधरो जगणो गुरुमध्यमो गणो यत्र। ततोऽपि ध्वजो लघ्वादित्रिकलः। एवं दश वर्णाः पादे मात्राश्चतुर्दश च यत्र भवन्ति तद्ध्रुवं निश्चितं सारवतीति छन्दः कथितमिति

गुरुर्लघुद्वय गुरुलघू जगणलघ्वादित्रिकलैः च यत्र तत्सारवतीछन्द इति फलितोऽर्थः ॥ वाणीभूषणे तु प्रकारान्तरेण लक्षणमभिहित यथा—'दीर्घलघुद्वयमद्विगुणा हारविराजिचतुश्चरणाः। पिङ्गलनागमते भणिता सारवती कविसार्थहिता ॥'

९६. सारवतीमुदाहरति—जहा ( यथा )—

कश्चिच्छालीनगृहस्थः स्वगार्हस्थ्येन सतुष्टो गर्वायते—भो अनुजीविनो लोका हे मित्रेति वा। यस्य मम पवित्राः शुद्धाः। पितृभक्ता इति यावत्। एवविधाः पुत्राः पुन्नाम्नो नरकात्त्रातारस्तनयाः सन्ति। अथ च यस्य ममात्मजाः पवित्राः पवि• कुलिशं तस्मादपि त्रायन्ते वज्रादपि रक्षका महावीरपराक्रमाः सन्ति। अथ च यस्य मम बहुल धन धनाधीशप्रतिस्पर्धि। विद्यत इति शेषः। अपि च कुटुम्बिनी वधूः शुद्धमना अकुटिलान्तःकरणा सती भक्ता भर्तृजनतत्परा वास्ति। यस्य च मम हक्केण अमुकेति वाङ्मात्रेण भृत्यगणः सेवकवर्गः त्रस्यति। एवं सकलसुखानुभवे सति को वा बर्बरोऽतिवाचाटः स्वर्गे मनः करोति। महीतल एव स्वर्गसुखादपि बहुलतरशर्मलाभादिति भावः ॥ उट्टवणिका—यथा—ऽ, ।।, ऽ, ।, ।ऽ।, ।ऽ, १०×४=४० ॥ यथा वा [ णीभूषणे ]—'माधवमानय मत्सविध किं सखि चिन्तय मित्रवधम्। यत्र करिष्यसि मत्प्रणय नो मम याति तदासमयम् ॥' एतदनुसारेणोट्टवणिकापि प्रदर्श्यंते—ऽ, ।।, ऽ।।, ऽ।।, ऽ, १०×४=४० ॥ सारवती निवृत्ता ॥

९७. अथ सुषमाछन्दः—

हे मुग्धे, यत्र प्रथमः कर्णो द्विगुरुगणः जुअलो द्वितीयो हस्तः सगणो गुर्वन्तगणो भवति। ततस्तिअलो तृतीयः कर्ण एव सर्वशेषे हस्तः सगण एव प्रकटो यत्र दशाक्षरचरणे षोडश कला भवन्ति अथ छक्का वलयाः षड् गुरवश्चतस्रः शेषाः रेखा चेत्येव षोडश मात्रा यत्र सा सुसमा प्राणसमा। अतिप्रियेत्यर्थः ॥ भूषणे त्वन्यथोक्तम्—'कर्णो द्विलघुः कर्णो भगणः शेषे गुरुणा पूर्णश्चरणः। यस्यां भवति मुग्धे परमा सैषा सुषमा दीव्यत्सुषमा ॥'

९८. सुषमामुदाहरति—जहा ( यथा )—

यस्या भ्रूः कपिला, उच्च ललाटम्, यस्याश्च नेत्रयुगल मध्ये पीतम्। बिडालसदृशमित्यर्थः। अथ च रूक्ष वदन दन्ताश्च विरला दृश्यन्ते कथं जीवति यस्य त्वमपीदृशी प्रिया भवसीति परमकुत्सितरूपा करालां प्रति कस्याश्चित्कान्तसकलावयवाया वचनम् ॥ उट्टवणिका यथा—ऽऽ, ।।ऽ, ऽऽ, ।।ऽ, १०×४= यथा वा [ णीभूणे ]—'एणीनयने केलीकलहे प्रेयान्वद किं किं नो कुरुते। धन्या रमणी सर्वं सहते दुःखं सुखवत्स्वाते मनुते ॥' तदनुसारेणोट्टवणिका यथा—ऽऽ, ।।, ऽऽ, ऽ।।, ऽ, १०×४=४० ॥ सुषमा निवृत्ता ॥

९९. अथामृतगतिछन्दः—

भोः शिष्याः, सा अमृतगतिरिति ध्रुवं निश्चितं कथिता। सा का। यत्र द्विजवरगणश्चतुर्लघ्वात्मको गणः, ततो हारो गुरुः प्रकटितः, पुनरपि तथा स्थितं कुरु द्विजगणानन्तरं गुरुं कुर्वित्यर्थः। एवं सत्यष्टौ लघवो द्विगुरुसहिताश्चरणे यस्याः सामृतगतिरिति॥ वाणीभूषणे तु—'नगणपयोधररुचिरा कुसुमविराजितसुकरा। वसुलघुदीर्घयुगलका भवति सखेऽमृतगतिका॥' क्वचिदियमेव त्वरितगतिरिति॥

१००. अमृतगतिमुदाहरति—जहा (यथा)—

हे प्रियसखि, त्वया सा तरुणी दृष्टा। कीदृशी। शारदसुधाकरवदना। पुनः कीदृशी। विकचसरोरुहनयना। मदकलकुञ्जरगमना॥ इति॥ उट्टवणिका यथा—IIII, S, IIII, S, १०×४=४०॥ अमृतगतिर्निवृत्ता॥ अत्र प्रस्तारगत्या दशाक्षरस्य चतुर्विंशत्यधिकं सहस्रं १०२४ भेदा भवन्ति॥ तेषु पञ्च भेदाः प्रोक्ताः। शेषभेदाः सुधीभिरूहनीया इति॥

१०१. अथैकादशाक्षरप्रस्तारे बन्धुच्छन्दः—

षोडशवर्णात्मकैर्भगणपञ्चकयुक्तैः षोडशभिश्चरणैश्चतुश्छन्दोभिप्रायेण नीलस्वरूपं छन्दो भवति। अतश्च नीलस्वरूपादेकश्चरणः कर्तव्यः। तत्र चरणे षोडशवर्णपञ्चभगणगुर्वात्मके त्रयो भगणा गुर्वादिका गणा भण्यते। अन्ते भगणत्रयान्ते द्विगुरुः कर्णो दीयते पादे च षोडश मात्राः स्थाप्यन्ते यत्र तद् बन्धुनामक छन्दः कथ्यते॥ भूषणेऽप्युक्तम्—'भत्रयशोभितसंगतकर्णः एकसुसंगतपङ्क्तिकवर्णः। पन्नगराजनिवेदितबन्धू राजति भूपतिसंसदि बन्धुः॥'

१०२. बन्धुमुदाहरति—जहा (यथा)—

पाण्डववंशे जन्म कृतम्। सपदमर्जयित्वा धर्मार्थं दत्तम्। तेनापि युधिष्ठिरेण संकटो वनवासाज्ञातवासलक्षणः प्राप्तः। अतः कारणाद्दैवेन विधात्रा लिखितं कः प्रमार्ष्टि। न कोऽपीत्यर्थः॥ उट्टवणिका यथा—SII, SII, SII, SS, ११×४=४४॥ यथा वा [णीभूषणे] 'भक्षितवासरनायकचन्द्रः कामिसहस्तसमाहिततन्द्रः। दर्शितलोलतडित्करवालः सोऽयमुपैति घनागमकालः॥' [बन्धुर्निवृत्तः॥]

१०३. अथ सुमुखीछन्दः—

भोः कविवराः, तत्र प्रथमं द्विजवरश्चतुर्लघुको गणः, ततो हारो गुरुः, ततो लघुयुगलम् अनन्तरं वलयो गुरुः, ततः प्रतिष्ठित हस्ततलं सगणो गुर्वन्तगणो यत्र एवं वदे चतुर्दशमात्रा रुद्रवर्णाश्च यत्र तां सुमुखीं जानीतेति जल्पत्यहिः शेषनाग इति। वाणीभूषणे तु प्रकारान्तरेण लक्षणमभिहितम् यथा—

'नगणचिरालयसद्वितय कविजनभाषितवृत्तचयम् । प्रभवति शेषसहस्रमुखी विनिगदितेह तदा सुमुखी ॥'

१०४. सुमुखीमुदाहरति—जहा ( यथा )—

कश्चिदतिदुराचारिणं मित्रमुपदिशति—एतानि यौवनदेहधनान्यतिचपलानि स्वप्नसहोदराः स्वप्नतुल्या बन्धुजनाः। अथ च अवश्य कालपुरीगमनम् । अतः कारणाद्धे वर्वर वितथभाषिन्, पापे मनः परिहर ॥ उट्टवणिका यथा—
||||, ऽ, ||, ऽ, ||ऽ, ११ X ४ = ४४, सुमुखी निवृत्ता ॥

१०५. अथ दोधकछन्दः—

भोः शिष्याः, यत्र प्रथमं चामर गुरुः, तदनन्तरं काहलयुग लघुद्वय स्थाप्यते ततो हारो गुरुः, तदनन्तर लघुद्वयम्, ततः तत्थ तथा धारणीयम् । हारानन्तरं पुनः स्थापनीयमित्यर्थः । पदान्ते च कर्णगणः कर्तव्यः, तद् दोधकमिति छन्दसो नाम कथ्यते । भगणत्रयं गुरुद्वयाभ्या दोधकमिति फलितोऽर्थः ॥ अत एव भूषणे—'भत्रितयं यदि कर्णमेत पिंगलनागसुभाषितमेतत् । पण्डितमण्डलसद्धृतचित्त भामिनी भावय दोधकवृत्तम् ॥ 'दोधकमिच्छति भत्रितयाद्गौ' इति छन्दोमञ्जर्यामप्युक्तम् ।

१०६. दोधकमुदाहरति—जहा ( यथा )—

स शंकरस्तुभ्यं सुखं ददातु । स कः । पिंगजटावलीषु स्थापिता गङ्गा येन सः । तथा येनार्धांगेन नारी पार्वती धृता । यस्य शीर्षे [ अति ] णोक्खा परमरमणीया चन्द्रकला । राजत इति शेषः ॥ उट्टवणिका यथा—ऽ||, ऽ||, ऽ||, ऽऽ, ११ X ४ = ४४ ॥ दोधकं निवृत्तम् ॥

१०७. अथ शालिनीछन्दः—

भोः शिष्याः, सर्पराजेन पिंगलेन सा शालिनी आज्ञता । सा का । यत्र कर्णो द्विगुणो भवति प्रथम द्वौ कर्णौ द्विगुरुकगणौ, तत एको हारो गुरुर्विसृज्यते । ततश्च शल्यो लघुः, ततोऽपि कर्णः तदनन्तरं लघुः, अनन्तर कर्ण एव श्रूयते । एवं पदे रुद्रसंख्या वर्णा विंशती रेखाः कलाः पादे पादे यत्र गण्यन्ते । सा शालिनीति ॥ वाणीभूषणेऽपि—'कृत्वा कर्णौ मण्डितौ कुण्डलेन शङ्ख हार नूपुरं रावयुक्तम् । धृत्वा युग्मं चामरं चाविभाति शालिन्येषा प्रेयसी पिङ्गलस्य ॥' द्वितीयोऽर्थः स्पष्टः ॥ छन्दोमञ्जर्या तु सयतिनियम गणान्तरेण लक्षणमुक्तं यथा—'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति ॥

१०८. शालिनीमुदाहरति—

कर्पूरमञ्जरीसाट ( सट्ट ) कस्थ कापालिकभैरवानन्दस्य वचनं राजानं प्रति—

रण्डा विधवा चण्डा परमकोपना दीक्षिता दीक्षितपत्नी अन्याश्च धर्मदाराः । गच्छाम इति शेषः । मद्यं मांसं पीयते खाद्यते च । भिक्षया भोजन चर्मखण्डः शय्या । कौलो धर्मः कापालिकधर्मः कस्य रम्यो रमणीयो न भातीति ॥ उद्दवणिका यथा—ऽऽ, ऽऽ, ऽ, ।, ऽऽ, ।, ऽऽ, ११×४=४४ ॥ यथा वा [णीभूषणे]—'आरभ्यन्ते शर्मकर्माणि नूनं प्राज्ञैर्लोके वाच्यतामात्रभीतैः । तन्निष्पत्तौ वासुदेवः प्रमाण को वा वक्ता कृत्यकर्ताहमस्मि' ॥ शालिनी निवृत्ता ॥ अत्रैव 'वातोर्मीयं गदिता म्भौ तगौ गः' इति ग्रन्थान्तरे ॥ तत्र यदि पूर्वं म्भौ मगणभगणौ, अथ च तगौ तगणगुरू भवतः ततश्च गो गुरुर्भवति । तदा इय वातोर्मी गदिता तन्नाम वृत्तमुक्तमित्युक्तम् ॥ यथा 'ध्याता मूर्तिः क्षणमप्यच्युतस्य श्रेणी नाम्ना गदिता हेलयापि । संसारेऽस्मिन्दुरित हन्ति पुंसा वातोर्मी पोतमिवाम्बुधिमध्ये' ॥ उद्दवणिका यथा—ऽऽऽ, ऽ।।, ऽऽ।, ऽऽ, ११×४=४४ ॥ अत्रानयोर्वृत्तयोरेकत्र पञ्चमो वर्णो गुरुरन्यत्र च लघुरिति स्वल्पो भेद इति कृत्वा चतुर्दशोपजातिभेदा उत्तरत्र दर्शयिष्यमाणपरिपाट्या विज्ञातव्या इति सूच्यत इत्यलमतिविस्तरेणेति ॥

१०९. अथ दमनकच्छन्दः—

भोः शिष्याः, यत्र प्रथम द्विजवरयुगं चतुर्लघुकगणद्वयम् ततो लघुद्वयं पदे पदे अन्ते प्रकटितो वलयो गुरुर्यत्र । एवं पदचतुष्टयेऽष्टचत्वारिंशत् ४८ कला यत्र, तद्दमनकमतिललितं छन्दो भवतीति फणिपतिः पिङ्गलो भणति । द्विजवरद्वयसगणाभ्या दमनक छन्द इति फलितोऽर्थः ॥ तथा च भूषणे—'द्विजवरगणयुगममलं तदनु चकलय करतलम् । फणिपतिवरपरिगणितं दमनकमिदमतिललितम् ॥ इति ॥

११०. दमनकमुदाहरति—जहा (यथा)—

भो लोकाः, श्रीमधुमथनं कृष्णं प्रणमत । कीदृशम् । परिणतस्य परिपूर्णषोडशकलस्य शशधरस्येव वदन यस्य तम् । पुनः विमल-कमलदलवन्नयनं लोचन यस्य तम् । विहितमसुरकुलानां दनुजकुलाना दलनं कृतं येन तम् ॥ यथा यथा वा [णीभूषणे]—'प्रणमत मधुरिपुचरणं भवजलनिधिपरितरणम् । अभिनवकिसलयरुचिर सुरपतिसकलभयहरम् ॥' इति ॥ उद्दवणिका यथा—।।।।, ।।।।, ।।ऽ, ११×४=४४ ॥ दमनकं निवृत्तम् ॥

१११. अथ सेनिकाछन्दः—

भोः शिष्याः, यत्र प्रथमं ताल आदिगुरुस्त्रिकलः ऽ। तत एवं णन्दसमुद्दतूरआ आनन्दसमुद्रतूर्याख्या आदिगुरवस्त्रिकला एवं ततश्च जोहलेन रगणेन मध्यलघुकगणेनैतच्छन्दः पूरणीयम् । अत्र च—एकादशाक्षराणि पादे ज्ञातव्यानीति नाग-

राजेन पिङ्गलेनजल्पिता सेनिकां जानीत इति ॥ 'श्रेण्युदीरिता रजौ रलौ गुरुः' इति छन्दोमञ्जर्यां गणभेदेन नामान्तरमुक्तम् ॥ वाणीभूषणे तु—'हारशङ्खमण्डनेन मण्डिता या पयोधरेण वान्त्य अङ्किता । रूपनूपुरेण चातिदुर्लभा सेनिका भुजङ्गराजवल्लभा ॥' गुरुलघुरूपेणैकादशापि वर्णा यत्र सा सेनिका। सैव च यदा हारशङ्खविपरीताभ्या रूपनूपुराभ्यां क्रमशो मण्डिता सती वसुवर्णानन्तरं च यदि रगणविपरीतेन पयोधरेण जगणेनाङ्किता भवति तदा सा भुजङ्गराजवल्लभातिदुर्लभा सेनिका च्छन्दोद्वयमुक्तमिति ॥

११२. सेनिकामुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी कर्णनरपतिं स्तौति—स कर्णो जयतीति युग्मकेनान्वयः । स कः । झटिति पत्तीना पतत्पादाघातेन भूमिः कम्पिता । यस्य । तथा यः खतुरगाणां टापोत्खातधूलीजालैः सूर्योऽपि समाच्छन्नः । येन च गौडराजं जित्वा तस्य मनोऽहंकारो मोटितः । येन कामरूपराजस्य बन्दीकृता वनिता मोचिता ॥ यथा वा वा [ णीभूषणे ]—'साधुघाष्टबाहुराजिमण्डिता रक्तबीजरक्तपानपण्डिता । चण्डमुण्डशुम्भदम्भखण्डिका मङ्गलानि नो ददातु चण्डिका ॥' उट्टवणिका यथा—ऽ।, ऽ।, ऽ।, ऽ। ऽ, ऽ, ११×४=४४ ॥ हारशङ्खविपरीतरूपनूपुररूपः यथा—'मुदा पदं सदा वहे महेश तवापि काममद्भुत गणेश । करालभालपट्टिका विशाल भजे मदीयहृत्सरोमराल ॥' उट्टवणिका यथा—।ऽ ।ऽ ।ऽ ।ऽ ।ऽ।, ११×४=४४ ॥ सेनिका निवृत्ता ॥

११३. अथ मालतीछन्दः—

भोः शिष्याः, यत्र कुन्तीपुत्राः पञ्च कर्णाः शरसख्यया दत्ता ज्ञायन्ते, अन्ते च कर्णानामवसाने कान्तः सुन्दर एको हारो गुरुर्मान्यते अभ्यर्हितः क्रियते । एवमेकादशापि वर्णा यत्र गुरवः क्रियन्ते । अत एव पादे पादे गकारद्वैगुण्येन द्वाविंशतिर्मात्रा दृष्टाः । तन्मालतीनामकं छन्दो नागेशः शेषः पिङ्गलो जल्पतीति ॥ भूषणे तु—'आदौ चत्वारोऽस्या कर्णा दृश्यन्ते शेषे यस्यां रामा हारा जायन्ते । रुद्रैर्वर्णैः पादे पादे सख्याता मालत्येषा वाणीभूषा विख्याता ॥'

११४. मालतीमुदाहरति—जहा ( यथा )—

स्थाने स्थाने हस्तियूथा दृश्यन्ते यथा मेरुशृङ्गे नीला मेघाः प्रेक्ष्यन्ते । अपि च वीराणा हस्ताग्रे खड्गो राजते नीलमेघमध्ये नृत्यन्ती विद्युदिवेति ॥ यथा वा [ णीभूषणे ]—'पायान्मायामीनो लीनः कल्पान्ते प्रादिक्क्षोणीभर्तुः पाणिक्रोडे यः । व्यात्ताम्भोधिस्तस्मिन्काले लीलाभिः सम्यक्सर्वौषध्या यत्पृष्ठे तिष्ठन् ॥' उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽ, ११×४=४४ ॥ मालती निवृत्ता ॥

११५. अथेन्द्रवज्राछन्द :—

भोः शिष्याः, यत्रादौ दीयते तकारयुगल तगणयुगलं पदेषु चतुर्ष्वपीत्यर्थः। अन्ते तकारयुगलावसाने नरेन्द्रो जगणो गुरुमध्यको गणस्तस्यापि शेषे गुरुयुगं तद् ध्रुवं निश्चितमिन्द्रवज्राख्य छन्दः इति फणीन्द्रो जल्पति। मात्राश्चाष्टादशात्र पादे भवन्ति। समा नाधिका इत्यर्थः। सुसज्जा शोभनीकृत्य लिखिता इत्यर्थः॥ अत एव छन्दोमञ्जर्याम्—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इत्युक्तम्॥ वाणीभूषणे तु—'कर्णध्वजौ गण्डमृगेन्द्रहारा भवन्ति तस्याश्चरणे समास्ते। तामिन्द्रवज्रा मतिमात्रकान्ता भोगीन्द्रवक्त्राब्जमरन्दधाराम्॥'

११६. इन्द्रवज्रामुदाहरति—जहा (यथा)—

कर्पूरमञ्जरीसाटकस्थं भैरवानन्दकापालिकस्य राजान प्रति वचनम्—अहं मन्त्रं तन्त्रं वा खलु निश्चयेन उभयोर्मध्ये किमपि न जाने, ध्यानं च न जाने, कोऽपि गुरुप्रसादो नो नास्तीत्यर्थः। तर्हि किं जानासीत्यत आह—मद्य पिबामः, महिलां रमामः, कौलमार्गलग्ना मोक्ष व्रजाम इति॥ यथा वा [णीभूषणे]—'रक्ताम्बुदेनोदितलम्बमाला शीतांशुचण्डातपकुण्डलाभ्याम्। तारांशुतारावलिहृद्यहारैः स्वीया श्रियं भूषयतीव संध्या॥' उट्टवणिका यथा—ऽऽ।, ऽऽ।, ।ऽ।, ऽऽ, ११×४=४४॥ इन्द्रवज्रा निवृत्ता॥

११७. अथोपेन्द्रवज्राछन्दः—

भोः शिष्याः, यत्रादावेको नरेन्द्रो जगणो गुरुमध्यमो गणः, ततः सुतरा सज्जस्तगणोऽन्तलघुर्गणः, तदनन्तर पयोधरो जगण एव। ततः कर्णगणो ज्ञातव्यः। तदुपेन्द्रवज्रानामक फणिराजेन पिङ्गलेन दृष्टं शुभ वर्णसाटकं वर्णरचितपद्य छेका विदग्धाः पठन्ति। अतएव छन्दोमञ्जर्याम्—'उपेन्द्रवज्रा प्रथमे लघौ सा' इत्युक्तम्॥ वाणीभूषणे 'तु—पयोधर हारयुग दधाना कर सशङ्ख वलयद्वय च। उपेन्द्रवज्रा भुजगैकसारा विराजते पन्नगराजकान्ता॥' द्वितीयोऽर्थः स्पष्टः॥

११८ उपेन्द्रवज्रामुदाहरति—जहा (यथा)—

यस्य सुधर्मे चित्तं येषामेवंविधा गुणवन्तः पुत्रा सुकर्मरक्तं विनीत कलत्र चेद्भवति, स्वय च विशुद्धदेहा निरोगशरीराश्च भवन्ति चेत्। धनयुक्तागृहाश्चेत्, तदा कुर्वन्ति के वा वर्बराः स्वर्गाकाङ्क्षा स्वर्गे स्नेह कुर्वन्ति। एतादृशसामग्रीयुक्ताना पुरुषाणा भूलोकः स्वर्गादप्यतिरिच्यते इति॥ यथा वा [णीभूषणे]—'न षट्पदश्रेणिभिरेणदृष्टेर्न वा नवाम्भोधरकन्दलीभिः। अतुल्यता स्यात्कबरीलतेति दिवा समुन्मीलति नान्धकारः॥' उट्टवणिका यथा—।ऽ।, ऽऽ।, ।ऽ।, ऽऽ, ११×४=४४॥ उपेन्द्रवज्रा निवृत्ता॥

११९. अथोपजातयः—

इन्द्रवज्रोपेन्द्रवज्रे छन्दसी एक कुरु चतुरधिक दश नाम १४ जानीहि। समजातौ समान्येवाक्षराणि देहि पिङ्गलो भणति। एवमुपजातिं कुर्विति। पादाकुलकं छन्दः ॥

१२०. तत्र चतुर्दशोपजातिभेदानयनप्रकारमाह—

चतुरक्षरस्य प्रस्तारं कुरु इन्द्रोपेन्द्रवज्रयोः लघुगुरूंश्च जानीहि। मध्ये सर्वलघ्वोरन्तराले चतुर्दशोपजातयो भवन्तीति पिंगलो जल्पति किमिति व्याकुलीभवथ शिष्या इति ॥ अयमर्थः—चतुरक्षरप्रस्तारस्तावत्षोडशविधः। तत्र गुरुचतुष्टयेनेन्द्रवज्रायाश्चतुष्पादज्ञानम्। चतुर्ष्वपि पादेष्विन्द्रवज्राया आदौ गुरुरिति शेषेन लघुचतुष्टयेनोपेन्द्रवज्रायाश्चतुर्ष्वपि पादेष्वादौ लघुरिति पादचतुष्टयज्ञानं भवति। मध्ये चोपेन्द्रवज्रापादमादिं कृत्वा चतुर्दशोपजातयो भवन्तीति ॥ पादाकुलकं छन्दः ॥ वाणीभूषणेऽपि—'उपेन्द्रवज्रापदसगतानि यदीन्द्रवज्राचरणानि च स्युः। तदोपजातिः कथिता कवीन्द्रैर्भेदा भवन्तीह चतुर्दशास्याः' ॥ इति ॥

१२१. उपजातिमुदाहरति जहा ( यथा )—

गौरी शिवं प्रत्याह—बालः कुमारः स्कन्दः स षण्मुण्डधारी। षण्मुख इत्यर्थः। उपायहीना अर्जनासमर्थाहमेकला नारी। हे भिक्षुक शिव, त्वमहर्निशं विष खाद भक्षय। गतिर्भवित्री किल का। अस्माकं षण्मुखधारिणो बालकस्य भोजनमत्यावश्यकमित्येकलाया मम का वा गतिर्भविष्यति तन्न वेद्मि। तव तु भिक्षुकस्य गरलभोजनेनापि क्षुत्प्रतिकारदर्शनादिति भावः। 'बालो' इत्यत्र 'उष्पाअ' इत्यत्र च पादद्वये इन्द्रवज्राया लक्षणम्, पादद्वये चोपेन्द्रवज्राया लक्षणमिति द्वादशी रामाख्येयमुपजातिरिति। अन्याश्चोपजातयः सुबुद्धिभिराकरेषु मत्कृतोदाहरणमञ्जर्यां च द्रष्टव्या इति ॥ अत्र च 'बालः कुमारः' इति 'गतिर्भवित्री' इति सविसर्गं केचित्पठन्ति। स च विसर्गो न दोषाय लौकिकभाषाया अनियमात्। संस्कृतमिश्रणाद्वेति सिद्धान्तः ॥

१२२. चतुर्दशानामप्युपजातीना नामान्याह—

कीर्तिः १, वाणी २, माला ३, शाला ४, हंसी ५, माया ६, जाया ७, बाला ८, आर्द्रा ९, भद्रा १०, प्रेमा ११, रामा १२, ऋद्धिः १३, बुद्धिः १४ [ इति ] तासामाख्याः ॥ विद्युन्मालाछन्दः ॥ एवमुपजातयः प्रदर्शितरूपानुसारेणाकरतो मत्कृतोदाहरणमंजरीतोऽप्युदाहर्तव्या इत्यलमतिविस्तरेण ॥ एते च भेदा रुद्रवर्णप्रस्तारपिण्डसख्यातः समधिका इति ध्येयम् ॥ उपजातयो निवृत्ताः ॥

अथैकादशाक्षरप्रस्तारे एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र रथोद्धताछन्दः—

हारसंगपयोधरा कर शङ्खयुक्तवलयेन सगतम् ।
बिभ्रती कनककुण्डलं मुद कामिनीव कुरुते रथोद्धता ॥

कामिनीपक्षेऽर्थः स्पष्टः ॥ 'रात्परैर्नरलगै रथोद्धता' इति च्छन्दोमञ्जर्यां राद्र-गणात्परैर्नगणरगणलघुगुरुभी रथोद्धताछन्दः ॥

यथा—

दीर्घघोषकुलदेवदीर्घिकापङ्कज रविकरो व्यराजत ।
ईर्ष्ययैव दुहितुः पयोनिधेर्यत्र वासमकरोत्सरस्वती ॥

उट्टवणिका यथा—ऽ, ।ऽ।, ।।ऽ, ।, ऽ।, ऽ, ११×४=४४ ॥ यथा वा [ णीभूषणे ]

राधिका दधिविलोडनस्थिता कृष्णवेणुनिनदै रथोद्धता ।
यामुन तटनिकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् ॥

उट्टवणिका यथा—ऽ।ऽ, ।।।, ऽ।ऽ, ।, ऽ, ११×४=४४ ॥ इति रथो-द्धता निवृत्ता ॥

अथ स्वागताछन्दः—

हारिणी कनककुण्डलयुक्ता पुष्पपुष्करयुगा वलयश्रीः ।
वर्णिताहिपतिवक्त्रसहस्रैः स्वागता हरति कस्य न चेतः ॥

अय च स्वमेवागता स्वागता सुन्दरमागतमागमनं यस्या वेति तादृशी नायिका कस्य न मानसं हरतीति ध्वनिः ॥ 'स्वागता रनभगैर्गुरुणा च' इति छन्दोमञ्जर्यां रगणनगणभगणगुरुभिर्गुरुणा च स्वागता भवतीत्युक्तम् । यथा—

पङ्कज तदपि पाथसि मग्न चन्द्रमाः स च घनान्तरितोऽभूत् ।
त्वन्मुखेन्दुहतयापि विनोदं नैव हन्त सहते हतरेखा ॥

उट्टवणिका यथा—ऽ, ।, ऽ, ।, ।।ऽ, ।।ऽ, ऽ, ११×४=४४ ॥ यथा वा [ णीभूषणे ]—

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः ।
तस्य नूनममरालयभाजः स्वागतादरकरः सुरवर्गः ॥

उट्टवणिका यथा—ऽ।ऽ, ।।।, ऽ।। ऽऽ, ११×४=४४ ॥ स्वागता निवृत्ता ॥

अथानुकूलाछन्दः—'स्यादनुकूला भतनगगाश्चेत्'

भगणतगणनगणगुरुगुरवश्चेद्भवन्ति तदानुकूलाभिधं छन्दो भवति ॥ यथा—

वल्लववेषा मुररिपुमूर्तिर्गोपमृगाक्षीकृतरतिपूर्तिः ।
वाञ्छितसिद्धौ प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥

उट्टवणिका यथा--SII, SSI, III, SS, ११ × ४ = ४४ ॥ अनुकूला निवृत्ता ॥

अथ भ्रमरविलसितच्छन्दः--'मो गो नौ गो भ्रमरविलसितम्'
मगणगुरुनगणद्वयगुरुभिर्भ्रमरविलासितानामकं छन्दो भवति ॥ यथा—

मुग्धे मानं परिहर न चिरात्तारुण्य ते सफलयतु हरिः ।
फुल्ला मल्ली भ्रमरविलसिताभावे शोभां कलयति किमु ताम् ॥

उट्टवणिका यथा—SSS, S, III, III, S, ११ × ४ = ४४ ॥ भ्रमरविलसिता निवृत्ता ॥

अथ मोटनकच्छन्दः—'स्यान्मोटनक तजजाश्च लगौ'
तगणजगणद्वयलघुगुरुभिर्मोटनकनामाच्छन्दः ॥

यथा—
रङ्गे खलु मल्लकलाकुशलश्चाणूरकभटमोटनकम् ।
यः केलिलवेन चकार समे ससाररिपुं प्रतिमोटयतु ॥

अत्र तुरीयचरणे पादान्तलघोर्वैकल्पिकं गुरुत्व ज्ञेयम् ॥ उट्टवणिका यथा—SSI, ISI, ISI, I, S, ११ × ४ = ४४ ॥ अत्रापि प्रस्तारगत्या रुद्र ( ११ ) संख्याक्षरस्याष्टचत्वारिंशदधिकं सहस्रद्वयं २०४८ भेदा भवन्ति । तत्र कियन्तोऽपि भेदाः प्रोक्ताः, शेषा भेदाः सुधीभिः प्रस्तार्य समूहनीया इति ॥

१२३. अथ द्वादशाक्षर प्रस्तारे प्रस्तारादिभूतं विद्याधरनामकं छन्दोऽभिधीयते—

भोः शिष्याः, यत्र सर्वसारभूताश्चत्वारः कर्णा द्विगुरवो गणाः पादे दीयन्ते, पादान्ते कान्ताश्चत्वारो हारा गुरवश्च दीयन्ते । एव द्वादशापि वर्णाः पादे गुरवः कर्तव्या इत्यर्थः । तत्र पदचतुष्टयेऽपि द्वादशचतुष्केण समुदिता वर्णा अष्टचत्वारिंशत् । तद्द्विगुणाभिप्रायेण मात्राः षण्णवति ( ९६ ) गंणिता यत्र तच्छन्दःसुसार श्रेष्ठं विद्याधरनामक छन्दो भवतीति नागराजः पिङ्गलो जल्पतीति ॥

१२४. विद्याधरमुदाहरति—जहा ( यथा )—

स इति प्रसिद्धो दीव्यतीति देवः अप्रतिहतक्रीडः परमशिवोऽनाद्यन्तो नित्य विहरणशीलः । तदुक्त योगवासिष्ठे ॥ 'न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः आकारादिपरिच्छिन्ने मिते वस्तुनि तत्कुतः । अकृत्रिममनाद्यन्तं देवन देव उच्यते ॥' इति प्रतिपादितलक्षणः तुम्हा युष्मभ्यं भक्त्या तोषितः सन् सुख निरतिशयानन्दचिन्मयास्वादलक्षणं ददातु । स कः । यस्य विष कण्ठे कालकूटपानात् । यस्य वासो दिक् । दिगम्बर इत्यर्थः । यस्य शीर्षे गङ्गा । गङ्गाधर इत्यर्थः । येन,

नागराजः शेषो हारः कृतः। येन च गौरी पार्वती अर्धाङ्गे धृता। अथ च गात्रे चर्म गजाजिन च धृतम्। येन च कामः कदर्पो मारू मारितो दग्धः। अत एव तेन तेन कर्मणा प्राप्ता कीर्तिर्येन तादृशो वः सुखदोऽस्त्विति। उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, १२×४॥ विद्याधरो निवृत्तः॥

१२५. अथ भुजङ्गप्रयात छन्दः—

हे मुग्धे, यत्र धओ ध्वज आदिलघुस्त्रिकलः प्रथम भवति, ततश्चामरो गुरुः, एव रूपक्रमेण शेषः सपूर्णश्चरणः स्थाप्यते। तद्विस्तारमाह—यथा हारो मुक्ताहारश्चतुर्भिः सरैः क्रियते, तथा इदमपि शुद्धदेहम्। उट्टवणिकासमीकृत गणं पदे विंशतिरेखाः कला यस्य तादृश भुजङ्गप्रयात चतुर्भिश्छन्दोभिः किज्जे कर्तव्यमित्यर्थः॥

१२६ उक्तमेव प्रकारान्तरेण गाथाछन्दसा व्यक्तीकृत्याह—

यत्र प्रथमं अहिगण आदिलघुः पञ्चकलोऽर्थात् यगणश्चत्वारः पदे प्रसिद्धाः। अथ च—यगणस्य पञ्चकलत्वात्पदे विंशतिः कलाः। एवरूपं षोडशचरणेन चतुश्छन्दोभिप्रायेण विंशत्यधिका त्रिशती मात्राणा समग्रा सख्या भवतीति पिङ्गलो भणति॥ वाणीभूषणेऽप्युक्तम्—'यदा वृत्तयो गन्धकर्णक्रमेण भवेयुश्चतस्रो चर धृत्तमेतत्। भुजङ्गप्रयातं हरिप्रीतिहेतोर्भुजङ्गाधिराजस्तदा सजगाद॥

१२७. भुजङ्गप्रयातमुदाहरति—जहा (यथा)—

अहो इत्याश्चर्ये। इयं कामराजस्य मदननरपतेः सेना, नागरी अतिकुशला। राजत इति शेषः। यद्वा—इय नागरी कदर्पभूमिपतेः सेनेव भाति। सेनासामग्रीमाह—एतस्याः पाए चरणे महामत्तमातङ्गः स्थापितः। गजगमनेति भावः। अथ—एतस्याः कटाक्षेऽपाङ्गे तीक्ष्णबाणाः स्थापिताः। तथैव च भ्रुवोः समान शुद्ध धनुः स्थापितमिति॥ उट्टवणिका यथा—।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, २२×४=४८॥ यथा वा [णीभूषणे]—'निशाया तमःपूरसपूरिताया प्रयान्ती रहस्त्वत्समीपं समुत्का। अकस्मात्समालोक्य मामन्तिके ते तदा ह्रीयुता तोयराशेः सुता स्यात्॥' उट्टवणिकापि प्रकारान्तरेग यथा—।, ऽऽ, ।, ऽऽ, ।, ऽऽ, ।, ऽऽ, २२×४=४८॥ भुजङ्गप्रयात निवृत्तम्॥

१२८. अथ लक्ष्मीधरच्छन्दः—

भोः शिष्याः, यत्र प्रथम हारो गुरुः, ततो गन्धो लघुः, ततः कर्णो द्विगुरुर्गणः, ततः पुनर्गन्धो लघुरेव तदनन्तरं कर्णः, ततः शब्दो लघुः, तथा तो तकारस्तगणोऽन्त्यलघुर्गण इत्यर्थः॥ ततोऽपि गुरुर्गण्यते। एवं द्वादशवर्णात्मकं पदम्। उक्तलक्षणमेवोत्तरार्धेन स्पष्टीकरोति—चारीति। चत्वारो जोहा गणा रगणा

मध्यलघुका गणा यत्रेतद्रूप लक्ष्मीधर इति ज्ञातव्यमिति नागराजः पिङ्गलो भणति ॥ वाणीभूषणेऽप्युक्तम्—'द्वादशैर्वर्णकैर्निर्मितं सततं तद्धि लक्ष्मीधरं वृत्तमाकीर्तितम् । दृश्यते यच्चतुर्जोहलैरङ्कितं पन्नगाधीशवाणीविनोदायितम् ॥' चतुर्जोहलैश्चतुर्भी रगणैरित्यर्थः ॥ ग्रन्थान्तरे तु 'स्रग्विणी' इति नामान्तरम् ॥ अत एव छन्दोमञ्जर्याम्—'कीर्तितैषा चतूरेफिका स्रग्विणी' इत्युक्तम् ॥

१२९. लक्ष्मीधरमुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी कर्णं स्तौति—येन कर्णेन मालवा देशविशेषा भञ्जिता आमर्दिताः, कानलाश्च देशविशेषा गञ्जिताः, कुक्कुटा अपि निर्जिताः, गुर्जरा लुण्ठिताः, वङ्गा वङ्गदेशा भग्नाः, उत्कला मोटिताः, म्लेच्छाश्च कर्तिताः लवशः खण्डिताः इत्यर्थः । अतः सर्वत्र कीर्तिः स्थापिता येन स कर्णो जयतीति प्रबन्धस्थेन कर्त्रा सह सम्बध्यते ॥ उट्टवणिका यथा—ऽ, ।, ऽऽ, ।, ऽऽ, ।, ऽऽ, ।, ऽ, १२×४=४८ ॥ यथा वा [ णीभूषणे ]—'रासकेलीकलोल्लाससम्भावित गोपसीमन्तिनीवृन्दसंलालितम् । राधया गीतसमुग्धयालिङ्गितं नौमि गोपालक देवकीबालकम् ॥' स्रग्विणी निवृत्ता ॥

१३०. अथ तोटकच्छन्दः—

भोः शिष्याः, यत्र ध्रुवं निश्चितं चत्वारः सगणा गुर्वन्तगणाः पतन्ति गणेषु षोडशमात्रासु विरामः कथितः । तथा पिङ्गलेन भणितमुचित यत्तदिह लोके छान्दसिकैस्तोटकमिति छन्दोवर रचितमिति ॥ भूषणेऽप्युक्तम्—'विनिधेहि चतुःसगण रुचिर रविसंख्यकवर्णकृत सुचिरम् । फणिनायकपिङ्गलभणित कुरु तोटकवृत्तमिदं ललितम् ॥' 'वद तोटकमब्धिसकारयुतम्' इत्यन्यत्रापि ॥

१३१. तोटकमुदाहरति—जहा ( यथा )—

हे गुर्जर गुर्जराधिपते, कुञ्जरान्महीं च त्यक्त्वा चल । अपसरेत्यर्थः । हे बर्बर वृथाप्रलापिन् , तव जीवनमद्य नास्ति । यदि कुप्यति कर्णनरेन्द्रः तदा रणे को हरिः को वा हरः, को वज्रधरः । कुपितस्य तस्य पुरत एते देवा अपि स्थातुमशक्ताः, किमुत त्वम् । अतः सर्वमपि वस्तुजात विसृज्य महीमपि त्यक्त्वा पलायनमेवोचित मिति गुर्जरदेशाधिपतिं प्रत्यमात्यवचनम् ॥ उट्टवणिका यथा—।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, १२×४=४८ ॥ तोटकं निवृत्तम् ॥

१३२. अथ सारङ्गः—

भोः शिष्याः, यच्चतुस्तकारस्य तगणचतुष्टयस्य सम्यग्भेदेनोत्कृष्ट सारङ्गरूपकं तत्पिङ्गलेनैव दृष्टम् , यच्च पादेषु चरणेषु तृतीये वर्णे विश्रामसंयुक्तं न जायते कान्तिरस्य च्छन्दसोऽन्योन्यभागेन प्रस्तारशीत्येत्यर्थः ॥ भूषणे तु—कर्णं ध्वजं

जोहलं चामरं हि चिह्नं सतालं सदा संविधेहि । ख्यातं तथा पिङ्गलाधीश्वरेण सारङ्गमेतच्चतुर्हीरकेण ॥' चतुर्हीरकेण चतुर्भिस्तगणैरित्यर्थः ॥ पञ्चकलप्रस्तारे ऽन्तलघोः पञ्चकलस्य हीरकमिति संज्ञा, वर्णवृत्ते तु तस्यैव तगणसंज्ञेत्युक्त एवार्थः इति ॥

१३३. सारङ्गमुदाहरति—जहा ( यथा )—

रे इति साक्षेपं संबोधनम् । गोड गौडदेशाधीश, तव हस्तियूथानि गजराजवृन्दानि थक्कन्तु तिष्ठन्त्वित्यर्थः । यतः पाइक्कवूहाइं पत्तिव्रातानि पल्लट्टि परावृत्य युध्यन्ते । यद्वा हस्तियूथविशेषण पदातिबहुलानीति । वस्तुतस्तु काशीशराजस्य शरासाराः वाणपरम्परास्तेषामग्रे किं हस्तिभिः, किं वा पत्तिभिः, कि वा वीरवर्गेण महासुभटसमुदायेनेति ॥ उट्टवणिका यथा—ऽऽ।, ऽऽ।, ऽऽ।, ऽऽ।, १२×४=४८ ॥ सारङ्गो निवृत्तः ॥

१३४. अथ मौक्तिकदामच्छन्दः—

भोः शिष्याः, यत्र पदे चत्वारः पयोधरा जगणा गुरुमध्यमा गणाः प्रसिद्धास्तत्र त्रिभिरधिकास्त्रयोदश । अर्थात् षोडशमात्राभिः पदं यत्र तन्मौक्तिकदाम छन्दो भवति । अत्र च न पूर्वं हारो गुरुः, न चान्ते दीयत इति । समुदितमात्रासख्यामाह—षट्पञ्चाशदधिक शतद्वयं मात्राणामिति ॥ अयमर्थः—षोडशाचतुष्केण चतुःषष्टिः, तत्र चतुर्भिः सरैर्मौक्तिकदाम्नोऽतिशोभाकरत्वादिदमपि वृत्त चतुश्छन्दोभिप्रायेण चतुःषष्ट्या कलया चतुष्कीकृतं षट्पञ्चाशदधिकशतद्वयमात्राधिकं भवतीति ॥ भूषणेऽप्युक्तम्—पयोधरमत्र चतुष्कमवेहि कलाश्चरणे किल षोडश देहि । भुजंगपतेर्हृदि मौक्तिकदामसुवृत्तमिदं शृणु मौक्तिकदाम ॥

१३५. मौक्तिकदामोदाहरति—जहा ( यथा )—

काचित्प्रोषितभर्तृका सखीमाह—हे सखि, कायो दुर्बलो भूतः ग्रासस्त्यक्त एव । क्षणे क्षणे ज्ञायतेऽच्छो निश्वासः । एवं सत्यपि प्राकृते पूर्वनिपातानियमात् तारेणादीर्घेण कुहूरवाणा कोकिलानां रवेण दुरन्तो वसन्तः । अथवा—कुहूरवाणा कोकिलानां तारेणातिदीर्घेण स्वरेण दुष्टोऽन्तो यस्य तादृशोऽय वसन्तः प्राप्तः तस्मात्—अथ किं वा कामो निर्दयः मत्प्राणापहारकत्वात् । किं-वा कान्तो वल्लभ एव निर्दयः, य एतादृशेऽपि मधुसमये नागत इति ॥ उट्टवणिका यथा—।ऽ।, ।ऽ।, ।ऽ, ।ऽ।, १२×४=४८ ॥ यथा वा [ णीभूषणे ] 'मया तव किंचिदकारि कदापि विलासिनि वाम्यमनुस्मरतापि । तथापि मनस्तव नाश्वसनाय व्रजामि कुतो भवतीमपहाय ॥' मौक्तिकदाम निवृत्तम् ॥

१३६. अथ मोदकच्छन्दः—

हे मुग्धे, तोटकच्छन्दो विपरीत कृत्वा स्थापय मोदकमिति छन्दसो नाम

कुरु। अयमर्थः—'चतुर्भिः सगणैरन्तगुरुकैर्गणैस्तोटकवृत्त भवति । विपरीतमादिगुरुकैश्चतुर्भिर्भगणैर्मोदकं कुरु' इति। तदेव स्पष्टीकृत्याह—चत्वारो भगणा आदिगुरुका गणाः सुप्रसिद्धा यत्र तन्मोदकमिति कीर्तिलुब्धः पिङ्गलो जल्पति। भूषणे तु—'पादयुगं कुरु नूपुरसुन्दरमाशु करे कुसुमद्वयमाहर। सुन्दरि सर्वजनैकमनोहरमोदकवृत्तमिद परिभावय ॥'

१३७. मोदकमुदाहरति—जहा ( यथा )—

काञ्चित्प्रोषितपतिका वर्षासमयेऽपि वल्लभमनागत मत्वातिखिन्नमानसा प्रियसखीमाह—हे सखि, गर्जतु मेघः, श्यामलोऽम्बरे, नीपः कदम्बोऽपि पुष्पितो भवतु। किंच भ्रमरोऽपि कूजतु। अस्माक तु पराधीनः परायत्त एक एव जीवः तस्मादेनं किं प्रावृट् गृह्णातु, किं वा मन्मथो गृह्णातु, अथवा—उभयोर्मध्ये कोऽपि कीलउ कीलयतु। जडीकरोत्वित्यर्थः ॥ उट्टवणिका यथा—ऽ।।, ऽ।।, ऽ।।, ऽ।।, १२×४=४८ ॥ मोदकं निवृत्तम् ॥

१३८. अथ तरलनयनीछन्दः—

हे कमलमुखि, नगणाः सर्वलघुका गणाः, तांश्चतुर्गणान्कुरु। एव च द्वादशापि वर्णोल्लघून्कुरु। प्रतिलोमगत्या प्रस्तारस्य यावत्सर्वगुरुर्भवति तावन्निर्वाह्य तरलनयनीनामकमिद वृत्तम्। ईदृश सर्वलघ्वात्मक द्वादशवर्णप्रस्तारान्त्यं भवतीति सुकविः पिङ्गलो भणति ॥ वाणीभूषणे तु—'द्विजवरगणयुगमुपनय सकुसुमनगणमिह रचय। सुदति विमलतरफणिपतिनिगदिततरलनयनमिति ॥'

१३९. तरलनयनीमुदाहरति—जहा ( यथा )—

कश्चिद्भक्तः शिव प्रार्थयते—हे कमलवदन, हे त्रिनयन, हे हर, हे गिरिवर शयन, हे त्रिशूलधर, हे शशधरतिलक, हे चन्द्रशेखर, हे गलगरल, मह्यमभिमतवरं वितर। देहीत्यर्थः ॥ उट्टवणिका यथा—।।।, ।।।, ।।।, ।।।, १२×४=४८ ॥ यथा वा [ णीभूषणे ]—'अपहर पुरहर मम दरमभिनवकलियुगभयहर। हिमगिरिविहितशयनवर सुकृतसुलभशशधर ॥' तरलनयनी निवृत्ता ॥

१४०. अथ सुन्दरीच्छन्दः—

हे सुमुखि, यत्र पूर्वं नगणस्त्रिलघ्वात्मको गणः, ततश्चामरो गुरुः, तदनन्तर गन्धयुग लघुद्वय स्थाप्यते, ततश्चामरो गुरुः, ततश्च शल्ययुगं लघुद्वय यदि सम्भवति, ततश्चैको रगणो मध्यलघुको गणः पादान्ते दृश्यते तत्सुन्दरीनामकच्छन्दः पिङ्गलेन लक्षितमिति ॥ भूषणे तु—'कुसुमगन्धरसैरतिभूपिता चरणसगतनूपुरमण्डिता। करसुवर्णलसद्वलयान्विता स्फुरति कस्य न चेतसि सुन्दरी ॥' अथ च—तादृशी सुन्दरी नायिका कस्य चेतसि न स्फुरतीत्यर्थः ॥

१४१. सुन्दरीमुदाहरति—जहा ( यथा )—

कश्चित्स्वमित्रं प्रत्याह—शीतलो दक्षिणो मारुतो वहति, कोकिलः पिकोऽपि कोमल पञ्चमं रौति। मधुकरा भ्रमरा मधुपानेन बहुस्वराः सन्तो भ्रमन्ति। अत एतादृशे वसन्ते महोत्सवे जाते सतीयं सुन्दरी कान्ता श्लेषनिमित्तं संभ्रममावेगमादराद्दधातीति ॥ उट्टवणिका यथा—।।।, ऽ, ।।, ऽ, ।।, ऽ।ऽ, १२ × ४ = ४८ ॥ यथा वा [ णीभूषणे ]—'असुलभा शरदिन्दुमुखी प्रिया मनसि कामविचेष्टितमीदृशे। मलयमारुतचालितमालतीपरिमलप्रसरो हतवासरः।' सुंदरी निवृत्ता ॥

अथ द्वादशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथम प्रमिताक्षरच्छन्दः [ वाणीभूषणे ]—

करसङ्गिशङ्खवलया सरसा कनकद्वयैकवलया सुभगा।
वरवर्णिनी रसिकसेव्यपदा प्रमिताक्षरा विजयते वनिता ॥

वनितापक्षे—सुगमोऽर्थः। वृत्तपक्षे सगणजगणाभ्यां ( सगणाभ्यां च ) प्रमिताक्षरेति फलितोऽर्थः ॥ अत एव छन्दोमञ्जर्यां 'प्रमिताक्षरा सजससैः कथिता' इत्युक्तमिति ॥

यथा [ वाणीभूषणे ]—

अभजद्भयादिव नभो वसुधां दधुरेकतामिव समेत्य दिशः।
अभवन्मही पदयुगप्रतिमा तिमिरावलीकवलिते जगति ॥

अत्र तुरीयचरणे पादान्तलघोर्विकल्पेन गुरुत्वमिति ॥

यथा वा—

अमृतस्य शीकरमिवोद्गिरती रदमौक्तिकांशुलहरीछुरिता।
प्रमिताक्षरा मुररिपोर्भणितिर्व्रजसुभ्रुवामभिजहार मनः ॥
'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥'

इति माघकाव्येऽपि ॥ उट्टवणिका यथा ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, १२ × ४ = ४८ ॥ प्रमिताक्षरा निवृत्ता ॥

अथ द्रुतविलम्बित छन्दः—'द्रुतविलम्बितमाह नभौ भरौ'।

नभौ नगणभगणौ, अथ च भरौ भगणरगणौ यत्र तद्द्रुतविलम्बितवृत्तम् इति शेषनागः पिङ्गल आहेति ॥

यथा—

तरणिजापुलिने नवबल्लवीपरिषदा सह केलिकुतूहलात्।
द्रुतविलम्बितचारुविहारिणं हरिमहं हृदयेन सदा वहे ॥

यथा वा माघकाव्ये षष्ठसर्गे—

'नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमशोभयत्स सुरभिं सुरभिं सुमनोभरैः ॥'

इति ॥ उद्दवणिका यथा—।।।, ऽ।।, ऽ।।, ।ऽ।ऽ, १२×४=४८ ॥ द्रुतविलम्बितं निवृत्तम् ॥

अथ चन्द्रवर्त्मच्छन्दः—'चन्द्रवर्त्म निगदन्ति रनभसैः'

रगणनगणभगणसगणैश्चन्द्रवर्त्माख्यं वृत्तमाचार्या निगदन्तीति ॥

चन्द्रवर्त्म पिहितं घनतिमिरै राजवर्त्म रहितं जनगमनैः ।
इष्टवर्त्म तदलंकुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥

उद्दवणिका यथा—ऽ।ऽ, ।।।, ऽ।।, ।।ऽ, १२×४=४८ ॥ चन्द्रवर्त्म निवृत्तम् ॥

अथ वंशस्थविलं छन्दः—'वदन्ति वंशस्थविलं जतौ जरौ' ।

यत्र जतौ जगणतगणौ अथ च जरौ जगणरगणौ भवतः, तद्वंशस्थविलं वृत्तमित्याचार्या वदन्ति ॥ यथा—

विलासवंशस्थविलं मुखानिलैः प्रपूर्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां जहार मानं स हरिः पुनातु वः ॥

उद्दवणिका यथा—।ऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ, १२×४=४८ ॥ वंशस्थविलं निवृत्तम् ॥

अथेन्द्रवंशाछन्दः—'तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ' ।

तद्वंशस्थविलमेव प्रथमाक्षरे गुरौ सतीन्द्रवंशाख्यं तगणद्वयजगणरगणाभ्यां (णैः) वृत्तं भवतीति वेदितव्यम् ॥ अथ चैतयो वंशस्थविलेन्द्रवंशयोरुपजातयश्चतुर्दश भवन्तीति तद्भेदाः सुधीभिः पूर्वप्रदर्शितप्रक्रियया स्तवनीया इत्युपदिश्यते । एते चोपजातिकृतचतुर्दशभेदाः प्रकृतप्रस्तारपिण्डसंख्यातोऽधिका वेदितव्या इति ॥

इन्द्रवंशा यथा—

'दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः पीताम्बरोऽसौ जगतीतमोहरः ।
यस्मिन्नधाक्षुः शलभा इव स्वयं ते कंसचाणूरमुखा मखद्विषः ॥

उद्दवणिका यथा—ऽऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ, १२×४=४८ ॥ इन्द्रवंशा निवृत्ता ॥

अथ वैश्वदेवीछन्दः—'बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' ।

यत्र ममौ मगणद्वयम्, अथ च यौ यगणद्वयम् च, यत्र बाणाः पञ्च अश्वाः सप्त, तैश्छिन्ना जातविश्रामा सा वैश्वदेवी तन्नामकं वृत्तं भवतीति ॥

यथा—

अर्चामन्येषां त्वं विहायामराणामद्वैतं नैकं कृष्णमभ्यर्च्य भक्त्या।
तत्राशेषात्मन्यर्चिते भाविनी ते भ्रातः संपन्नाराधना वैश्वदेवी॥

उट्टवणिका यथा—ऽऽऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १२×४=४८॥ वैश्वदेवी निवृत्ता॥

अथ मन्दाकिनी छन्दः—'ननररघटिता तु मन्दाकिनी'।

या नगणद्वयरगणद्वयघटिता सा मन्दाकिनी तन्नामकं वृत्तमित्यर्थः॥

यथा—

बलिदमनविधौ बभौ संगता पदजलरुहि यस्य मन्दाकिनी।
सुरनिहितसिताम्बुजस्रग्निभा हरतु जगदघं स पीताम्बरः॥

'सहशरनिधिज तथा कार्मुकम्' इत्यादि भारवौ। 'अतिसुरभिरभाजि पुष्पश्रिया' इति माघे॥ उट्टवणिका यथा—।।।, ।।।, ऽ।ऽ, ऽ।ऽ, १२×४=४८॥ मन्दाकिनी निवृत्ता॥

अथ कुसुमविचित्राछन्दः—'नयसहितौ न्यौ कुसुमविचित्रा'

यत्र नगणयगणसहितौ न्यौ नगणयगणावेव भवतः, तत्कुसुमविचित्रानामक वृत्त भवतीति॥

यथा—

विपिनविहारे कुसुमविचित्रा कुतुकितगोपी पिहितचरित्रा।
मुररिपुमूर्तिर्मुखरितवंशा चिरमवताद्वस्तरलवतंसा॥

उट्टवणिका यथा—।।।, ।ऽऽ, ।।।, ।ऽऽ, १२×४=४८॥ कुसुमविचित्रा निवृत्ता॥

अथ तामरसच्छन्दः—'इह वद तामरस नजजा यः'।

हे कान्ते, यत्र नगणजगणजगणाः, अथ च यो यगणो यदि भवति, तदा तामरसाख्यं वृत्त वद॥

यथा—

स्फुटसुषमा मकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम्।
तव मुखतामरसं मुरशत्रो हृदयतडागविकासि ममास्तु॥

उट्टवणिका यथा—।।।, ।ऽ।, ।ऽ।, ।ऽऽ, १२×४=४८॥ तामरसं निवृत्तम्॥

अथ मालतीछन्दः—'भवति नजावथ मालती जरौ'।

यत्र नजौ नगणजगणौ, अथ च जरौ जगणरगणौ भवतः सा मालतीछन्दो भवतीति॥

यथा—

इह कलयाच्युत केलिकानने मधुरसशौरभसारलोलुपः ।
कुसुमकृतस्मितचारुविभ्रमामलिरपि चुम्बति मालतीं मुहुः ॥

कुत्रचिदियमेव 'यमुना' इति ॥ 'अपि विजहीहि दृढोपगूहनम्' इति भारवौ ॥ उट्टवणिका यथा ।।।, ।ऽ।, ।ऽ।, ऽ।ऽ, १२×४=४८ ॥ मालती निवृत्ता ॥

अथ मणिमालाछन्दः—'त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः'

यत्र प्रथमं त्यौ तगणयगणौ, अथ च त्यौ तगणयगणावेव भवतः सा गुहवक्त्रैः षडाननाननैश्छिन्ना जातविश्रामा मणिमाला तन्नामकं वृत्तमित्यर्थः ॥

यथा—

प्रह्वामरमौलौ रत्नोपलयुक्ते जातप्रतिबिम्बा शोणा मणिमाला ।
गोविन्दपदाब्जे राजी नखराणामास्ते मम चित्ते ध्वान्तं शमयन्ती ॥

उट्टवणिका यथा—ऽऽ।, ।ऽऽ, ऽऽ।, ।ऽऽ, १२×४=४८ ॥ मणिमाला निवृत्ता ॥

अथ जलधरमालाछन्दः—'म्भौ स्गौ गौचे जलधरमालाब्ध्यङ्गैः'

यत्र प्रथम म्भौ मगणभगणौ, अथ च स्गौ सगणगुरू भवतः, ततश्च गौ गुरुद्वय चेद्भवति । किं च—अब्धयश्चत्वारः, अङ्गान्यष्टौ, अष्टाङ्गयोगाभिप्रायेण, तैः कृतविरतिः, तदा जलधरमाला तन्नामक वृत्तमित्यर्थः ॥

यथा—

या भक्ताना कलिदुरितोत्तप्ताना तापोच्छित्त्यै जलधरमाला नव्या ।
भव्याकारा दिनकरपुत्रीकूले केलीलोला हरितनुरव्यात्सा वः ॥

उट्टवणिका यथा—ऽऽऽ, ऽ।।, ।।ऽ, ऽ, ऽऽ, १२+४=४८ ॥ अत्रापि प्रस्तारगत्या द्वादशाक्षर प्रस्तारस्य षण्णवत्यधिक सहस्रचतुष्टयं भेदा भवन्ति तेषु कियन्तः प्रदर्शिताः ।

१४२. अथ त्रयोदशाक्षरप्रस्तारे मायानामक छन्दो लक्ष्यते—

हे मुग्धे, जं यत्र प्रथम कण्णा दुण्णा द्वौ कर्णौ गुरुद्वयात्मकौ गणौ भवतः, ततश्चामरो गुरुरेव, तदनन्तर शल्ययुगं लघुद्वयमित्यर्थः । ततोऽपि वीहा दीहा गुरुद्वयम्, ततोऽपि गन्धयुग लघुद्वय प्रकटितम् । अन्ते एतदन्ते चामरो गुरुः, हारोऽपि गुरुरेव भवति । शिष्यबोधनार्थं पदपूरणार्थं वा चरणे मात्रानियममाह—शुभकाया शुद्धशरीरा द्वाविंशतिर्मात्रा गुणयुक्ता यत्र त ता माया मायानामकं वृत्तं भण पठेत्यर्थः ॥ वाणीभूषणे तु—'कृत्वा कर्णौ कुण्डलयुक्तौ कुरु रत्नं धृत्वा पादं

नूपुरयुक्त कुरु हारम् । मायावृत्तं पिङ्गलनागोदितमेतज्जानीतादः पण्डितवक्त्राम्बुज-सारम् ॥ क्वचिदस्याः 'पदमत्तमयूरः' इति नामान्तरम् ॥

१४३. मायामुदाहरति—जहा ( यथा )—

कश्चित्स्वयमतिनिर्विण्णः स्वमित्रमुपदिशति—हे वयस्य, एतदस्थिरं शरीर पश्य गृहं सदन, जाया कलत्र, वित्तं धन, पुत्रास्तनयाः, सोदरा भ्रातरः, मित्रमित्येतानि सर्वाणि माया । हे वर्बर, किंनिमित्तमाकारयसि माम् । अतः कारणादेकां युक्तां कीर्तिं कुरु यदि सुभ्के जानासि ॥ उट्टवणिका यथा—SS, SS, S, ॥,SS, ॥,SS १३×४=५२ ॥ यथा वा [ णीभूषणे ]—'उन्नद्बाधा सप्रति राधा मधुमासे शङ्के सकेतं प्रति याता किमुदास्से । केलिकुञ्ज शून्यमवेक्ष्यास्त-रहस्या प्राणत्राण भावि कथ वा वदतास्याः ॥' 'हा तातेति क्रन्दितमाकर्ण्य विषण्णः' इत्यादि रघौ ॥ माया निवृत्ता ॥

१४४. अथ तारकछन्दः—

हे सखि, स्थापयित्वा आदौ लघुद्वयं, ततः पादे यत्र गुरुशल्यौ, गुरुः अथ च लघुद्वयमित्यर्थः । पुनरपि गुरुशल्यौ, ततोऽपि जे यत् पूर्वं गुरुशल्यद्वयमुक्तम्, तदेवाग्रे देयमिति ॥ पदान्ते च गुरुयुग क्रियते तच्छन्दोनाम तारकमिति भण्यते । सगणचतुष्टयेनान्तगुरुणा तारकमिति फलितोऽर्थः । तथा च भूषणे—'यदि तोटकवृत्तपदे गुरुरेको भवतीह तदा किल तारकवृत्तम् । फणिनायकपिङ्गलवर्णित-मेतद्वरपण्डितमण्डलिकाहृतचित्तम् ॥'

१४५. तारकमुदाहरति—जहा ( यथा )—

हे सखि, चूतवृक्षेण नवमञ्जरी गृहीता । किं च ( प्राकृते पूर्वनिपातानियमात् ) नवकिंशुकवनमतिसुन्दरं यथा भवति तथा परिपुष्पितम् । यदि तस्मिन्स-मये कान्तो दिगन्तरं यास्यति तदा किं मन्मथो नास्ति किं वा वसन्त एव नास्ति, इति सखीं प्रति नायिकावचनम् ॥ उट्टवणिका यथा—॥, S, ॥, S, ॥, S, ॥, S, S, १३×४=५२ ॥ यथा वा वा [ णीभूषणे ]—'अतिभारतर हृदि चन्दनपङ्क मनुते सरसीपवनम् विषशङ्कम् । तव दुस्तरतारवियोगपयोधेर्नहि पारमसौ भविता परमाधेः ॥ 'तारको निवृत्तः ॥

१४६. अथ कन्दच्छन्दः—

भोः शिष्याः, यत्र प्रथम ध्वज आदिलघुस्त्रिकलः क्रियते, ततस्तूरमादि गुरुस्त्रिकलः ततो हारो गुरुः, पुनरपि तूर्यमादिगुरुस्त्रिकल एव ततो हारो गुरुः, पुनरपि गुरुरेव, ततः शब्दो लघुः, ततोऽप्येकस्तकारस्तगण इत्यर्थः ॥ एव पदे एकविंशतिः कला यत्र तत् नागेन पिङ्गलेन कन्द इति छन्दोनाम जल्पितम् ।

समुदितमात्रासंख्यामाह—सर्वपादे [ न ] पादचतुष्टये [ न ] चतुरधिका अशीतिः कलाः भवन्तीति ॥ भूषणे तु—'ध्वज चामर मण्डित गन्धहारेण मृगेन्द्रद्वय चापि युक्त समुद्रेण । तदा भाविभोगीन्द्रवक्त्राब्जगीतेन जनानन्दकन्देन वृत्तेन कन्देन ॥'

१४७. कन्दमुदाहरति—जहा ( यथा )—

रे कंस, अहं एकः चञ्चलः बाल इति मा जानीहि । अह तु देवकीपुत्रस्तव वशकाल इति बुध्यस्व । जनानन्दकन्देन देवकीनन्देन तथा गृहीतः कसो यथा हृत एव दृष्टो निजनारीवृन्देनेति ॥ उट्टवणिका यथा ।ऽ, ऽ', ऽ, ऽ।, ऽ, ऽ, ।, ऽऽ।, १३×४=५२ ॥ यथा वा [ णीभूषणे ]—'हृतं ते मनो नन्दगोपालबालेन नवीनाम्बुवाहावलीचारुदेहेन । सुधावीचिसम्बाधबिम्बाधराग्रेण स्फुरद्दहंशोभालसत्कान्तिपूरेण ॥' कन्दो निवृत्तः ॥

१४८. अथ पङ्कावलीछन्दः—

हे मुग्धे, यत्र प्रथमं चामरो गुरुः, ततः पापगणः पञ्चकलः सर्वलघुको गणः ध्रुव निश्चितम्, ततः शल्यो लघुः ततः पश्चाच्चरणगणयुग्म भगणद्वय स्थापय । एव च षोडशकलाः पदे पदे ज्ञायन्ते यत्र तत् पङ्कावली छन्द इति पिङ्गलः प्रभणति ॥ वाणीभूषणे तु—'पादे कुसुमरसगन्धमतः शरगण्डकयुगलंकरूपमुपाहर । नागनृपतिवरभाषितमुद्युति वृत्तममलमिह पङ्कावलिरिति ॥

१६४. पङ्कावलिमुदाहरति—जहा ( यथा )

स एव जगति जातः, स एव गुणवान्, यः करोति परोपकार हसन्ननायासेन । यः पुनः परोपकार विरुध्यते तस्य जननी किमिति वन्ध्यैव न तिष्ठति । यथा वा [ णीभूषणे ]—'शारदविशदनिशामपि निन्दति सप्रति हृदयभिदामनुविन्दति । मन्मथविशिखभयेन निमीलति माधव तव विरहेण विषीदति ॥' उट्टवणिका यथा—ऽ, ।।।।।, ।, ऽ।।, ऽ।।, १३×४=५२ ॥ पङ्कावली निवृत्ता ॥

अथ त्रयोदशाक्षरे प्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते ।

तत्र प्रथम मृगेन्द्रमुख छन्दः—'भवति मृगेंद्रमुखं नजौ जरौ गः'

यत्र नजौ नगणजगणौ, अथ च जरौ जगणरगणौ भवतः, ततो गो गुरुर्भवति तन्मृगेन्द्रमुख छन्दः ॥ यथा—

गुरुभुजवीर्यभर हरिं मदान्धा
युधि समुपेत्य न दानवा जिजीवुः ।
क्षुधितमृगेन्द्रमुख मृगा उपेत्य
क्व नु खलु बिभ्रति जीवनस्य योगम् ॥

उट्टवणिका यथा—।।।, ।ऽ।, ।।।, ऽ।ऽ, ऽ, १३×४=५२ ॥ मृगेन्द्रमुखं निवृत्तम् ॥

अथ प्रहर्षिणीछन्दः—'त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।'

मगणनगणजगणरगणगुरुभिः, त्र्याशाभि र्विरतिर्यत्र भवति तत्प्रहर्षिणीछन्द इत्यर्थः ॥

यथा—

गोपीनामधरसुधारसस्य पानै-
रुत्तुङ्गस्तनकलशोपगूहनैश्च ।
आश्चर्यैः सुखरसविभ्रमैर्मुरारेः
संसारे मतिरभवत्प्रहर्षिणीह ॥

उट्टवणिका यथा—ऽऽऽ, ।।।, ।ऽ।, ऽ।ऽ, ऽ, १३×४=५२ ॥ प्रहर्षिणी निवृत्ता ॥

अथ रुचिराछन्दः—'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः'

यत्र जभौ जगणभगणौ, अथ च सजौ सगणजगणौ भवतः ततो गुरुः चतुर्भिः, ग्रहैर्नवभिश्च विश्रामो यत्र तद्रुचिरानामक छन्द इति ॥

यथा—

पुनातु वो हरिरतिरासविभ्रमी
परिभ्रमन्व्रजरुचिराङ्गनान्तरे ।
समीरणोल्लसितलतान्तरालगो
यथा मरुत्तरलतमालभूरुहः ॥

उट्टवणिका यथा—।ऽ।, ऽ।।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२ ॥ रुचिरा निवृत्ता ।

अथ चण्डी—नयुगलसयुगलगैरितिचण्डी'

यत्रनगणद्वयसगणयुगलगुरुभिर्युक्तं भवति तच्चण्डीनामकं वृत्तमिति ॥

यथा—

जयति दितिजरिपुताण्डवलीला—
कुपितकवलकरकालियमौलौ ।
चरणकमलयुगचापलचण्डी
पदनखरुचिजनिभोगमणिश्रीः ॥

उट्टवणिका यथा—।।।, ।।।, ।।ऽ, ।।ऽ, ऽ, १३×४=५२ ॥ चण्डी निवृत्ता ॥

अथ मञ्जुभाषिणी-—'सजसा जगौ च यदि मञ्जुभाषिणी' ।

यत्र सगणजगणसगणाः, अथ च जगौ जगणगुरू भवतः, तन्मञ्जुभाषिणीछन्दः इति। इयमेव सुनन्दिनीति शंभौ ॥

यथा—

अमृतोर्मिशीतलकरेण लालयं-
स्तनुकान्तिचोरित विलोचनो हरेः।
नियत कलानिधिरसीति वल्लवी
मुदमच्युते व्यधित मञ्जुभाषिणी ॥

उद्ववणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२, मञ्जुभाषिणी निवृत्ता ॥

अथ चन्द्रिका छन्दः—'ननततगुरुभिश्चन्द्रिका चतुर्भिः'

नगणद्वयतगणयुगलगुरुभिश्चन्द्रिका सप्तषट् विरचितविरतिर्भवतीति ॥

यथा—

शरदमृतरुचश्चन्द्रिकाक्षालिते दिनकरतनयातीरदेशे हरिः।
विहरति रभसाद्वल्लवीभिः समं त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥

यथा वा—

'इह दुरधिगमैः किंचिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिन
पुरुषमिव परं पद्मयोनिः परम् ॥'

इति भारवौ ॥ क्वचिदियमेव 'उत्पलिनी'। उद्ववणिका यथा—।।।, ।।।, ऽऽ।, ऽऽ।, ऽ, १३×४=५२ ॥ चन्द्रिका निवृत्ता ॥

अथ कलहंसछन्दः—'सजसाः सगौ च कथितः कलहंसः'

सगणजगणसगणा यत्र सगणगुरू च, स कथितः कलहंसः ॥ कुत्रचिदयमेव 'सिंहनादः' इति ॥

यथा—

यमुनाविहारकुतुके कलहंसो व्रजकामिनीकमलिनीकृतकेलिः।
जनचित्तहारिकलकण्ठनिनादः प्रमदं तनोतु तव नन्दतनूजः ॥

उद्ववणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।।ऽ, ऽ, १३×४=५२ ॥ कलहंसो निवृत्तः ॥

अथ प्रबोधिता छन्दः—'सजसाजगौ च भवति प्रबोधिता'

सगणजगणसगणाः, अथ च जगौ जगणगुरू यत्र भवतः, तत्प्रबोधिताछन्दः ॥

यथा—

शयिता मृशं चटुलमाननिद्रया रतिकेलिकुञ्जनिलये विलासिनी।
मुरवैरिणा वदनचुम्बनादिना स्मितमाततान सपदि प्रबोधिता॥

उट्टवणिका यथा—।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ, १३×४=५२॥ प्रबोधिता निवृत्ता॥

अत्रापि प्रस्तारगत्या त्रयोदशाक्षरस्य द्विनवत्युत्तरशतमष्टौ सहस्राणि च भेदाः। तेषु कियन्तो भेदा उक्ताः। शेषभेदाः सुधीभिः प्रस्तार्याकारात्स्वबुद्धितो वा सूचनीया इति॥

१५०. अथ चतुर्दशाक्षरप्रस्तारे वसन्ततिलका छन्दः—

भोः शिष्याः, यत्र प्रथमो गणः कर्णः पतति, जगणो मध्यगुरुको गणो द्वितीयः, ततस्तुरङ्गः सगणः, पुनश्च सगण एव, तथा पादे यश्च आदिलघुर्यगणश्चेत्यर्थः। एव यत्र चतुर्दशाक्षर पद भवति सा फणिनोत्कृष्टा वसन्ततिलकोक्ता तां छेका विदग्धाः सुरसा सुकवीन्द्रदृष्टा पठन्तीति॥ कुत्रचिदियमेव सिंहोद्धता॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कर्णस्फुरत्कनककुण्डलमण्डिता या भावान्विता चरणसंगतनूपुरश्रीः। गन्धान्विता सुरसना वलयावनद्धा कान्ता वसन्ततिलका मुदमातनोति॥' कान्तापक्षे स्पष्टोऽर्थः॥

१५१. वसन्ततिलकामुदाहरति—जहा (यथा)—

कर्पूरमजरीसाटकस्थं कर्पूरमञ्जरीवर्णनपरं विदूषक प्रति राज्ञो वचनमिदम्॥ ये लोकास्तस्यास्तीक्ष्णेन चक्षुषस्त्रिभागेन कटाक्षेण दृष्टा वीक्षिताः, ते कामचन्द्रमधुपञ्चमैर्मारणीया जाताः, येषु पुनर्निपतिता सकलापि दृष्टिः, ते तु तिलाञ्जलिदानयोग्यास्तिष्ठन्ति पूर्वमेव मृता इत्यर्थं। उट्टवणिका यथा—ऽऽ, ।ऽ।, ।।ऽ, ।।ऽ, ।ऽऽ, १४×४=५६॥ यथा वा [णीभूषणे]—'शभोः करेण पुलकाङ्कुरदन्तुरेण सस्मेरमामृशति कुम्भमिभाननस्य। रोमाञ्चिताञ्चितकुचान्तचलाञ्चलायाः पायात्रपातरलमीक्षितमम्बिकायाः॥' वसन्ततिलका निवृत्ता॥

१५२. अथ चक्रपदच्छन्दः—

हे मुग्धे, यत्र मुखे आदौ चरणगणो भगणो गुर्वादिगणो यत्र पतति, ततश्च संस्थापय, पुनरपि द्विजवरयुगलं चतुर्लघुकगणद्वयम्, ततश्च यत्र करतल सगणो गुर्वन्तगणो यत्रैव पदे पदे प्रतिचरण ज्ञातः, तच्चक्रपदं वृत्तमिति फणिपतिर्भणतीति त्व संभणेति॥ भूषणे तु प्रकारान्तरेण लक्षण लक्षितम्—'कुण्डलकलितनगणमिह तृ(?)तयं गन्धकुसुमरसविरचितवलयम्। चक्रमुरगपतिवरपरिगणित षोडशकलमतिसुललितभणितम्॥' आदावन्ते च गुरुद्वयम्, मध्ये द्वादशलघुभिः पिण्डतः वर्णचतुर्दशात्मकः षोडशकलश्चरणो यत्रेति फलितोऽर्थः॥

१५३. चक्रपदमुदाहरति—जहा ( यथा )—

प्राकृते पूर्वनिपातानियमात्खञ्जनोपमनयनयुगलेन वरात्युत्कृष्टा चारुकनकलता-सुषमाभुजयुगा। अथ वा—भुजयुगे चारुकनकलतायाः सुषमा यस्याः। अथ च—फुल्लकमलमुखी गजवरगमना मत्तगजराजगामिनी रमणी विधिना कस्य सुकृतफलं सृष्टा॥ उट्टवणिका यथा—ऽ॥, ॥॥, ॥॥, ॥ऽ, १४×४=५६॥ यथा वा [ वाणीभूषणे ]—'सुन्दरि नभसि जलदचयरुचिरे देहि नयनयुगमतिघनचिकुरे। मानमिह न कुरु जलधरसमये किं तव भवति हृदयमिदमदये॥' चक्रपदं निवृत्तम्॥

अथ चतुर्दशाक्षरप्रस्तार एव कानिचिद्वृत्तानि लिख्यन्ते।

तत्र प्रथमं वासन्ती छन्दः—'मत्तो मो मो गौ यदि गदिता वासन्तीयम्'।

मगणतगणनगणमगणैर्गुरुद्वयेन च वासन्तीछन्दः॥

यथा—

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला।
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम्॥

उट्टवणिका यथा—ऽऽऽ, ऽऽ।, ॥।, ऽऽऽ, ऽऽ, १४×४=५६॥

अथासंबाधाछन्दः—'मो गो गो नौ मः शरनवभिरसंबाधा'।

यत्र पूर्वं मगणस्ततो गुरुद्वयम् ततश्च नौ नगणद्वयम्, अनन्तरं मगणो भवति, शरः पञ्च, तेन पञ्चभिर्नवभिश्च यत्र विरतिर्भवति तदसंबाधाछन्दः॥

यथा—

'वीर्याग्नौ येन ज्वलति रतिरसाक्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसंबाधा।
धर्मस्थित्यर्थे प्रकटिततनुरभ्यर्थ्यः
साधूनां बाधां प्रशमयतु कंसारिः॥'

उट्टवणिका यथा—ऽऽऽ, ऽऽ, ॥।, ॥।, ऽऽऽ, १४×४=५६॥ असंबाधा निवृत्ता॥

अथापराजिता छन्दः—'ननरसलघुगैः स्वरैरपराजिता'।

नगणयुगलरगणसगणलघुगुरुभिः स्वरैः सप्तभिः कृतविश्रामापराजिता॥

यथा—

'यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता।

व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुडध्वजः ॥'

उट्टवणिका यथा—।।।, ।।।, ऽ।।, ।।।, ।, ऽ, १४×४=५६ ॥ अपराजिता निवृत्ता ॥

अथ प्रहरणकलिका छन्दः—'ननभननलगिति प्रहरणकालिका'।

नगणद्वयभगणनगणलघुगुरुभिः प्रहरणकलिकाछन्दः ॥

यथा—

व्यथयति कुसुमप्रहरण कलिका
प्रमदवनभवा तव धनुषि तया।
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम् ॥

उट्टवणिका यथा—।।।, ।।।, ऽ।।, ।।।, ।, ऽ, १४×४=५६ ॥ प्रहरणकलिका निवृत्ता ॥

अथ लोलाछन्दः—'द्विः सप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत्'।

यदि चरणे द्विः सप्तच्छिदि सप्तभिश्छेदयुक्ते म्सौ मगणसगणौ, अथ च म्भौ मगणभगणौ, ततश्च गौ गुरू भवतः, तल्लोलानामक छन्द ः ॥

यथा—

मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः।
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरुकेलिम् ॥

उट्टवणिका यथा—ऽऽऽ, ।।ऽ, ऽऽऽ, ऽ।।, ऽऽ, १४×४=५६ ॥ लोला निवृत्ता ॥

अथ नान्दीमुखी छन्दः—'स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ'।

यदि स्वरैः सप्तभिर्भेदोऽवच्छेदो यत्र तादृशे चरणे नौ नगणौ, अथ च तौ तगणौ, ततश्च गौ गुरू भवति यत्र, तन्नान्दीमुखी छन्दः ॥

यथा—

सरसखगकुलालापनान्दीमुखीयं
लहरिभुजलयाचारुफेनस्मितश्रीः।
मुरहरकलयासक्तिमासाद्य किं ते
प्रमुदितहृदया भानुजा नृत्यतीह ॥

उट्टवणिका यथा—।।।, ।।।, SSI, SSI, S, S, १४×४=५६ ॥ नान्दीमुखी निवृत्ता ॥ अत्रापि प्रस्तारगत्या चतुर्दशाक्षरस्य चतुरशीत्यधिकानि त्रिशतानि षोडशसहस्राणि च भेदानाम्। तेषु कियन्तो भेदाः प्रदर्शिताः। शेषभेदाः सुधीभिराकरतः स्वमत्या वा प्रस्तार्य स्वयमूहनीया इति दिक् ॥

१५४. अथ पञ्चदशाक्षरप्रस्तारे भ्रमरावली छन्दो लक्ष्यते—

भोः शिष्याः, यत्र करैः पञ्चभिः सगणैर्गुर्वन्तगणैर्विशेषेण लब्ध वरं रचन यत्र तत् मनोहर छन्दस्सु [ उत्तमं ] रत्नमाचार्याः प्रभणन्ति। अथ च—यत्र गुरवः पञ्च, लघवो दश, तदेतादृशं छन्दो भ्रमरावलीति रचित पिङ्गलेन प्रसिद्धं कृत्वा स्थापितम्। इदानींतनैराचार्यैरिति ॥ वाणीभूषणे तु—'भुजसगतशङ्खयुगा वलयाकलिता करपुष्पसुगन्धवती रसना रुचिरा। कनकद्वयनूपुरचारुतरा जयति भ्रमरावलिका भुजगाधिपदुर्ललिता ॥' द्वितीयोर्थः स्पष्टः ॥

१५५. भ्रमरावलीमुदाहरति—जहा ( यथा )

कश्चिद्भक्तः शिवं प्रार्थयते—हे चन्द्रकलाभरण चन्द्रशेखर देव, यदि तव दुरितगणहरणः पापसमूहविनाशकश्चरणः ( ? ) शरण प्राप्नोमि, तदा लोभे मनस्त्यक्त्वा भवन गृह निरन्तरं परिपूजयामि। अतो मह्यं तादृश सुख देहि हे रमण नित्यविहारशील येनाह त्रिविधशोकविनाशमनाः। स्यामिति शेषः ॥ यथा वा [ णीभूषणे ]—'सखि संप्रति कं प्रति मौनमिद विहितं मदनेन धनुः सशर स्वकरे निहितम्। नतिशालिनि का वनमालिनि मानकथा रतिनायकसायकदुःखमुपैमि वृथा ॥' उट्टवणिका यथा—।।S, ।।S, ।।S, ।।S, ।।S, १५×४=६० ॥ भ्रमरावली निवृत्ता ॥

१५६. अथ सर्वगुरुसारङ्गिकाछन्दः—

भोः शिष्याः, यत्र कर्णा द्विगुरवो गणाः सप्त दीयन्ते, अन्ते एको हारो गुरुर्मान्यते पूज्यते। अभ्यर्हितः क्रियत इत्यर्थः। एवं पदे पञ्चदशापि हारा गुरवो यत्र तत्सारङ्गिकाछन्द इति ज्ञातव्यम् ॥ तत्र शिष्यव्युत्पत्तिसिद्धये पादपूरणार्थं वा मात्रानियममाह—यत्र पदे गुरूणा द्विगुणाभिप्रायेण त्रिंशन्मात्राः प्राप्ताः, तन्नागिराजो जल्पति एवं छन्दः क्रियते कीर्तिरपि तेन गृह्यते। किं बहुना—यच्छ्रुत्वा त्वा मस्तकं कम्पते ॥ एतस्या एव ग्रन्थान्तरे लीलाखेल इति नामान्तरम् ॥ तथा च छन्दोमञ्जर्याम्—'एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः' इति ॥

१५८. सारङ्गिकामुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी कस्यचिन्नरपतेः सग्राममुपवर्णयति—यत्र योधा भटा वर्धितकोपाः सन्तोऽत एव वीररसावेशेन मत्ताः, अप्पाअप्पी अहमहमिकया गर्विताः साहंकाराः

जाताः । कीदृशाः । रोषेणारक्तसर्वगात्राः, तदनन्तरं तादृशसग्रामे शल्यं भल्लाश्चायुधविशेषा उत्थापिताः । अथ च—हस्तियूथानि गजसमूहाः सज्जीभूतानि । अत एव सचरच्चतुरङ्गबलपादेन भूमिः कम्पिता । किं च तादृशसङ्कुलीभूतसमरसीमनि सर्वे शूराः शूरान्तरं प्रति 'गृहाण, देहि त्यज, प्रतीक्षस्व' इत्यादि सग्रामसंपादक वचनं जल्पन्ति—इति ॥ यथा वा—'पायाद्वो गोविन्दः कालिन्दीकूलद्रोणीचक्रे रासोल्लासक्रीडद्गोपीभिः सार्धं लीलाखेलः । मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः ॥' उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽ, १५×४=६० ॥ यथा वा—'मा कान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः [ कान्त वक्र वृत्त पूर्ण चन्द्रं गत्वा रात्रौ चेत् । क्षुत्क्षामः प्राटश्चेतश्चेतो राहुः क्रूरः प्राग्रात्तस्माद्भ्रान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्तव्या ॥ ]' इति ज्यौतिषिकाणा कालपरिमाणसूचकमुदाहरणमिति ॥ सारङ्गिका निवृत्ता ॥

१५८. अथ चामरच्छन्दः—

हे कामिनि, चामरस्य छन्दसस्त्रयधिका विंशतिस्त्रयोविंशतिर्मात्राः पदे भवन्ति । तत्राष्टौ हारा गुरवः, शरा लघवस्ते च सप्त, स्थाने स्थाने निर्मला दृश्यन्ते यत्रेति नियमः । नियमान्तरमाह—आइअन्तहारसार आद्यान्तयोर्हारो गुरुः सारो यत्रैवरूपाणि पञ्चदशाक्षराणि पदे ज्ञायन्ते, तत्पिङ्गलेन नागराजेन चामरमिति छन्दो भण्यत इति योजना ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'हारवत्पयोधरत्रयं निधाय सुन्दरं चामरध्वजेन मण्डितं विधाय चामरम् । वृत्तराजमेतदेव नागराजभाषितं पण्डितावलीविनोदकारि चारुभाषितम् ॥' एतस्यैव ग्रन्थान्तरे ( छन्दोमञ्जर्यां ) तूणकमिति नामान्तरम् ॥

१५९. चामरमुदाहरति—जहा ( यथा )—

कश्चित्कविर्देवासुरसग्राममुपवर्णयति—भो योधाः सुभटाः, झटिति सज्जीभवत । यतो वाद्यानि डिण्डिमतूर्यादीनि गर्जन्ति तत्क्षणे रोषारक्तसर्वगात्राः पूत्कुर्वन्ति । भीषणा अतिभयानका दानवाः किंच धावित्वा आगत्य खड्ग पातयित्वा चलन्ति । समराङ्गण इति शेषः । अत एव वीराणा पादेन भूतलान्तर्भूमीतलमध्ये नागराजः शेषोऽपि कम्पितोऽभूदिति ॥ यथा वा [णीभूषणे ]—'रासलास्यगोपकामिनीजनेन खेलता पुष्पपुञ्जमञ्जुकुञ्जमध्यगेन दोलता । तालनृत्यशालिगोपबालिकाविलासिना माधवेन जायते सुखाय मन्दहासिना ॥' उट्टवणिका यथा—ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ, १५×४=६० चामर निवृत्तम् ॥

१६०. अथ निशिपालछन्दः—

हे सखि, पूर्वं हार गुरुं धारय ततस्त्रयः शराः । लघुत्रयमित्यर्थः । हिण्णि

परि अनया परिपाट्या त्रयो गणा गुर्वादि त्रिकलाः । पञ्चकला इत्यर्थः । अन्ते पञ्च [ गण ] कलगणत्रयावसाने रगण मध्यलघुकं पञ्चकलमेव गणं कुरु ॥ तत्राक्षरनियममाह—अत्र छन्दसि पञ्च गुरवः, पञ्चद्विगुणा [ दश ] लघवः । पदे । पतन्तीति शेषः । मात्रानियममाह—हे चन्द्रमुखि, एत्थ निशिपालनाम्नि वृत्ते विंशतिर्लघुमालाः ( कलाः ) तदेतन्निशिपालाख्य छन्दः कविषु वरो महाकवीन्द्रसर्पः पिङ्गलो भणतीति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'तालशर-रज्जुधररत्नवरसुन्दरं भावयुततालगतमन्त्यकृतचामरम् । शुद्धमतिनागपतिहृदयकृत-सगम वृत्तनिशिपालम सताद्वि हृदयगमम् ॥'

१६१. निशिपालमुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी समरमुपवर्णयति—युद्धे समरे भटा योधा भूमौ पतन्ति, उत्थाय पुनर्लगन्ति च । अभ्यमित्रमिति [ शेषः ] । ततश्च तादृशमहावीराहवे सकलोऽपि वीरवर्गः स्वर्गमनाः सन्नभिमुखं खड्गेनैव धारातीर्थाशया हन्ति । अतश्च न कोऽपि हि पलायितः । अथ च वीरैस्तीक्ष्णफलाः शरा बाणाः कर्णे गुण कृत्वा कर्णान्ताकृष्ट-शिञ्जिनीकं कार्मुकं विधायार्पिताः । परेष्वित्यर्थात् । इत्थं बाणपातनेनैव तथा दश योधा दशसंख्याकाः सुभटाः पादेन चरणेन सह कप्पिआ कर्तिताः । खण्डशः कृता इत्यर्थः ॥ उट्टवणिका यथा—ऽ।।।, ऽ।।।, ऽ।।।, ऽ।ऽ, १५×४=६० ॥ यथा वा [ णीभूषणे ]—'चन्द्रमुखि जीवमुषि वाति मलयानिले याति मम चित्तमिव पाति मदनानले । तापकरकामशरशल्यवरकीलित मानमिह पश्य नहिं कोपमतिशी-लितम् ॥' निशिपालो निवृत्तः ॥

१६२. अथ मनोहंसं छन्दः—

भोः शिष्याः, यत्रादौ हस्तः सगणो गुर्वन्तगणः, ततो नरेन्द्रद्वयं जगणद्वय दीयते, अनन्तरमेको गुरुः । तक्कइ तदनन्तरम् । काहलवेवि काहलद्वयं लघुद्वयं क्रियते, ततो गुरु स्थापयित्वा गन्धं च लघुमपि स्थापयित्वेत्यर्थः । तथा—अन्ते यत्र हारो गुरुः स्थाप्यते तन्मनोहंसमिति प्रसिद्धं छन्दः पिङ्गलेन जल्पितमिति जानीत ॥ वाणीभूषणे तु—'सगणं विधाय पयोधरद्वयसुन्दरं भगण ततो विनिधाय चामरतोमरं । मनहंसवृत्तमिदं च पञ्चदशाक्षरं भणित भुजगमनायकेन मनोहरम् ॥'

१६३. मनोहंसमुदाहरति—जहा ( यथा )—

काचिद्वसन्तमुपवर्णयन्ती प्रोषितपतिका निजसखीमाह—हे सखि, यत्र पुष्पिताः किंशुका अशोकाश्चम्पका वञ्जुलाश्च । वसन्ते पुष्पिता इति । किंच—सहकारके-सरगन्धलुब्धा भ्रमराः । वर्तन्त इति शेषः । अथ च—वहति दक्षो दक्षिणो वातः मानानां भञ्जनः, अतश्च मधुमासो वसन्तः समागतो लोकलोचनरञ्जनः ॥ यथा

वा [ णीभूषणे ]—'नवमञ्जुवञ्जुलकुञ्जकूजितकोकिले मधुमत्तचञ्चलचञ्चरीककुलाकुले । समयेऽतिधीरसमीरकम्पितमानसे किमु चण्डि मानमनोरथेन विखिद्यसे ॥' उट्टवणिका यथा—॥ऽ, ।ऽ।, ।ऽ।, ऽ, ॥, ऽ, ।, ऽ, १५×४=६० ॥ मनोहंसो निवृत्तः ॥

१६४. अथ मालिनी छन्दः—

भोः शिष्याः, यत्र प्रथमं परमतिप्रसिद्धं परमो द्विलघ्वात्मको गणस्तादृशैस्त्रिभिः परमैः प्रसिद्धम्, रससहितं शृङ्गारादिरससहित मालिनीति नाम तद्वृत्तं सरसम्। अत एव चित्तमध्ये निहितं छन्दः फणीन्द्रो भणतीति । कीदृशम्। वीअ ठामोणिबद्धं परमत्रिकानन्तरं यद्द्वितीयस्थान तत्र मोनिबद्ध मगणेन गुरुत्रयात्मकेन गणेन निबद्धम् । पुनः शरो लघुः, ततो गुरुयुत ततोऽपि गन्धो लघुः तस्याप्यन्ते कर्णेन द्विगुर्वात्मकेन गणेन नितरा बद्धं सयुक्तमित्यर्थः ॥ भूषणे तु—प्रकारान्तरेण लक्षितम्—'द्विजकुसुमसुरूपा कर्णताटङ्कयुक्ता कनकवलयहारैर्मण्डिता युक्तशङ्का। सुललितरसनासौ नूपुरश्रीसमेता हरति रसिकचित्त मालिनी कामिनीव ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥ नगणद्वयमगणयगणयुग्मयुक्त वसुस्वरकृतविरामं मालिनी वृत्तमिति फलितोऽर्थः ॥ अत एव छन्दोमञ्जर्याम्—'ननमययुतेय मालिनी भोगिलोकैः' इत्युक्तमिति ॥

१६५. मालिनीमुदाहरति—जहा ( यथा )

काचित्प्रोषितपतिका सखीमाह—हे हञ्जे नीचसखि सबोधने। 'हञ्जे हण्डे हलाह्वाने नीचा चेटीं सखीं प्रति' इत्यमरनिर्देशात् । मलयवातो दक्षिणानिलो वहति । अत एव हन्त इति खेदे । कम्पन्ते गात्राणि । अथ च कोकिलालापबन्धः श्रवणरन्ध्रं हन्ति पिकपञ्चमस्वरप्रबन्धः कर्णरन्ध्रं भिनत्तीत्यर्थः । किंच दशसु दिक्षु भ्रमरझंकारभाराः श्रूयन्ते । अत एव जातबलश्चण्डोऽतिकठोराशयश्चाण्डाल इव मारो मारात्मकः कामो हन्ति हन्ति मा मितिशेपः । हन्तीति वीप्सया निर्दयत्वमेतस्य मदनस्य सूचितमिति भावः ॥ यथा वा [ णीभूषणे ]—'नयनविगलदस्रुस्रोतसा कृष्यमाणे नवकिसलयतल्पे हन्त सुप्ता मृगाक्षी । प्रबलमदनबाधालोलदोर्वल्लिरेषा विरहजलधिपारं गन्तुमभ्यस्यतीव ॥' उट्टवणिका यथा—॥, ॥, ॥, ऽऽऽ, ।, ऽऽ, ।, ऽऽ, १५×४=६० ॥ मालिनी निवृत्ता ॥

१६६. अथ शरभछन्दः—

भोः सुप्रियाः सुतरां प्रियाः शिष्याः, प्राकृते पूर्वनिपातानियमात् फणिगणानां पतिना (त्या) पिङ्गलेन कथितं तच्छरभाख्यं छन्दः । कीदृशम् । यत्र सुप्रियगणो लघुद्वयात्मको गणो रसयुगेन लघुद्वयेन सहितः पूर्वं भणितः पठितः,

तथा—'विहु द्वौ सुप्रियगणौ रसयुगेनैव सहितौ कार्यौ ततः करतलं सगणः पदे पदे प्रतिपदं लघ्वः। यत्र चैव प्रकारेण पदे पदे चतुश्चतुष्कला गणाः सुतरा हिताः, तादृश वृत्त शरभनामकमिति। भूषणेऽपि—'द्विजवरत्रि (?) तयकलितमिह सगण कलय शरभमतिरतिरतिकरणम्। कविवरसकलहृदयकृतहरण फणिवरनरपतिवदनविहरणम् ॥'

१६७. शरभमुदाहरति—जहा (यथा)—

कश्चित्कामुकः कामपि कामिनीमुपवर्णयति—तरलकमलदलसदृशनयना शरत्समयशशिसुसदृशवदना मदकलकरिवरसालसगमना इय रमणी येन सुकृतफलेन पुण्यपुञ्जेन सृष्टा किं तत्सुकृतफलमिति न जानीमहे। इति वितर्कालकारः॥ यथा वा [णीभूषणे]—'अमलकमलदलरुचिधरनयनो जलनिधिमधिफणिपतिफणशयनः। दनुजविजयसुरपतिनतिमुदितो हरिरपहरतु दुरिततति मुदितः॥' उट्टवणिका यथा—॥, ॥, ॥, ॥, ॥, ॥, ॥, ऽ, १५×४=६० ॥ इदमेव ग्रन्थान्तरे शशिकलेति नामान्तरेणोक्तम्। शशिकलापि रस ६ नव ९ रचितविरतिश्चेत्, तदा स्रगिति नामान्तर लभते। तथा च छन्दोमञ्जर्याम्—'स्रगियमपि च रसनवरचितयतिः' इति। यथा—'अपि सहचरि रुचिरतरगुणमयी म्रदिमवसतिरनपगतपरिमला। स्रगिव निवसति लसदनुपमरसा सुमुखि मुदितदनुजदलनहृदये॥' उट्टवणिका यथा—॥, ॥, ॥, ६ ॥, ॥, ॥, ॥, ऽ, ९, १५×४=६० ॥ इयमेव च यदा वसु ८ मुनि ७ यतिः तदा मणिगुणनिकर इति सञ्ज्ञान्तर लभते। तदुक्तं तत्रैव—'वसु ८ मुनि ७ यतिरिति मणिगुणनिकरः॥ यथा—'नरकरिपुरवतु निखिलसुरगतिरमितमहिमभरसहननिवसतिः। अनवधिमणिगुणनिकरपरिचितः सरिदधिपतिरिव धृततनुविभवः॥' उट्टवणिका यथा—॥, ॥, ॥, ॥, ८ ॥, ॥, ॥, ॥ ७, १५×४=६० ॥ एतौ च यतिकृतौ शरभभेदौ प्रकृतिप्रस्तारसख्यायामेवावगन्तव्याविति॥ शरभो निवृत्तः॥

अत्रास्मिन्नेव प्रस्तारे कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथम विपिनतिलक छन्दः—'विपिनतिलक नसनरेफयुग्मैर्भवेत्'।

नगणसगणनगणरगणयुगलैर्विपिनतिलक वृत्त भवेदिति॥

यथा—

'विपिनतिलक विकसित वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम्।
मलयमरुता रचितलास्यमालोक्य-
न्व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः॥''

उद्दवणिका यथा—।।।, ।।ऽ, ।।।, ऽ।ऽ, ऽ।ऽ, १५×४=६० ॥ विपिनतिलक निवृत्तम् ॥

अथ चन्द्रलेखा छन्दः—'म्रौ मो यौ चेद्भवता सप्ताष्टकैश्चन्द्रलेखा'।

यदि प्रथम म्रौ मगणरगणौ भवतः, ततो मो मगणः, ततश्च यौ यगणौ भवेतां सप्ताष्टकैर्वर्णैर्विरतिश्च भवेत्, तदा चन्द्रलेखा तन्नामकं वृत्तमित्यर्थः ॥

यथा—

'विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छाय दुकूल न भ्राजते बिभ्रती सा।
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किंचार्ता त्वा स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥'

उद्दवणिका यथा—ऽऽऽ, ऽ।ऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १५×४=६० ॥ चन्द्रलेखा निवृत्ता ॥

अथ चित्रं छन्दः—'चित्रानाम छन्दश्चित्रं चेत्त्रयो मा यकारौ'।

तच्चित्रानामक चित्र नाम यस्य यत्र त्रयो मा मगणत्रयं यकारौ यगणद्वय च यत्र भवेत्तत्कथितनामद्वय छन्दो भवतीति ॥

यथा—

गोपालीलीलालोला यद्वत्कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्धचित्रा।
कंसारातेर्मूर्तिस्तद्वन्मे हृदि क्रीडन्तीयं
कोऽन्यः स्वर्गो मोक्षो वा स्याद्द्वियते तन्न जाने ॥

उद्दवणिका यथा—ऽऽऽ, ऽऽऽ, ऽऽऽ, ।ऽऽ, ।ऽऽ, १५×४=६० ॥ अत्रापि प्रस्तारगत्या पञ्चदशाक्षरस्य द्वात्रिंशत्सहस्राणि सप्तशतान्यष्टयुत्तराणि ३२७६८ भेदाः। तेषु कियन्तो भेदाः प्रोक्ताः। शेषभेदास्तीक्ष्णशेमुषीकैराकरान्निजबुद्ध्या वा प्रस्तार्य सूचनीया इत्युपरम्यते ॥

१६८ अथ षोडशाक्षरप्रस्तारे नाराचछन्दोऽभिधीयते—

भोः शिष्याः, यत्र नरेन्द्रो जगणो गुरुमध्यमो गणः शबलश्चित्रितो वर्तते। तथा च सुपर्णो रगणो लघुमध्यमो गणः वेति सुपर्णावेव द्वौ गणौ दृश्येते नान्य इति नियमः। पइकश्चतुष्कलोऽर्थाद्गुरुमध्यो जगण एव। ठामपञ्चमे प्राकृते पूर्वनिपातानियमात् पञ्चमस्थाने नायको देय इत्यर्थः। तद्दान गणान्तरनिरासार्थम्। रगणस्य पञ्चकलत्वादिति भावः। एव गणपञ्चकेन पञ्चदशाक्षराणि, ततश्च हारो गुरुः यथा स्यात्तथा सारभूतोऽन्ते यस्य पतितो वर्तते। एतत् प्रसिद्ध नाराचनामकम्। कलाश्चतस्रः

त्विंशतयः पदे यस्य चरणस्थितचतुर्विंशतिकलात्मकमिदं छन्दः फणीन्द्रो जल्पति ॥ तत्र लघुगुरुनियममाह—गन्धवङ्कअट्ठए गन्धवक्रयोर्लघुगुर्वोः क्रमेणाष्टक यत्रेति । तथा च—अत्रैवाष्टाक्षरप्रस्तारप्रस्तावेऽभिधीयमाने प्रमाणिकाछन्दोलक्षणे—'लहूगुरू णिरन्तरा पमाणि अट्ठ अक्खरा । पमाणि दूण किज्जए णराउ सो भणिज्जए ॥' इत्युक्तम् । तदत्र सिंहावलोकनन्यायेन सञ्चारणीयमिति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'ध्वजेन नायकेन कुण्डलेन यद्विभूषितं पयोधरेण वीणया शरेण पक्षिणाङ्कितम् । नराचवृत्तमत्र षोडशाक्षरं समीरितं मनीषिमण्डलीहितं फणीन्द्रपन्नगोदितम् ॥' इदमेव ग्रन्थान्तरे पञ्चचामरमिति नामान्तरम् । अत एव छन्दोमञ्जर्याम्—'प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्' इत्युक्तम् ॥

१६९. नराचमुदाहरति—जहा (यथा)—

कश्चिद्बन्दी संग्रामाङ्गणमनुवर्णयति—योधाः सुभटाश्चलन्ति समरभूमावितस्ततः सञ्चरन्ति । कीदृशाः । शत्रूणामहितानां क्षोभकाः । पुनः रणकर्मोग्रसराः, रणकर्मण्यधिका वा । ततश्च कृपाणबाणशल्यभल्लचापचक्रमुद्गराश्चायुधविशेषाश्चलन्तीत्यनेनैवान्वयः । पुनः कीदृशाः भटाः । पर्वताकारतुरगैर्मारणार्थं योधारः समन्ताद्वर्तुलीभूय धावन्तं तत्रासनवल्गासु पण्डिता अतिदक्षाः सादिन इत्यर्थः । पुनः प्राकृते पूर्वनिपातानियमात् दन्तदष्टप्रकृष्टोष्ठया तथा सेनया ध्वजिन्या मण्डिताः ॥ यथा वा [ णीभूषणे ]—'निशुम्भशुम्भचण्डमुण्डरक्तबीजघातिनी लुलायरूपदैत्यभूतघातपक्षपातिनी । नवीनपीनबद्धजालकालमेघसंनिभा चिरं चरीकरोतु नः प्रियं पिनाकिवल्लभा ॥' उट्टवणिका यथा—।ऽ।, ।ऽ।, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ १६ × ४ = ६४ ॥ नराचो निवृत्तः ॥

१७०. अथ नीलच्छन्दः—

हे रमणि, तन्नीलस्वरूपं नीलनामकं छन्दो लक्ष (?) जानीहीत्यर्थः (?) । यत्र पदे द्वाविंशतिर्मात्राः पञ्च भगणा गुर्वादिगणाः पदे पतन्ति, एतादृशैरेव पदैराश्रितमिति छन्दोविशेषणम् । अन्ते पञ्चभगणान्ते स्थितो हारो गुरुर्यत्र ज्ञायते तदेतद्द्विपञ्चाशदधिकं कलाशतत्रयात्मकं ध्रुवं निश्चितमीदृशं रूपं गुणी ज्ञातव्यमित्यर्थः । एतदुक्तं भवति—चरणस्थितद्वाविंशतिमात्रात्मकमिदं नीलाख्यं वृत्तं चतुश्छन्दोभिप्रायेण षोडशचरणात्मकम् । तत्रैकस्य छन्दसश्चरणो द्वाविंशतिश्चतुर्गुणितोऽष्टाशीतिकलात्मकः । यथा—२२ + २२ + २२ + २२ = ८८ ॥ एवमष्टाशीतिकलात्मकचरणचतुष्टयेन द्विसमधिकपञ्चाशदुत्तरकलाशतत्रयात्मकमिदं नीलस्वरूपं भवतीति यथा—८८ + ८८ + ८८ + ८८ = ३५२ ॥ वाणीभूषणे तु प्रकारान्तरेण लक्षणं लक्षितम् 'तालपयोधरनायकतोमररत्नधरं पाणियुतं च विभावय

भामिनि वृत्तवरम्। नीलमिदं फणिनायकगायकसंलपितं पण्डितमण्डलिकासुखदं सखि कर्णगतम् ॥'

१७१. नीलमुदाहरति—जहा (यथा)

कश्चित्कविः कर्णनरपतिप्रयाणमुपवर्णयति—विवर्धितक्रोधा योधाः सुभटाः सज्जिताः संनद्धा सन्तः क्षिपन्ति धनुः। अथ च—वाहोऽपि पक्खरु सनद्ध इत्यर्थः। ततश्च स्फुरत्तनुर्वीररसावेशात्। एवं चमूनरनाथोऽपि चलितः। अनन्तरं च सुखङ्गकराः करे कुन्तान्धृत्वा पत्तयोऽपि चलन्ति। एव सुतरा सज्जीभूय कर्णनरेन्द्रे चलति सति धराः पर्वता अपि चलन्ति। पर्वताना क्षोभोऽभूदिति भावः। यथा वा [ णीभूषणे ]—'सुन्दरि सुन्दरिपौ नतिशालिनि किं कुरुषे मानिनि मानिनि काममिदं हृदय परुषे। हारिणि हारिणि ते हृदये निहितो दयितो भाविनि भाविनिवासिमनोऽस्य चिराय यतः ॥' उट्टवणिका यथा—ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ॥, ऽ १६×४=६४ ॥ नीलो निवृत्तः ॥

१७२. अथ चञ्चलाछन्दः—

भोः शिष्याः, यत्रादौ सुपर्णो रगणो लघुमध्यमो गणो दीयते। तो ततः—एकः पयोधरो जगणो गुरुमध्यमो गणः हिण्णिरूअ पञ्च एवरूपाणि पञ्च सुपर्णपयोधरानन्तरं रगणजगणरगणास्त्रयोपि गणा देयाः एव (पञ्च) वक्रा गुरवः सर्वे, लो लघवश्च तैर्मनोहरेति चञ्चलाविशेषणम्। अन्ते गणपञ्चकान्ते गन्धो लघुर्वर्णो यत्र (दीयते)। यदि चाक्षराणि षोडश यस्याः सा फणीन्द्रेण चञ्चला विनिर्मिता। तदेतदतिदुर्लभं चञ्चलाभिधानं छन्दो विजानीतेति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'तूर्यतालपक्षिराजमेरुहारनायकेन चामरध्वजेन चापि वर्णिता सुपर्णकेन। वर्णितातिसुन्दरेण पन्नगेन्द्रपिङ्गलेन चञ्चला चकोरचारुलोचने सुमङ्गलेन ॥' समानिका पदद्वयेन चञ्चलेति फलितोऽर्थः ॥ ग्रन्थान्तरे चित्रसङ्गमिति नामान्तरम् ॥ अतएव छन्दोमञ्जर्याम्—'चित्रसङ्गमीरितं समानिकापदद्वय नु' इत्युक्तम् ॥

१७३. चञ्चलामुदाहरति-जहा (यथा)—

कश्चित्कविः कर्णार्जुनयोर्युद्धमुपवर्णयति—उभावपि कर्णपार्थौ संग्रामभूमावेकदा ढुक्कु रथेन युक्तौ जातावित्यर्थः। अस्मिन्नवसरे सूर्यो दिनकरोऽपि वाणसंघातेन लुक्कु लीनः शरजालाच्छादितो भूदित्यर्थः। अत एवान्धकारसञ्चयेन शब्दवेधित्वात्तयोर्यस्य कस्यापि घावः प्रहारो लग्नः। एत्थ अत्र व्यतिकरेऽनयोर्मध्ये पार्थोऽर्जुनस्तेन कण्णपूरि आकर्णं पूरयित्वा षष्टिर्बाणास्त्यक्ताः। अन्तरा पततस्तान्बाणान्प्रेक्ष्य। प्राकृते पूर्वनिपातानियमात्। धन्या कीर्तिर्यस्यैवविधेन कीर्त्या धन्यस्तेन वा, कर्णेन राधेयेन ते सर्वे बाणाः कर्तिताः खण्डशः कृता इत्यर्थः ॥ यथा वा

[ णीभूषणे ]—आलि याहि मञ्जुकुञ्जगुञ्जितालिलालितेन भास्करात्मजाविराजिराजितीरकाननेन । शोभितस्थलस्थितेन सगता यदूत्तमेन माधवेन भाविनी तडिल्लतेव नीरदेन ॥' उद्दवणिका यथा—ऽ।ऽ, ।ऽ', ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।, १६×४= ६४ ॥ चञ्चला निवृत्ता ॥

१७४. अथ सर्वगुर्वात्मकं कलासख्यवर्णक प्रस्तारादिभूत ब्रह्मरूपकं छन्दः—

भोः शिष्या, जो यद् ब्रह्मरूपकं छन्दः अपर ब्रह्मणो रूपमिव । वर्तते इति शेषः । ब्रह्मच्छन्दसोः साधर्म्यमाह—यच्छन्दः, ब्रह्म वा लोकाना वक्षसि बिम्बोष्ठे विग्रुत्स्थाने दन्तेपु हसस्थाने शिरसि सूद्याने ब्रह्मरन्ध्रे महापद्मवने वा णाऊ ज्ञातम् । तथा च छन्द इत्युच्चार्यमाणः शब्दस्तत्तत्स्थान गमयतीति सहृदयैकगम्योऽर्थः ॥ अथ च शब्दस्य ब्रह्मरूपत्वात्तत्प्रोक्तस्थाने ज्ञात मननशीलैर्मुनिभिरिति । किंच—कण्ठघ्राणे कण्ठस्थाने वर्णस्थाने च सारस्थाने जिह्वाया मूलाधारे वा छन्दो वृत्तमु ज्ञायता 'अष्टौ स्थानानि वर्णानामुरः कण्ठशिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥' इति पाणिनिकृतशिक्षोक्तरीत्या कथयता पन्नगपतिना पिङ्गलेन संमानितमिदं छन्दो ब्रह्मरूपकनामक कर्णैर्गुरुद्वयात्मकगणैर्यत्सर्ववृत्तं निष्पन्नशरीर तल्लोकानां व्याख्यातमिति ॥

१७५. ब्रह्मरूपकमुदाहरति—जहा ( यथा )—

कश्चिद्बन्दी कस्यचिन्नृपतेर्युद्धमुपवर्णयति—उन्मत्ता वीररसाविष्टा उत्थितक्रोधा उपर्युपर्यहमहमिकया युध्यमानाः सन्तो मेनकारम्भादिभिर्नाथवरणे सदम्भाभिरप्सरोभिः अपाअप्पी अन्योन्यं म्यायं वरणीयः, त्वया चायमिति बोध्यमानाः शक्तिछिन्नकण्ठाः कबन्धा मस्तकं पृष्ठमेव शेषो येषामेवविधा अपि वीरा धावन्त इतस्ततः समराजिरे व्रजन्तः समग्रा एकत्रीभूय जायाग्रे मेनकारम्भादीनामग्रे लुब्धास्तद्दर्शनेप्सवो विस्मिता ऊर्ध्वमेव पश्यन्तोऽत्रतस्थिर इति वाक्यशेषः ॥ उद्दवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, १६×४=६४ ॥ ब्रह्मरूपक निवृत्तम् ॥ -

अथ षोडशाक्षर एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते । तत्र प्रथममृषभगजविलसित छन्दः—'भ्रत्रिनगैः स्वराङ्गमृषभगजविलसितम्' ।

भ्रत्रिनगैर्भगणरगणनगणत्रयगुरुभिः सप्तनवविश्राममृषभगजविलसित वृत्तमिति ॥

यथा—

'यो हरिरुच्चखान खरतरनखशिखरै-
दुर्जयदैत्यसिंहसुविकटहृदयतटम् ।
किंत्विह चित्रमेतदखिलमपह्नतवतः
कसनिदेशदप्यदषभगजविलसितम् ॥'

'गजतुरगविलसितम्' इति शंभावेतस्यैव नामान्तरमुक्तम् ॥ उट्टवणिका यथा—ऽ।।, ऽ।ऽ ।।।, ।।।, ।।।, ऽ, १६×४=६४ ॥ ऋषभगजविलसित निवृत्तम् ॥

अथ चकिताछन्दः—'भा.समतनगैरष्टच्छेदे स्यादिह चकिता'

इह षोडशाक्षरप्रस्तारे भाद्भगणात्समतनगैः सगणमगणतगणनगणगुरुभिः अष्टच्छेदेऽष्टमाक्षरजातविश्रामैश्चकिताख्य छन्दो भवतीति ॥

यथा—

'दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद्भजपरिघत्राता याता साध्वसविगमम् ।
दीव्यति दिविषन्माला स्वैरं नन्दनविपिने
गच्छत शरण कृष्ण तं भीता भवरिपुतः ॥'

उट्टवणिका यथा—ऽ।।, ।।ऽ, ऽऽऽ, ऽऽ।, ।।।, ऽ, १६×४=६४ ॥ चकिता निवृत्ता ॥

अथ मदनललिताछन्दः—'म्भौ नो म्नौ गो मदनललिता वेदैः षड्ऋतुभिः'

यत्र म्भौ मगणभगणौ । अथ च नो नगणः, ततो म्नौ मगणनगणौ भवतः प्रथमं चतुर्भिः ततः षड्भिः पुनरपि षड्भिरेव विरतिर्यत्र तन्मदनललिता छन्दः ॥

यथा—

'विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा
म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला ।
राधात्यर्थं मदनललितान्दोलालसवपुः
कंसाराते रतिरसमहो चक्रेऽतिचटुलम् ॥'

उट्टवणिका यथा—ऽऽऽ, ऽ।।, ।।।, ऽऽऽ, ।।।, ऽ, १६×४=६४ ॥ मदनललिता निवृत्ता ॥

अथ वाणिनी छन्दः—'नजभजरैः सदा भवति वाणिनी गयुक्तैः'

नगणजगणभगणजगणरगणैः गयुक्तैर्गुरुसहितैः पञ्चभिरेतैर्गणैर्वाणिनीछन्दः ॥

यथ—

'स्फुरतु ममाननेऽत्र ननु वाणि नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम् ।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥'

उट्टवणिका यथा—।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।ऽ, ऽ, १६×४=६४ ।। वाणिनी निवृत्ता ।।

अथ प्रवरललितं छन्दः—'यमौ नः स्रौ गश्च प्रवरललित नाम वृत्तम्'

यत्र यमौ यगणमगणौ। अथ च नगणः, ततः स्रौ सगणरगणौ भवतः, ततश्चेद्गुरुर्भवति तदा प्रवरललितं नाम वृत्तं भवति ।।

यथा—

'भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो
मुधापादन्यासप्रकटिततुलाकोटिनादः ।
स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक्प्रवरललितं बल्लवीनाम् ।।'

उट्टवणिका यथा—।ऽऽ, ऽऽऽ, ।।।, ।।ऽ, ऽ।ऽ, ऽ, १६×४=६४ ।। प्रवरललितं निवृत्तम् ।।

अथ गरुडरुत छन्दः—'गरुडरुत नजौ भजतगाः यदा स्युस्तदा'

यदा नजौ नगणजगणौ भवतः, ततो भजतगाः भगणजगणतगणगुरवः स्युः, तदा गरुडरुतं नाम वृत्तं भवतीति ।।

यथा—

'अमरमयूरमानसमुदे पयोदध्वनि-
र्गरुडरुत मुरारिभुजगेन्द्रसन्त्रासने ।
धरणिभरावतारविधिडिण्डिमाडम्बरः
स जयति कंसरङ्गभुवि सिंहनादो हरेः ।।'

उट्टवणिका यथा—।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽऽ।, ऽ, १६×४=६४ ।। गरुडरुतं निवृत्तम् ।।

अथ प्रस्तारान्त्यभेदमचलधृतिवृत्तमभिधीयते—'द्विगुणितवसुलघुभिरचलधृतिरिति'।

यत्र द्विगुणिता वसुलघवः षोडशापि वर्णा लघवोऽर्थाद्भवन्ति, तदचलधृतिरिति वृत्त भवतीति लघ्वन्तेन नगणपञ्चकेनेति फलितोऽर्थः ।।

यथा—

'तरणिदुहितृतटरुचिरतरवसति-
रमरमुनिजनसुखविहितधृतिरिह ।
मुररिपुरभिनवजलधररुचितनु—
रचलधृतिरुदयति सुकृतिहृदि खलु ।।'

उद्दवणिका यथा—।।।, ।।।, ।।।, ।।।, ।।।, ।, १६ × ४ = ६४ ॥ अचलधृतिर्निवृत्ता ॥ अत्रापि प्रस्तारगत्या षोडशाक्षरस्य पञ्चषष्टिसहस्राणि पञ्च शतानि षट्त्रिंशदुत्तराणि ६५५३६ भेदाः, तेषु कियन्तो भेदा लक्षिताः । शेषभेदास्तीक्ष्णमतिभिराकराग्निजबुद्ध्या वा प्रस्तार्य लक्षणीया इति दिक् ॥

१७६. अथ सप्तदशाक्षरप्रस्तारे पृथ्वीछन्दः—

भोः शिष्याः, यत्र पयोधरो जगणो मुखे स्थितः, तत एकः सगणः, पुनरपि तथैव जगणसगणावेव तयोरग्रे स्थितावित्यर्थः । तथा च गन्धो लघुः सज्जीकृतः, ततो गुरुद्वयम्, ततो हारो गुरुः । पदे च चतस्रः कलाः । अथ च विंशतिः कलाः सम्भूय चतुर्विंशतिः । यत्र वसुभिर्ग्रहैश्च जातविश्राम पृथ्वीनामक छन्दो भवतीति शृणुत ज्ञेयमित्यर्थः । तथा च—जसद्वययगणलघुगुरुभिरष्टरन्ध्रकृतयतिः पृथिवीति फलितोऽर्थः । तदुक्तं छन्दोमञ्जर्याम्—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'पयोधरयुता स्फुरत्कनकयुग्मताटङ्किनी सुवर्णरुचिकङ्कणा ललितभावसन्नूपुरा । सुगन्धरुचिरा लसच्छ्रवणरूपवत्कुण्डला भुजगपतिवर्णिता हरति हन्त पृथ्वी मनः ॥' कर्णपर्यायत्वाच्छ्रवणस्य गुरुद्वयात्मको गणो गृह्यते ॥

१७७. पृथ्वीमुदाहरति—जहा (यथा)

कश्चित्कविः कस्याप्यगण्य [ पुण्य ] पुञ्जस्य विलासिनो मदनविनोदसदनमुपवर्णयति—युवतिसहितमेतादृश मन्दिर रेहई शोभत इत्यर्थः । कीदृशम् । झणझ्झणितमित्यनुकरणम् । तादृशं भूषण यत्र । पुनः रणरणावित्यनुकृत्या तादृशः काञ्चीगुणो मेखलाकलापो यत्र तत्तथा । पुनः मदनकेलिलीलासरः श्रमापहारकत्वात् । कदर्पकेलिसरसीत्वेनोपन्यस्तमित्यजहल्लिङ्गत्वेन सर इति व्याख्येयम् । पुनः निशासुखमनोहरं रजनीजनितालिङ्गननिधुवनान्तसुखजातालम्बनत्वेन परममनोहरमिति सहृदयवेद्यः पन्था इति ॥ यथा वा [ णीभूषणे ]—'क्षताधरतटी घनश्वसितमङ्गरागव्ययो दृशोरपि च शोणिमा भवति कारणादन्यतः । इदं तव परप्रियानिभृतसंगमव्यञ्जकं मुखे यदिदमञ्जनं रहसि चार्धचन्द्र गले ॥' उद्दवणिका यथा—।ऽ।, ।।ऽ, ।ऽ।, ।।ऽ, ।ऽऽ, ।, ऽ, १७ × ४ = ६८ ॥ पृथ्वी निवृत्ता ॥

१७८. अथ मालाधरच्छन्दः—

भोः शिष्याः, यत्र प्रथमं दीयते विप्रश्चतुर्लघ्वात्मको गणः, तथापि भूपतिर्जगणः स्थाप्यते, ततश्चरणो भगणस्तृतीयः, तथा भूपतिर्जगणो दीयते, युगेनाधिको विमलोऽतिसुन्दरो गन्धो लघुः, ततो हारो गुरुर्यत्र तत्फणिणाहरा फणिव्याघ्रः फणिश्रेष्ठः पिङ्गलो मालाधर इति छन्दो भणति जानीत तदिति ॥ वाणीभूषणे तु

प्रकारान्तरेणोक्तम्—'द्विजवरगणान्वितो गजपतिः श्रिततूर्यवान्करतलपरिस्फुरत्कनककङ्कणेनान्वितः। सुरपतिगुरुश्रिया परिगतः समन्तात्सखे जयति भुवि वृत्तभूपतिरय तु मालाधरः।'

१७६. मालाधरमुदाहरति—जहा (यथा)

काचिद्दूती कान्तानुनयमनुगृह्णती नायिकामाह—मलयानिलो दक्षिणानिलो वहति। कीदृशः। विरहिणा चेतः सतापयति तादृशः संतापनः। किंच पिकोऽपि पञ्चमं कूजति। प्राकृते पूर्वनिपातानियमात्। फुल्लकिंशुकं वन विकसित नवपलाश वनमपि विकसितम्। तरुणा पल्लवा अपि तरुणा नवीना जाताः। माधवी वासन्ती मल्लिका मधुरातिमनोहराभूत्। अतो हे सखि, नेत्र वितर, अस्मिन्प्राणनाथे यतो माधवसमयोऽयं प्रात इति॥ यथा वा [णीभूषणे]—'क्वचिदपि वयस्यया सह विनोदमातन्वती कतिपयकथारसैर्नयति वासरीया रुजम्। सुभग तव कामिनी समधिगम्य सा यामिनीमनुभवति यामिनीं मदनवेदनामन्ततः॥' उट्टवणिका यथा—।।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽऽ, ।ऽ, १७×४=६८॥ मालाधरो निवृत्तः॥

अथ सप्तदशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथम शिखरिणी छन्दः—[वाणीभूषणे]—

'ध्वजः कर्णो हारौ द्विजवरगणस्थो रसयुतः
समुद्रो रत्नं च प्रभवति यदा सप्तदशभिः।
भुजगेन्द्रोद्दिष्टा विबुधहृदयाह्लादजननी
रसै रुद्रैर्यस्या विरतिरिह सैषा शिखरिणी॥'

यगणमगणनगणसगणभगणलघुगुरुभी रसै रुद्रैश्च कृतयतिः शिखरिणीति फलितोऽर्थः॥ तदुक्तं छन्दोमञ्जर्याम्—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति॥

यथा—

निविष्टायाः कोपाद्रुसदसि पङ्केरुहदृशः
पदोपान्ते छायामुपनयति मूर्ध्नः प्रणयिना।
तया चक्षुर्लीलाकमलरजसा दूषितमिति
द्रुत मुक्ता मुक्ताफलपरिणता वाष्पकणिकाः॥'

यथा—

'करादस्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-
र्विलीनाः स्मः सत्य नियतमवधेयं तदखिलैः।

इति त्रस्योद्गोपानुचितनिभृतालापजनित
स्मित बिभ्रद्देवो जगदवतु गोवर्धनधरः ॥'

उट्टवणिका यथा—ISS, SSS, III, IIS, SII, I, S, १७×४=६८ ॥ शिखरिणी निवृत्ता ॥

अथ मन्दाक्रान्ता छन्दः—

'मन्दाक्रान्ता हरति हृदयं कर्णताटङ्कयुग्मा
प्रोद्यद्भावा करतललसत्कङ्कणा शङ्खयुक्ता ।
हारोत्कृष्टा ललितवलया राववन्नूपुराभ्या
विभ्राजन्ती सकलहृदयाह्लादिनी कामिनीव ॥'

कामिनीपक्षे स्पष्टोऽर्थः ॥ छन्दोमञ्जर्यां तु गणभेदेनोक्तम्—'मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्मम् ।' यत्र मो भगणः, ततो भनौ भगणनगणौ भवतः, ततोगौ गुरुद्वय ययुग्म यगणद्वय च यत्र भवति, अम्बुधयश्चत्वारः, रसाः षट्, नगाः सप्त, एतेषु च विश्रामो यस्या सा मन्दाक्रान्ता तन्नामकं वृत्तमिति ॥

यथा—

'कर्णाभ्यर्णे हितमवहिता वर्णयन्तश्चिरेण
द्रागस्यन्तो हृदि कलुषितामानने शोणिमानम् ।
यान्तो भूमिं नयनपयसा विन्दवो मानवत्याः
पादाम्भोजप्रणतमधुना कान्तमुत्थापयन्ति ॥'

उट्टवणिका यथा—SS, SS, III, IIS, S, I, S, S, I, S, S, १७×४= ६८ ॥ मन्दाक्रान्ता निवृत्ता ॥

अथ हरिणी छन्दः—'द्विजवरमुखी भास्वद्रूपा सकुण्डलकर्णका,
ललितवलया हारोत्कृष्टा पयोधरभूषिता ।
कनकरसनारावैर्युक्ता लसद्वरनूपुरा,
हरति हरिणी केषा चित्त न योषिदिवाधुना ।'

योषापक्षेऽर्थः स्पष्टः ॥ छन्दोमञ्जर्यां गणभेदेनोक्तम्—'नसमरसलैर्गः पड्वेदैर्हयैर्हरिणी मता' । नगणसगणमगणरगणसगणलघुगुरुभिः षड्भिर्वेदैश्चतुर्भिर्हयैः सप्तभिर्जातविश्रामा हरिणी तन्नामक वृत्तमित्यर्थः ॥

यथा—

सुरभिरजनी याता भूयः कृशो भविता शशी
परभृतयुवा मूको भावी विरंस्यति पञ्चमः ।
कुसुमविशिखः सहर्तां स्वं धनुः पतिरेष्यति
प्रियसखि परावृत्तं न स्याद्गत मम जीवितम् ॥

उद्दवणिका यथा—||||, |S, S, SS, S, |S|, |, S||

यथा वा—

'व्यधित स विधिर्नेत्र नीत्वा ध्रुवं हरिणीगणाद्-
　　व्रजमृगदृशा संदोहस्योल्लसन्नयनश्रियम् ।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
　　व्यकिरदधिक व्रद्धाकाङ्क्षो विलोलविलोचनम् ॥'

यथा वा—'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे' इत्यादि रघौ ॥ हरिणी निवृत्ता ॥

अथ वंशपत्त्रपतित छन्दः—'दिङ्मुनि वशपत्त्रपतित भरनभनलगैः' ।

यत्र दिक्षु दशसु मुनिषु सप्तसु च विश्रामः, तथा भरनभनलगैः भगणरगण-नगणभगणनगणलघुगुरुभिर्वंशपत्त्रपतिताख्य छन्दो भवति ॥

यथा—

'नूतनवशपत्त्रपतितं रजनिजललव
　　पश्य मुकुन्द मौक्तिकमिवोत्तममरकतगम् ।
एष च तं चकोरनिकरः प्रपिबति मुदितो
　　वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥'

'सप्रति लब्धजन्मशतकैः कथमपि लघुनि' इति भारवौ ॥ वशपत्त्रपतितेति केचित् । वशवदनमिति शभौ नामान्तरमुक्तमिति ॥ उद्दवणिका यथा—S||, S|S, |||, S||, |||, |, S, १७×४=६८, वशपत्त्रपतित निवृत्तम् ॥

अथ नर्दटकं छन्दः—'यदि भवतो नजौ भजजलागुरु नर्दटकम्'

यदि प्रथम नजौ नगणजगणौ भवतः, ततो भगणजगणजगणलघवः, अथ च गुरुर्भवति यत्र तन्नर्दटक छन्दः ॥

यथा—

'व्रजवनितावसन्तलतिकाविलसन्मधुप
　　मधुमथन प्रणम्रजनवाञ्छितकल्पतरुम् ।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
　　रुचिरपदावलीघटितनर्दटकेन कविः ॥'

उद्दवणिका यथा—|||, |S|, S||, |S|, |S|, |, S, १७×४=६८ ॥ यथा वा भागवते दशमस्कन्धे—'जय जय जह्यजामजितदोषगृभीतगुणाम्' इत्यादि ॥ नर्दटक निवृत्तम् ॥

अथ कोकिलक छन्दः—'हयऋतुसागरैर्यतियुत वद कोकिलकम्'

हयाः सप्त, ऋतवः षट्, सागराश्चत्वारः, तैर्विरतियुक्तमिदमेव कोकिलकमिति वृत्तं वदेति। अत्र च विश्रामकृतो भेदः, गणास्त एवेति विवेकः॥

यथा—

'लसदरुणेक्षणं मधुरभाषणमोदकर
मधुसमयागमे सरसि केलिभिरुल्लसितम्।
अतिललितद्युतिं रविसुतावनकोकिलक
ननु कलयामि त सखि सदा हृदि नन्दसुतम्॥'

उट्टवणिका सैव, यतिकृत एव भेदः॥ कोकिलकं निवृत्तम्॥

अथ हारिणी छन्दः—'वेदर्त्वंश्वैर्मभनमयलागश्चेत्तदा हारिणी'

यदि प्रथमं वेदैः, तत ऋतुभिः, तदनन्तरमश्वैर्विरतिः, अथ च मभनमयला मगणभगणनगणमगणयगणलघवः, ततश्चेद्गो गुरुर्भवति, तदा हारिणी छन्दो भवतीति॥

यथा—

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।
गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छदा
सा कंसारेरजनि न कथं राधा मनोहारिणी॥'

उट्टवणिका यथा—SSS, SII, III, SSS, ISS, I, S, १७×४=६८॥ हारिणी निवृत्ता॥

अथ भाराक्रान्ता छन्दः—'भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः'

यत्र मगणभगणनगणरगणसगणलघवः, अथ च गुरुर्यत्र, श्रुतिषड्हयैर्विरतिश्च यत्र तद्भाराक्रान्ताछन्दः॥

यथा—

'भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणा-
त्कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति।
इत्थं शृण्वन्नयति जलदस्वनाकुलबल्लवी
संश्लेषोत्थं स्मरविलसितं गुरुं विलोक्य हरिः॥'

उट्टवणिका यथा—SSS, SII, III, SIS, IIS, I, S, १७×४=६८॥ भाराक्रान्ता निवृत्ता॥

अत्रापि प्रस्तारगत्या सप्तदशाक्षरस्यैकं लक्षमेकत्रिंशत्सहस्राणि द्विसप्ततिश्च

१३१०७२ भेदाः । तेषु कियन्तो भेदा उक्ताः शेषभेदाः सुधीभिः प्रस्तार्यांक-राद्युदाहर्तव्याः । इत्यलमतिविस्तरेण ॥

१८०. अथाष्टादशाक्षरप्रस्तारे मञ्जीराछन्दः—

भोः शिष्याः, यत्र मन्था मस्तके । आदावित्यर्थः । तत्र त्रयः कुन्तीपुत्राः कर्णा गुरुद्वयात्मकागणा दीयन्त इत्यर्थः । ततः पादे एकं हार गुरुततो हस्तः सगणः, तदन्ते दुण्णा कङ्कणु द्विगुणः कङ्कणो गुरुद्वयम्, ततो गन्धयुग्म लघुद्वयं संस्थाप्यते, यत्र पादान्ते भव्याकाराश्चत्वारो हारा गुरवः सज्जीकृताः प्राप्ता यत्र, एतन्मञ्जीरानामक छन्दः शुद्धकायः सर्पराजः पिङ्गलो जल्पतीति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'आदौ कृत्वा कर्णं कुण्डलयुक्तं हारयुग दत्त्वाथो कुर्यात्ताटङ्कं पादे कुरु सन्मञ्जीरयुगाभ्या युक्तम् । कृत्वा तातं कुन्तीपुत्रसमेतं वै गुरुयुग्मं दत्त्वा मञ्जीरा सा नागाधीशनिदिष्टा राजति सैषा वक्त्रे ॥

१८१. मञ्जीरासुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका सखीमाह—हे सखि, नीलाकारा मेघा गर्जन्ति । उच्चा-रावा मयूराः शब्दं कुर्वन्ति अतिदीर्घां केकामुच्चारयन्तीत्यर्थः । स्थाने स्थाने पिङ्गदेहा विद्युद्राजते । हाराः स्रजः क्रियन्ते । यतः नीपाः कदम्बाः फुल्लाः । भ्रमरा मधुकरास्तेष्वेव गुञ्जन्ति । किं च दक्षो मारुतो वाति । अतो हहे हञ्जे नीचे कथ क्रियते आगता प्रावृट् कान्तो नागतः, अतः क्रीड तावत् । मनोभिल-पितालिङ्गननिधुवनादिक यथा भवति तथाभिसारयास्मिन्नवसरे कचन युवानमिति भावः ॥ यथा वा [ णीभूषणे ]—'प्रौढध्वान्ते गर्जद्वारिदधाराधारिणि काले गत्वा त्यक्त्वा प्राणानग्रे कौलसमाचारानपि हित्वा यन्ती । कृत्वा सारङ्गाक्षी साहसमुच्चैः केलिनिकुञ्जं शून्य दृष्ट्वा प्राणत्राणं भावि कथं वा नाथ वद प्रेयस्याः ॥' उट्टवणिका यथा—ऽऽ, ऽऽ, ऽऽ, ऽ, ।।ऽ, ऽ, ऽ, ।, ।, ऽ, ऽ, ऽ, ऽ, १८×४ =७२ ॥ मञ्जीरा निवृत्ता ॥

१८२. अथ क्रीडाचन्द्रछन्दः—

भोः शिष्याः, यत्रेन्द्रासनमादिलघुः पञ्चकलो गणोऽर्थाद्यगणः स एवैकः पादे पादे भवति षड्भिर्यगणैः पाद इत्यर्थः । पादे चाष्टादश वर्णाः सुखयन्ति । दण्डा लघवः स्थाने स्थाने भवन्ति । यत्र मात्राश्च दश त्रिगुणितास्त्रिंशत् पदे भवन्ति तन्मात्राभिर्निबद्ध क्रीडाचन्द्र इति छन्दः फणीन्द्रः पिङ्गलो भणतीति वित्त ॥ भूषणे तु प्रकारान्तरेणोक्तम्—'ध्वज चामरं गन्धकगौ रसः कुण्डल तोमर च तथा तालताटङ्कतूर्याणि शेषे गुरुद्वन्द्वमत्र । तदा क्रीडया चिह्नितं चन्द्रमेतद्भुजंगा-धिराजः कविश्रेणिविस्मापक सर्वलोकप्रिय स जगाद ॥'

१८३. क्रीडाचन्द्रमुदाहरति—जहा (यथा)

कश्चित्कविर्वीरहम्मीरस्य भीषणसमराङ्गणप्रयाणमनुवर्णयति—यत्र समरसीमनि भूता वेतालाश्च नृत्यन्ति गायन्ति खादन्ति च कबन्धानपमूर्धकलेवरान् महावीरान्। यत्र च शिवाना फेरवाणां स्फारा अतिदीर्घाः फेक्कारहक्काः फेत्कारशब्दाश्चलन्ति प्रसरन्ति। अत एव कर्णरन्ध्राणि स्फुटन्ति। किंच कायस्त्रुटयति, मन्था मस्तकं स्फुटति, कबन्धाः शिरोरहिता वीरा नृत्यन्ति हसन्ति च। अत्र तु कबन्धा नृत्यन्तीति बहुवचनमहिम्ना स्फुटमेवातिभीषणत्व समराङ्गणस्येति भावः। तहँ तादृशातिभयजनकरणभूमौ वीरहम्मीरः सग्राममध्ये त्वरितं युक्तः प्रविष्ट इत्यर्थः॥ उट्टवणिका यथा—ISS, ISS, ISS, ISS, ISS, ISS, १८×४=७२॥ क्रीडाचन्द्रो निवृत्तः॥

१८४. अथ चर्चरी छन्दः—

हे सुन्दरि, यत्रादौ रगणो मध्यलघुको गणो भवति, ततो हस्तः सगणः, ततः काहलो लघुः, ततस्ताल आदिगुरुस्त्रिकलो मध्ये दातव्यः, तदनन्तर शब्दो लघुः, ततो हारा गुरुः ततो विण्णवि द्वावेव शब्दहारौ पततः, ततो वे वि द्वावेव काहलौ लघू, ततो हार गुरु पूरय। तदनन्तर शङ्खो लघुः, ततः शोभनः कङ्कणो गुरुरेव यत्र तत्सर्वलोकविबुद्धा समस्तच्छान्दसिकप्रसिद्धां मनोमोहना श्रुतिसुखत्वाच्चर्चरीनामकं छन्दो नागराजः पिङ्गलो भणतीति विद्धि॥ भूषणे तु प्रकारान्तरेणोक्तम्—'हारयुक्तसुवर्णकुण्डलपाणिशङ्खविराजिता पादनूपुरसगता सुपयोधरद्वयभूषिता। शोभिता वलयेन पन्नगराजपिङ्गलवर्णिता चर्चरी तरुणीव चेतसि चाकसीति सुसगता॥' तरुणीपक्षेऽर्थः स्पष्टः॥

१८५. चर्चरीमुदाहरति—जहा (यथा)—

कश्चित्कविः परमरमणीया कामपि कामिनीमनुवर्णयति—यस्याः पादे नूपुरं झणझणायते। कीदृशम्। हंसशब्दवत्सुशोभनम्। यस्याश्चैतस्याः स्तोकस्तोकयोरभिनवोत्थितयोः स्तनयोरग्रे मनोहर मुक्तादाम नृत्यति। अपि च वामदक्षिणयोः पार्श्वयोर्बाण इव धावति तीक्ष्णश्चक्षुःकटाक्षो यस्याः सेवमेवंविधा सुन्दरी कस्य सुकृतिनः पुरुषस्य गेह मण्डयतीति तादृशीति प्रेक्षस्व तावदिति तद्रूपमुपवर्णयन्तं वयस्य प्रति कस्यचिद्वचनमिति॥ यथा वा [वाणीभूषणे]— 'कोकिला कलकूजितं न शृणोषि संप्रति सादर मन्यसे तिमिरापहारिसुधाकर न सुधाकरम्। दूरमुज्झसि भूषण विकलासि चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिर न सुखायते॥' उट्टवणिका यथा—SIS, IIS, I, SI, I, S, I, S, II, S, I, S, १८×४=७२॥ चर्चरी निवृत्ता॥

अथाष्टादशाक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते। तत्र प्रथमं कुसुमितलतावेल्लिताछन्दः—'स्याद्भूतार्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ'।

यत्र भूतैः पञ्चभिः ऋतुभिः षड्भिः, अश्वैः सप्तभिश्च विश्रामो भवति। अथ च म्तौ मगणतगणौ, अथ च नयौ नगणयगणौ, अनन्तर यौ केवलौ यगणावेव भवतः। षड्भिर्गणैरष्टादश वर्णाः पदे पतन्ति यत्र तत्कुसुमितलतावेल्लितानामक छन्दो भवति ॥

यथा—

क्रीडत्कालिन्दीललितलहरीवाहिभिर्दाक्षिणात्यै-
वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम्।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥

उद्ववणिका यथा—SSS, SSI, III, ISS, ISS, ISS, १८×४=७२ ॥ यथा वा—'गौड पिष्टान्न दधि सकृशर निर्जल मद्यमम्लम्' इत्यादि वाग्भटचिकित्साग्रन्थे ॥ कुसुमितलतावेल्लिता निवृत्ता ॥

अथ नन्दनछन्दः—'नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्'

यत्र नगणजगणभगणजगणरगणै रेफेण रगणेन सहितैरेतैः षड्भिर्गणैः अथ च शिवैरेकादशभिः, ततो हयैः सप्तभिः, विश्रामो यत्र तन्नन्दनमिति छन्दो भवतीति ॥

यथा—

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।
मुरहरचित्रचेष्टितकलापसस्मारकं
क्षितितलनन्दनं व्रज सखे सुखाय वृन्दावनम् ॥

उद्ववणिका यथा—III, ISI, SII, ISI, SIS, SIS, १८×४=७२ ॥ यथा वा—'अकृत घनेश्वरस्य युधि यः समेतमायोधनम्' इति भट्टिकाव्ये ॥ नन्दनं निवृत्तम् ॥

अथ नाराचछन्दः—'इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते'

भोः शिष्याः, इहाष्टादशाक्षरप्रस्तारे नान्तगणद्वयरगणचतुष्टयाभ्या सृष्टम्, अथ च दिनकररसविश्राम छान्दसीया नाराचमित्यचक्षते ॥ षोडशाक्षरप्रस्तारे नराचः, अत्र तु नाराचः, इत्यनयोर्भेदः ॥

यथा—

दिनकरतनयातटीकानने चारुसंचारिणी
श्रवणनिकटकृष्टमेणीक्षणा कृष्ण राधा त्वयि ।
ननु विकिरति नेत्रनाराचमेषातिहृच्छेदनं
तदिह मदनविभ्रमोद्भ्रान्तचित्ता विधत्स्व द्रुतम् ॥

उट्टवणिका यथा—।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, १८×४=७२ ॥ यथा वा— 'रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियाम्' इत्यादि रघौ ॥ नाराचो निवृत्तः ॥

अथ चित्रलेखाछन्दः—'मदाक्रांता ययुगलजठरा कीर्तिता चित्रलेखा'

भोः शिष्याः, सप्तदशाक्षरप्रस्तारे सम (न) न्तर्गतमन्दाक्रान्ताछन्दसि यत्र यगणयुगले अर्थाद् गुरुद्वयस्थाने । (यस्या) एवंविधं जठरं यस्याः । तथा च गुरुद्वयस्यादावेको लघुरधिको दातव्यः । तेन ययुगलजठरा अन्तःस्थितयगणा चेत्स्यात् तदा सैव चित्रलेखा कीर्तिता । एवं च—मगणभगणनगणयगणत्रयैरम्बुधि (४) हय (७) मुनि (७) भिर्विरचितविरतिश्चित्रलेखेति फलितोऽर्थः ॥

यथा—

शङ्केऽमुष्मिञ्जगति मृगदृशां साररूपं यदासी-
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।
नैतादृक्चेत्कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम् ॥

उट्टवणिका यथा—ऽऽऽ, ऽ।।, ।।।, ।ऽऽ, ।ऽऽ, ।ऽऽ, १८×४=७२ ॥ चित्रलेखा निवृत्ता ॥

अथ शार्दूलललित छन्दः—'मः सोजः सतसा दिनेशऋतुभिः शार्दूलललितम्'

भोः शिष्याः, यत्र प्रथमं मगणः, ततः सगणः, ततो जगणः, ततः सतसाः सगणतगणसगणा भवन्ति । दिनेशैर्द्वादशभिः, ऋतुभिः षड्भिश्च विरतिर्यत्र तच्छार्दूलललित छन्दो भवतीति ॥

यथा—

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं
यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम् ।
संतोषं परमं च देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥

उद्दवणिका यथा—SSS, IIS, ISI, IIS, SSI, IIS, १८×४=७२ ।। शार्दूलललित निवृत्तम् ।। अत्रापि प्रस्तारगत्याष्टादशाक्षरस्य लक्षद्वय द्विषष्टि-सहस्राणि चतुश्चत्वारिंशदुत्तरं च शत २६२१४१ भेदाः । तेषु कियन्तो भेदाः प्रोक्ताः । शेषभेदा विशालबुद्धिभिराकरात्स्वमत्या वा प्रस्तार्य स्वयमूहनीया इत्यल पल्लवेन ।।

१८६. अथैकोनविंशत्यक्षरप्रस्तारे शार्दूलविक्रीडित छन्दः—

भोः शिष्याः, यत्र प्रथमं मो मगणः, ततः सो सगणः, ततो जो जगणः, ततः सो सगणः, ततो जो जगणः, ततोऽपि सगण एव, अनन्तर तगणः, ततः तो तगणः, समन्तगुरवो सव्यगन्ते गुरुर्येषामेवं षड्गणा यत्र । अत एवैकोन-विंशतिवर्णाश्चतुःपदे षट्सप्ततिः पतन्ति । किं च पद एकादश गुरवः, अष्टौ लघवः, पदचतुष्टये चतुश्चत्वारिंशद्गुरवो द्वात्रिंशल्लघवः, एतस्य छन्दसः पदचतुष्टयस्य मात्रापिण्डसख्या विंशत्युत्तरशतमात्रात्मिका भणिता । एतदुक्त भवति—चतुश्चत्वा-रिंशद्गुरूणा द्विगुणाभिप्रायेणाष्टाशीतिर्मात्राणां यत्र निष्पन्ना द्वात्रिंशच्च-लघवो विद्यन्त एव, सभूयैक ( व ) विंशत्युत्तरशतमात्रात्मकम् अर्क ( १२ ) मुनि ( ७ ) विश्राममिदं शार्दूलविक्रीडितमिति साटकं पिङ्गलकविर्जल्पति तत् गुणो जानीत इत्यर्थः ।। अथ चैकस्मिंश्चरणे एकादशगुरूणा द्विगुणाभिप्रायेण द्वाविंशतिः कलाः, लघवश्चाष्टौ, इति सभूय त्रिंशत्कलाः, तच्चतुष्केणापि प्रोक्तैव कलापिण्डसख्या भवतीति यथा—३०+३०+३०+३०=१२० ।। तथा च छन्दोमञ्जर्याम्—'अर्काश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इत्युक्तम् ।। वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कर्णः कुण्डलसगतः करतल चामीकरेणान्वित पादान्तो रवनूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ । गुर्वानन्दयुतो गुरुर्यति भवेत्तन्नूनविंशाक्षरं नागाधीश्वरपिङ्गलेन भणित शार्दूलविक्रीडितम् ।।'

१८७. शार्दूलसाटकमुदाहरति—जहा ( यथा )—

कर्पूरमञ्जरीसाटके देवीनियुक्ता विचक्षणा राजानं श्रावयन्ती वसन्तवर्णनानन्तरं दक्षिणानिलमुपवर्णयति—ये दक्षिणानिलाः प्रथम लङ्कागिरिमेखलातस्त्रिकूटा-चलकटकात् स्खलिताः तदनन्तरं सभोगेन निधुवनेन खिन्नानासुरंगीणा स्फारोत्फुल्ल-फणावलीकवलनेन पानेन दरिद्रत्व मन्दत्व प्राप्ताः, त एवेदानीं मधुसमये मलया-निलाः विरहिणीना निःश्वासैः सह संपर्किणः सन्तः शिशुत्वे सति तारुण्यपूर्णा इव झटिति बहला जाताः ।। उद्दवणिका यथा—SSS, IIS, ISI, IIS, SIS, SSI, S, १९×४=७६ ।। यथा वा [ णीभूषणे ]—'सौमित्रे किमु मृग्यते प्रतिलता-कुञ्ज कुरङ्गेक्षणा हन्तैतद्विपिने मनागपि न वा नेत्रातिथिर्मैथिली । एणी निस्त्र-

पमीत्तते मधुकरश्रेणी समुज्जृम्भते निःशङ्कं चमरी चरत्यपि निरातङ्क पिकी गायति ॥'

१८८. अथ प्रकारान्तरेण शार्दूललक्षणमेव लक्षयति—

हे मुग्धे, यत्र प्रस्तारे क्रियमाणे प्रथमं पूर्वोक्तरीत्यैव त्रयश्चामरवर्णा वर्णोज्ज्वलाः श्वेतवर्णाश्चामरपक्षे, गुरुपक्षे—'वर्णैरक्षरैरुज्ज्वला मनोहरा गुरवस्त्रयो दृश्यन्ते। तच्चेअ तदनन्तर मगणानन्तरमित्यर्थः। लहुविण्णि लघुद्वयम्, तथा चामर एको गुरुः, तेन सगणो भवतीत्यर्थः। तत उच्चिठ्ठतो गन्धुग्गुरे लघुगुरु तदनन्तर तिण्णे दिण्णसु गन्धु त्रीन् गन्धाल्लघून्देहीत्यर्थः। ततो वे चामरं चामरद्वय गुरुद्वय रेहन्ता रेखान्तं लघ्वन्तं देहीत्यर्थः। एवमष्टादश वर्णाः तस्यान्ते फणिवृण्ण करणे गुरुवर्णः करणीयः। एवं तत्र प्रस्तारः, तच्छार्दूलसाटकं मुणे जानीहीत्यर्थः ॥

१८९. जहा ( यथा )—

कर्पूरमञ्जरीसाटकस्थं भैरवानन्दसमाकृष्टकर्पूरमञ्जरीवर्णनपरं विदूषक प्रति राज्ञो वचनमिदम्—यस्या धौताञ्जनत्वाच्छोणमारक्त कोकनदानुकारि लोचनयुगम्, अथ च यस्या मुखं लग्नान्यलकाग्राणि यत्र तादृशम् किं च हस्तालम्बितकेशपल्लवचये यस्या बिन्दवो घूर्णन्ते। अपि च—यदैवैकं सिचयाञ्चलं निवसितं परिधृतमासीत् त तथै ( दे ) वार्द्रभावाल्लग्नचेलाङ्गयष्टिः स्नानकेलिस्थिता जलक्रीडापरायणा अद्भुतानामाश्चर्यरसानामेका जननी सकललोकविस्मयभूमिरियं कुन्तलाधिपकन्यका कर्पूरमञ्जरी अमुना प्रत्यक्षस्थितेन योगीश्वरेण कौलिकवरेण भैरवानन्देनानीता दक्षिणापथस्थवैदर्भनगराद्ध्यानवर्त्मना समाकृष्टेत्यर्थः ॥ यथा वा—'गोविन्दं प्रणमो-त्तमाङ्गरसने ते ( तं ) घोषयाहर्निशं पाणी पूजय तं मनः स्मर पदे तस्यालय गच्छतम्। एव चेत्कुरुथाखिलं मम हित शीर्षादयस्तद्ध्रुव न प्रेक्षे भवता कृते भवमहाशार्दूलविक्रीडितम् ॥' उद्दवणिका यथा—ऽऽऽ, ।।, ऽ, ।, ऽ, ।।।, ऽऽऽ, ।, ऽ, ऽ, ।, ऽ, १९×४=७६ ॥ शार्दूलविक्रीडित निवृत्तम् ॥

१९०. अथ चन्द्रमालाच्छन्दः—

हे सुन्दरि, प्रथम स्थापयित्वा द्विजवरयुगलम् चतुर्लघुकगणयुगं मध्ये करतलं कुरु पुनरपि द्विजवरयुगलम्। एव कृते मध्यतः करतलं कुरु सरसान्गणा-न्विमलानतिविशदान् सुणि श्रुत्वा मनोगतिः स्थाप्यते निश्चलीक्रियते यत्र तां विमलमतिरुरगपतिः पिङ्गलश्चन्द्रमालामिति कथयति ॥ भूषणेऽप्युक्तम्—'द्विजवरगणयुगमुपधाय परिकलय करमथ नगणयुगलमिह गन्धयुगमनुविहर। फणिनृपतिभणितमिति चन्द्रमिदमिति शृणुत सकलकविकुलहृदयमोदकरमवत नुत ॥'

१९१. चन्द्रमालामुदाहरति—जहा ( यथा )

काचिदतिनिसृष्टार्था दूती कामपि प्रोषितपतिकामाह—हे सखि, अमृतकरस्य पीयूषभानोः किरणान्धारयति। ओषधीनाथत्वात्तस्य। तादृशं फुल्लबहुकुसुमं नानाविधसुरभिप्रसूनं वनमिदं जातमित्युद्दीपनम्। किंच कामोऽप्यवसरं प्राप्य कुपितो भूत्वा प्राकृते पूर्वनिपातानियमाद्वहट्ट ( ? ) भाषाकृतयमकानुरोधाद्वा विन्यासः। वस्तुतस्तु मदनोऽतिरोषणो भूत्वा शरान्सुलभकुसुमत्वात्कौसुमत्वात्कौसुमानेव बाणान्निजे धनुषि स्थापयित्वा धरइ धारयति। अर्थाद्धनुस्तादृशमायोजितकाण्ड-मण्डलीभूतकोदण्डं निजबाहुदण्डेन धृतवानिति भावः। अपि च पिकोऽपि रवइ रौति पञ्चम कूजतीत्यर्थः। अतोऽयं समयो णिक परमरमणीय इत्यर्थः। अतश्च हे सखि, तवापि हृदयं किं स्थिरम्। अपि तु स्थिरमिति काका। गमितानि दिनानि न पुनर्मिलन्ति। किं च सखि, प्रियो भर्ता निकटे नास्त्यतः परम सुखमिति भावः। अत एवोक्तमभियुक्तेन—'मेघच्छन्ने दिवसे दुःसचारासु नगरवीथीसु। भर्तुर्विदेशगमने परमसुख जघनचपलायाः॥' इति॥ यथा वा [ णीभूषणे ]—'अनुपहतकुसुमरस तुल्यमिदमधरदलममृतमयवचनमिदमालि विफलयसि चल। यदपि यदुरमणपदमीश मुनिहृदि लुठति तदपि तव रतिवलितमेत्य वनतटमटति॥' उट्टवणिका यथा—॥ ॥, ॥॥, ॥ऽ, ॥॥, ॥॥, १९×४=७६ ॥ इति चन्द्रमाला निवृत्ता॥

१९२. अथ धवलाच्छन्दः—

हे युवति, विमलमतिर्वासुकिः पिङ्गलो महीतले करोति धवला धवलाख्यं वृत्तमिति। तत्त्व शृणु यत्रादौ हे रमणि, स्थापयित्वा सरसगणान् पदे पदे पतितास्ता-नाह—दिअइ [ ति ] द्विजगणाश्चतुर्लघुकाश्चतुरश्चतुष्पदे ( द्या ) फणिपतिः सही सत्य भणति पठतीत्यर्थः। द्विजगणचतुष्टयपाठानन्तरं कमलगणो गुर्वन्तः सगणः करः पाणिः 'कमल हत्थम्' इत्यत्रैवोक्तत्वात्स देयः। हे सरसमानसे सुमुखि, एवमुक्तप्रकारेण गणसंनिवेशो यत्र तद्धवलनामक छन्दः कही कथ्यते इत्यर्थः॥ भूषणे तु प्रकारान्तरेणोक्तम्—'द्विजवरगणत्रि ( ? ) तयमिह हि नगणयुगलकं विमलवलयमपि च कलय सकलजनसुखम्। फणिपतिवरभणितममलधवलमिह हित विमलकविकुलहृदि वलितमिति भुवि वलितम्॥'

१९३. धवलामुदाहरति—जहा ( यथा )—

काचित्स्वयदूती पथिकासक्ता तमाह—तरुणस्तरणिः सूर्यः तपति। धरणी प्रचण्ड-मार्तण्डकरप्रकरसंपर्कात्त्विदिततलमतितप्तमित्यर्थः। किंच—पवनः खरो वहति। निकटे जल च नास्ति। महामरुस्थल जनजीवनहरमिदं विद्यते मारवं वर्त्मेति शेषः। दिशो हरितोऽपि तिग्ममरीचिनिचयसंयोगाच्चलन्तीव। अतो हृदयं कम्पते। अहमेकला वधूः, गृहे च प्रियः स्वामी नास्ति। हे पथिक, शृणु तव मनः

कुत्रापीच्छति । स्थातुमिति शेषः । निवासं कर्तुं चेन्मनस्तव विद्यते तदात्रैवास्स्वेति वाक्येन व्यज्यते इति ॥ यथा वा [ णीभूषणे ]—'उपगत इह सुरभिसमय इति सुमुखि वदे निधुवनमधि सह पिब मधु जहि रुषमपदे । कमलनयनमनुसर सखि तव रभसपर प्रियतमगृहगमनमुचितमनुचितमपरम् ॥' उद्दवणिका यथा—||||, ||||, ||||, ||||, ||ऽ, १९×४=७६ ॥ धवला निवृत्ता ॥

१९४. अथ शंभुच्छन्दः—

हे सुपिअ सुतरां प्रिय शिष्य, अव इदानीं लोकानां ए एतच्छन्दो भण येन शंभुच्छन्दसा मनोमध्ये सुखं संवृत्तम् । तत्र अग्रे प्रथम हस्त सगण देहि । कीदृशं हस्तम् । कुन्तीपुत्रसंयुक्तं गुरुद्वयसहितमित्यर्थः । ततोऽग्रे एव गण देहि सगण गुरुद्वययुक्तं पुनर्देहीत्यर्थः । ततश्च द्वौ शरौ लघुद्वय देहि । अन्ते सत्ता सत्त हारा गुरवो देया इत्यर्थः । एवं च पदे एकोनविंशत्यक्षराणि द्वात्रिंशन्मात्राश्च । त्रयोदशगुरूणा द्विगुणाभिप्रायेण षड्विंशतिः, रससंख्या लघवश्च । संभूयेति प्रकारेण द्वात्रिंशन्मात्रा पतिता यत्र तदिदं शंभुनामकं छन्दो भवतीति विद्धि ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'कुरु पाणिं कंकणयुग्मालकृतमग्रे रत्नं हारं च चरणं सन्नूपुरसंयुक्तं कुरु कर्णे भ्राजत्ताटङ्कम् । रसनामायोजय मञ्जीरद्वयमेवं शसद्वृत्तान्तं भुवि कान्तं गौरि चिरं संभावय तन्नागाधीशेनोक्तम्' ॥

१९५. शंभुमुदाहरति—जहा (यथा)—

कश्चित्कविः शीतभरं वर्णयति—अनेन शीतकालेन शीतवृष्टिस्तथा कृता यथा जीवो गृहीतः । बाला वृद्धाश्च कम्पन्ते । किंच वाति पाश्चात्यो वातः । सर्वा दिश आच्छादयन्तीकायेषु लगति । यद्वा—का अ मिहीकार्थे देशी । तत्र सर्वा दिशः आच्छादयन्ती मिहिका लगति । यदा—जाड्यं ( झञ्झावातः सवृष्टिकः ) रुष्यति प्रबलं भवति तदा चिन्ता भवति सदा अग्निः पृष्ठे चेत्तिष्ठति । अथ च करपादं सभृत्य गृह्यते अन्तरन्योन्यं निलीयते ॥ यथा वा [ णीभूषणे ]—'जय मायामानवमूर्ते दानववंशध्वंशव्यापारी वलमाद्यद्रावणहत्याकारण लङ्कालक्ष्मीसंहारी । कृतकंसध्वंसनकर्मा गोगोपीगोपानन्दी वलिलक्ष्मीनाशनलीलावामनदैत्यश्रेणीनिष्कन्दी ॥' उद्दवणिका यथा—||ऽ,ऽऽ, ||ऽ, ऽऽ, ||ऽ, ऽ, ऽऽऽ, ऽऽ, १९× ४=७६ ॥ शंभुर्निवृत्तः ॥

अथैकोनविंशत्यक्षरप्रस्तार एव कानिचिद्वृत्तानि ग्रन्थान्तरादाकृष्य लिख्यन्ते—

तत्र प्रथमं मेघविस्फूर्जिताछन्दः—'रसर्त्वश्वैर्यौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात्' ।

यत्र रसैः षड्भिः, ऋतुभिः षड्भिरेव, अश्वैः सप्तभिः कृतविरतिः, अथ च्र य्मौ यगणमगणौ, अथ च न्सौ नगणसगणौ, रगणद्वयगुरुयुतौ चेद्भवतस्तदा मेघविस्फूर्जिताछन्दः स्यादिति ॥

यथा—

कदम्बा मोदाढ्या विपिनपवनाः केकिनः कान्तकेका
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।
निशानृत्यद्विद्युत्प्रसरविलसन्मेघविस्फूर्जिताश्चे-
त्प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मान्न किंचित् ॥'

यथा वा—

'उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठी कण्ठीरवरवलवत्रासितप्रोषितेभाः ।
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केलिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः ॥'

इति राक्षसकविकृत दक्षिणानिलवर्णनम् ॥ उट्टवणिका यथा—ISS, SSS, III, IIS, SIS, SIS, S, १९, X४=७६ ॥ मेघविस्फूर्जिता निवृत्ता ॥

अथ छाया छन्दः—'भवेत्सैवच्छाया तयुगलयुता स्याद् द्वादशान्ते यदि'

भोः शिष्याः, सैव मेघविस्फूर्जितैव यदि द्वादशान्ते यदि द्वयान्ते सगणान्त इति यावत् । तत्र रेफयुगस्थाने तयुगलयुता तगणद्वयसहिता । आदेशन्यायेनेति भावः । विरतिश्च सैव । शेष समानम् । यत्र भवेत्तच्छायानामक छन्दो भवतीति ॥

यथा—

'अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नः स्तबकिततनुश्चित्राशुकालम्बितः ।
न यस्याङ्घ्रेश्छायामुपगतवता संसारतीव्रातप-
स्तनोति प्रोत्तापं जयति जगतां कंसारिकल्पद्रुमः ॥

उट्टवणिका यथा—ISS, SSS, III, IIS, SSI, SSI, S १९X४=७६ ॥ छाया निवृत्ता ॥

अथ सुरसाछन्दः—'म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैराह सुरसाम्'

भोः शिष्याः, यत्र म्रौ मगणरगणौ, अथ च भ्नौ भगणनगणौ भवतः, ततो यो यगणः, ततो नो नगणः, अनन्तर गुरुश्चेत् । अथ च—स्वरैः सप्तभिः, मुनिभिः सप्तभिः, करणैः पञ्चभिः कृतविश्रामा सुरसामाह नागराज इति शेषः ॥

यथा—

'कामक्रीडासतृष्णो मधुसमयसमारम्भरभसा-
त्कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।
गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानप्रभवकृतसुखं व्यस्मरदसौ ॥'

उट्टवणिका यथा—SSS, SIS, SII,III, ISS, III, S, १९×४=७६ ॥ सुरसा निवृत्ता ॥

अथ फुल्लदामच्छन्दः—

भोः शिष्याः, यत्रादौ मो मगणः, ततो गौ गुरुद्वयम्, ततश्च नौ नगणद्वयम्, ततोऽपि तौ तगणौ भवतः, ततो गौ गुरुद्वय भवति । किंच—शरहयतुरगैः पञ्चसप्तसप्तभिः पूर्वविपरीतैर्विरचितविरतिकं फुल्लदामनामकं प्रसिद्धं विख्यातं वृत्तं भवतीति वित्त ॥

यथा—

शश्वल्लोकानां प्रकटितकदन ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् ।
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपम स्वस्तरोः फुल्लदाम ॥'

उट्टवणिका यथा—SSS, SS, III, III, SS', SSI, SS, १९×४=७६ ॥ फुल्लदाम निवृत्तम् ॥

अत्रापि प्रस्तारगत्यैकोनविंशत्यक्षरस्य पञ्चलक्षं चतुर्विंशतिसहस्राण्यष्टाशीत्युत्तरं च शतद्वयं (५२४२८८) भेदाः । तेषु कियन्तो भेदा उक्ताः शेषभेदा विशेषशेमुषीकैराकराद्विचारेण वा प्रस्तार्य प्रस्तावनीया इति दिङ्मात्रमुपलक्षितमस्माभिरित्युपरम्यत इति ॥

१९६. अथ विंशत्यक्षरप्रस्तारे गीताच्छन्दः—

हे मुग्धे, यत्रादौ हस्तं सगणं, णरेन्दवि नरेन्द्रद्वय च ठवि स्थापयित्वा ततः पादगणो भगणः, ततः पञ्चमो जोहलो रगणः, यत्र च ठाइछट्टहि प्राकृते पूर्वनिपातानियमात् षष्ठे स्थाने हस्तः सगणो दृश्यते, ततः शब्दो लघुः, तदन्ते नूपुरो गुरुः, तत् गीअउ गीतेति नामकं छन्दः सर्वलोकै······ ज्ञातं कविसृष्ट्या सृष्टं सृष्ट्या च दृष्टं पिङ्गलेन व्याख्यातं च त्वयि प्रकाशितमित्याचार्यः त्वत्प्रियतमां प्रत्याहेति योजनीयम् । अतएव च्छन्दोमञ्जर्यामुक्तम्—'सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका' ।

वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'वरपाणिशोभिसुवर्णकङ्कणरत्नरज्जुविभूषिता सुपयोधरा पदशङ्खिनूपुररूपकुण्डलमण्डिता। फणिराजपिङ्गलवर्णिता कविसार्थमानसहारिका वरकामिनीव मनोमुदे नहि कस्य सा खलु गीतिका ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥

१९७. गीतिकामुदाहरति—जहा ( यथा )—

कश्चित्कामुकः कामिनीगतभावोद्दीपनाय वसन्तमुपवर्णयन्नाह—हे सुन्दरि, यत्र वसन्ते प्राकृते पूर्वनिपातानियमात् चारुकेतकीचम्पकचूतमञ्जरीवञ्जुलानि पुष्पितानि। किंच—सर्वदिक्षु किंशुककानने फुल्लनवपलाशवने पानेन तत्तन्मकरन्दास्वादनेन व्याकुला भ्रमरा यत्र दृश्यन्ते। अथ च यत्र गन्धबन्धुः सुगन्धप्रायकत्वात्सुरभिसोदरस्तादृशश्चासौ विशिष्टो बन्धः स्कन्धकविन्यासो यस्य। अत एव बन्धुर उच्चनीचो भूत्वा मन्दमन्द समीरणो मलयानिलो वहति। अतश्चैवंविधमदनमहोत्सवसदनरूपे समये तरुणीजनाः प्रियेण सह केलिकौतुक निधुवनकौतुक तस्य यो लासो विलासस्तल्लग्गिमनि तत्कान्तौ लग्ना यत्र तादृशोऽय वसन्तसमयः प्राप्तः। तस्मात्त्वमपि यथा सुख विहरेति ॥ यथा वा [ णीभूषणे ]—'अलमीशपावकपाकशासनवारिजासनसेवया गमित जनुर्जनकात्मजापतिरप्यसेव्यत नो मया। करुणापयोनिधिरेक एव सरोजदामविलोचनः स पर करिष्यति दुःखशोषमशेषदुर्गतिमोचनः ॥' यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा रमणाय वेणुनिनादलङ्घिमसगमेन सुखावहा। बहुलानुरागनिवासरासमुद्भवा भवरागिण विदधौ हरिं खलु बल्लवीजनचारुचामरगीतिका ॥' 'अथ सालतालतमालवञ्जुलकोविदारमनोहरा—' इत्यादि शिको ( ? ) काव्ये ॥

उट्टवणिका यथा—IIS, ISI, ISI, SII, SIS, IISIS, २०×४=८० ॥ गीतिका निवृत्ता ॥

१९८ अथ गण्डकाच्छन्दः—

हे मुग्धे, यत्रादौ रगणो मध्यलघुर्गणः पतति, पुनर्नरेन्द्रो जगणः कान्तोऽतिसुन्दरः, ततः सुष्ठु एवभूतो ( तेन ) रगणादिजगणान्तेन षट्केन सह हारमेकं गुरु देहि। तदनन्तर सुतकरण स्वशक्त्या निजकवितासामर्थ्येन सुशब्द लघु पादे कुरु। तदेतद्वक्रशङ्खश्रृङ्खलया गुरुलघुश्रृङ्खलाबन्धक्रमेण फणीन्द्रः पिङ्गलो गण्डकाभिधानमिति छन्दो गायति ( णय ) यत्र पादे गुरुदशकद्वैगुण्येन लघुदशकेन त्रिंशन्मात्राः पतिताः। अत्र च हारशब्दाभ्या ए एकः तीअभाअ त्रिकलभागः आउ आगत इत्यर्थः। यदि च त्रिकलाना सामस्त्येन सख्या क्रियते तदा दशत्रिकलैरादिगुरुकैरेव गण्डका निष्पाद्यत इति भावः ॥ वाणीभूषणे तु प्रकारान्त

रेणोक्तम्—'तालचामरध्वजं पयोधरं च कुण्डलं शरं विधाय नूपुरं च नायकं सपन्द्रिराजगन्धचामरं निधाय। रूपमन्त्यग विदेहि वर्णितेन पन्नगेन्द्रपिङ्गलेन गण्डका कवीन्द्रमण्डलीविनोदकारिणी सुमङ्गलेन ॥' ग्रन्थान्तरे त्विदमेव चित्रवृत्तमिति नामान्तरेणोक्तम्। अत एव च्छन्दोमञ्जर्याम्—चित्रवृत्तमीरितं तदा रजौ रजौ रजौ गुरुर्लघुश्च' ॥······॥

१९९. गण्डकामुदाहरति—जहा (यथा)—

कश्चित्स्वमित्रं प्रत्याह—तावद्बुद्धिः, तावच्छुद्धिः, तावद्दानम्, तावन्मानः, तावद्गर्वः, यावद्यावद्धस्ततले नृत्यति सर्वथा विद्युद्रेखेवातिचञ्चलमेकं द्रव्यम्। अत्रान्ते द्रव्याभावे आत्मदोषो दैवरोषो वा कारणं भवति नष्टास्त एव सर्वे वस्तुतस्तु का बुद्धिः, का शुद्धिः, किंवा दानम्, को वा मानः, को वा गर्वः ॥ यथा वा [णीभूषणे]—'दृष्टमस्ति वासुदेव देव विश्वमेतदेव शेषक तु वाजिरत्नभृत्यदारसूनुगेह वित्तमादिवन्नव तु। त्वत्पदाब्जभक्तिरस्तु चित्तसीम्नि वस्तुतस्तु सर्वदैव शेषकाललुप्तकालदूतभीतिनाशिनीह हन्त सैव ॥' उट्टवणिका यथा—SIS, ISI, SIS, ISI, SIS, ISI, S, I, २०×४=८० ॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—चित्तवृत्तलीलया निसर्गरम्यदेशरूपविभ्रमेण राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन। यः समं व्रजाबलाजनैः सुराङ्गनानिभैः सुखं समेत्य विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥" गण्डका निवृत्ता ॥

अथास्मिन्नेव प्रस्तारे शोभानामकं वृत्तं ग्रन्थान्तरादाकृष्य लिख्यते—'रसाश्वाश्वैः शोभा नयुगगजठरा मेघविस्फूर्जिता चेत्'।

यत्र रसैः षड्भिः, अश्वैः सप्तभिः, पुनरश्वैर्विरचितविरतिः, अथ च मेघविस्फूर्जिता चेत् यगणमगणानन्तरं नगणद्वयगुरुजठरा भवति। शेषं समानं यत्र तच्छोभानामकं वृत्तं भवतीति ॥

यथा—

सदा पूर्णोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्ध्वे राजत्तरलकिसलया श्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा
महो शोभा मौलौ मिलदलिपटलैः कृष्ण सा कापि वल्ली ॥

उट्टवणिका यथा—ISS, SSS, III, III, S, SIS, SIS, S, २०×४ =८० ॥ शोभा निवृत्ता ॥

अथ सुवदना छन्दः—'ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना'

यत्र सप्तभिरश्वैः सप्तभिरेव, ततश्च षड्भिर्विरतिः, अथ च मगणरगण-भगणनगणयगणाः, ततो भ्लौ भगणलघू ततश्चान्ते गुरुर्यत्र सा सुवदना ज्ञेया ॥

यथा—

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वा धायन्ती निकुञ्जे परतरपुरुष हर्षोत्फुल्लपुलका ।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्तिं त्यक्तुकामा ननु नरकरिपो राधा मम सखी ॥

उट्टवणिका यथा—SSS, S।S, S।।, ।।।, ।SS, S।।, ।, S, २०×४ =८० ॥ सुवदना निवृत्ता ॥

अत्रापि प्रस्तारगत्या विंशत्यक्षरस्य दशलक्षमष्टचत्वारिंशत्सहस्राणि षट्सप्तत्युत्तराणि पञ्च शतानि १०४८५७६ भेदा भवन्ति । तेषु विस्तरभीत्या कियन्तो भेदा भवन्ति । शेषभेदास्तु सुबुद्धिभिराकरात्स्वमत्या वा प्रस्तार्य सूचनीया इति दिक् ॥

२००. अथैकविंशत्यक्षरप्रस्तारे स्रग्धराछन्दोऽभिधीयते—

भोः शिष्याः, यत्र प्रथम द्वौ कर्णौ गुरुद्वयात्मकौ गणौ, ततो गन्धो लघुः, ततो हारो गुरुः, ततो वलयो गुरुः, ततो द्विजगणश्चतुर्लघ्वात्मको गणः, ततो हस्तः सगणः, ततो हारो गुरुः पतति, तत एकल एको लघुः, शल्यो लघुः, अनन्तर कर्णः, ततो ध्वज आदिलघुस्त्रिकलस्तत्सहितः, ततः कङ्कणो गुरुरतिकान्तोऽन्ते यस्य एवमेकाधिका विंशतिर्वर्णाः पदे यत्र तत्र विवेकः—लघवो नव, द्वादश दीर्घा गुरवो भवन्ति । एतेन गुरुद्वैगुण्येन चतुर्विंशतिः, अथ च—नव लघवः सभूय त्रयस्त्रिंशन्मात्राः पदे तत्पिण्डो द्वात्रिंशदधिकशतमात्रको यत्र ( यथा ) सा शुद्धा स्रग्धरानामक वृत्त भवतीति फणिपतिः पिङ्गलो भणतीति ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम् 'कर्ण ताटङ्कयुक्त वलयमपि सुवर्ण च मञ्जीरयुग्म पुष्प गन्ध वहन्ती द्विजगणरुचिरा नूपुरद्वन्द्वयुक्ता । शङ्ख हारं दधाना सुललितरसनारूपवत्कुण्डलाभ्यां मुग्धा केषा न चित्त तरलयति बलात्स्रग्धरा कामिनीव ॥' कामिनीपक्षेऽर्थः स्पष्टः ॥ छन्दोमञ्जर्यां तु 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इत्युक्तमिति ॥

२०१. स्रग्धरामुदाहरति—जहा ( यथा )—

कर्पूरमञ्जरीसाटकस्य नान्दीपाठकस्य वचनम्—ईर्ष्यारोषप्रसादप्रणतिषु स्वर्गगङ्गाजलैरामूलं बहुशो मुहुः पूरितया तुहिनकरकलारूप्यशुक्त्या शिरसि निहितं ज्योत्स्नामुक्ताफलयुक्त द्वाभ्यामग्रहस्ताभ्या शीघ्रमर्घ्यं ददद्रुद्रः शिवो जयति सर्वोत्कर्षेण वर्तत इत्यन्वयः ॥ यथा वा [ णीभूषणे ]—'अन्त्रप्रोतास्थिमालावलयविलसद्बाहु-

दण्ड प्रचण्डा वेगव्यालोलमुण्डावलिकलितरणत्कारकण्ठोपकण्ठाः । कुर्वन्तो गर्वमत्युद्दलगहनवलद्धर्घरध्वानमुच्चैरुत्कृत्तैरुत्तमाङ्गैर्विदधति च शिरः कन्दुकक्रीडितानि ॥' उट्टवणिका यथा—ऽऽ, ऽऽ, ।, ऽ, ऽ, ।।।।, ।।ऽ, ऽ, ।, ऽऽ, ।ऽ, ऽ, २१×४=८४ ॥ यथा वा ग्रन्थान्तरस्थमुदाहरणम्—'व्याकोषेन्दीवराभा कनककपलसत्पीतवासा सुहासा बर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतसा । अंसव्यासक्तवशध्वनिसुखितजगद्बल्लवीभिर्लसन्ती मूर्तिर्गोपस्य विष्णोरवतु जगति दः स्रग्धराहारिहारा ॥' स्रग्धरा निवृत्ता ॥

२०२. अथ नरेन्द्रच्छन्दः—

भोः शिष्याः, यत्रादौ पादगणो भगणः प्रकटितो भवति, ततो जोहलो रगणः स्थाप्यते, ततः काहलो लघुः, ततः शब्दो लघुः, ततो गन्धो लघुरेव, एव मुनिगणश्चतुर्लघुको गणः, ततः कङ्कणो गुरुर्यत्र क्रियते, ततः शब्दो लघुरेको यत्र तथ्य सत्यम्, ततो नरपतिर्जगणश्चलति, ततः सुभव्यः शङ्खो लघुः पूर्यताम्, ततश्चामरयुग्मं गुरुद्वन्द्वमन्ते यत्र प्रकटितम् एतन्नरेन्द्राख्य काव्य छन्द इत्यर्थः ॥ अथ च—यदा नरपतिश्चलति तदैतत्सर्वं भवति । यथा पूर्वं गणाः प्रचरन्ति, ततः काहलशब्दो भवति, तदनन्तरं गन्धस्य कर्पूरागुरुसारादेर्ज्ञानम्, तदनन्तर गन्धस्य कर्पूरागुरुसारादेर्ज्ञानम्, तदनन्तरं कङ्कणादिभूषण प्रसन्नेन नरेन्द्रेण महावीरेभ्यो दीयत इत्यादि तादृशध्वनिविशेषरूपेऽर्थे यथायुक्तं योजनीय सुमतिभिरित्युपरम्यते ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'चामररत्नरज्जुवरपरिगतविप्रगणाहितशोभः पाणिविराजिपुष्पयुगविरचितकङ्कणसंगतगन्धः । चारुसुवर्णकुण्डलयुगललितरोचिरलङ्कृतवर्णः पिङ्गलपन्नगेश इति निगदति राजलि वृत्तनरेन्द्रः ॥'

२०३. नरेन्द्रमुदाहरति—जहा ( यथा )—

काचित्प्रोषितपतिका निजसखीमाह—हे सखि, पुष्पित किंशुकम् । चम्पकमपि तथा प्रकटित विकसितमित्यर्थः । चूता आम्रवृक्षा मञ्जर्या तेजिता जातमञ्जरीका जाता इत्यर्थः । किंच दक्षिणो वातो मलयानिलः शीतो भूत्वा प्रवहति । अतः कम्पते वियोगिनीहृदयम् । अथ च केतकीधूलिः सर्वदिक्षु प्रसृता । अतः पीत सर्वतो भासते इत्यादिलक्षणवशतो वसन्त आगतः । अतः कारणात्सखि, किं करिष्यामि कथं वा नेष्यामि दिवसानेतान् । कान्तः पार्श्वे न तिष्ठति ॥ यथा वा [ णीभूषणे ]—'पङ्कजकोषपानपरमधुकरगीतमनोज्ञतडागः पञ्चमनादवादपरभृत काननसत्परभागः । वल्लभविप्रयुक्तकुलवरतनुजीवनदानदुरन्तः किं करवाणि वच्मि मम सहचरि सनिधिमेति वसन्तः ॥' उट्टवणिका यथा—ऽ।।, ऽ।ऽ, ।, ।, ।, ।।।।, ऽ, ।, ।ऽ।, ।, ।, ऽऽ, २१×४=८४ ॥ नरेन्द्रो निवृत्तः ॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरात्सरसीछन्दो लक्ष्यते—'नजभजजाजरौ यदि तदा गदिता सरसी कवीश्वरैः'।

यत्र नगणजगणभगणजगणजगणा भवन्ति । अथ च जरौ जगणरगणौ भवतो यदि तदा कवीश्वरैः सा सरसी गदिता । तन्नामक छन्द इत्यर्थः ॥

यथा—

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विकसद्भुजवालमृणालवल्लिषु ।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासु विभ्रमम् ॥

यथा वा—'तुरगशताकुलस्य परितः परमेकतुरंगजन्मनः प्रमथितभूभृतः प्रतिपथ मथितस्य भृश महीभृता । परिचलतो बलानुजबलस्य पुरः सतत धृतश्रियश्चिरगलितधियो जलनिधेश्च तदाभवदन्तर महत् ॥' इति माघे ॥ उद्दवणिका यथा—।।।, ।ऽ।, ऽ।।, ।ऽ।, ।ऽ।, ।ऽ।, ऽ।ऽ, २१ × ४ = ८४ ॥ इदमेव ग्रन्थान्तरे 'सिद्धकम्' इति नामान्तरेणोक्तम् ॥ सरसी निवृत्ता ॥ अत्रापि प्रस्तारगत्यैकविंशत्यक्षरस्य नवलक्ष सप्तनवतिसहस्राणि द्विसमधिकपञ्चाशदुत्तर च शतं २०९७१५२ भेदा भवन्ति । तेषु भेदत्रय प्रदर्शितम् । शेषभेदाः सुधीभिः स्वबुद्ध्या प्रस्तार्य सूचनीया इति दिक् ॥

२०४. अथ द्वाविंशत्यक्षरप्रस्तारे हसीछन्दः—

भोः शिष्याः, यत्र विद्युन्मालाया वसु ( ८ ) गुरुचरणायाः पादपाते सति त्रयो द्विजगणाश्चतुर्लघ्वात्मकगणाः, तथा बहुगुणयुक्ताः पतन्तीत्यर्थः । तस्यान्ते वसुगुरुद्विजगणत्रयान्ते कर्णेन द्विगुर्वात्मकेन गणेन शुद्धौ वर्णौ यत्र यत्र च पदे पदे प्रतिपद गुरुदशकद्वैगुण्येन विंशतिः ( २० ) द्विजत्रयाणा ( ? ) दिनकर ( १२ ) लघवः सभूय द्वात्रिंशन्मात्राः प्रकटिताः । एव यत्र गुरूणा लघूना प्रकटितशोभा ( शोभा ) स ( त ) देतद्धसीनामक छन्दः सकलबुधजन्ममनोहरणे मोहा मोहरूप पण्डितजनमनोविस्मायकमिदं गुणयुक्तः कविवरः फणिपतिर्भणतीति जानीत ॥ वाणीभूषणेऽप्युक्तम्—'यस्यामष्टौ पूर्वे दीर्घास्तदनु कमलमुखि दिनकरसंख्या ह्रस्वा वर्णाः पीनोत्तुङ्गस्तनभरविनमितसुभगशरीरे । दीर्घावृत्त्या लीलालोले यतिरिह विरमति कुलगिरिषष्ठैर्द्वाविंशत्या वर्णैः पूर्णा प्रभवति कुसुममृदुलतरहंसी ॥' छन्दोमञ्जर्यामपि—'मौ गौ नाश्चत्वारो गो गो भवति वसुभुवनयतिरिह हसी ।' यत्र मौ मगणद्वयम्, अथ च गौ गुरुद्वयम्, तदनन्तर चत्वारो ना नगणचतुष्टयमित्यर्थः । ततश्च गो गो गुरुद्वयमेव यत्र भवति । यतिस्तु प्रथम वसुष्वष्टसु ततो भुवनैश्चतुर्दशभिर्भवतीति विश्रामभेदेनोक्तम् ॥

२०५. हसीमुदाहरति—जहा ( यथा )—

काचित्प्रौढा नायिका शरत्समयमुवर्णयन्ती निजसखीमाह—हे सखि, नेत्रानन्दो लोचनानन्दकारी चन्द्र उदेति, किं च धवलचमरसमशीतकरबिन्दव इव तारा तेआ यस्या रजन्या हारा इव उद्यन्ति। अथ च—विकसितं कमलवनम्, अत एव परिमलाः सुगन्धाः कन्दा यत्र तादृशम्। अपि च सर्वाशासु काशाः भासन्ते मधुरश्च पवनः लहलह करोति। मन्दमन्दसचरणे 'लहम्' इत्यनुकरणम्। किं च हसः सद्दू कूजतीत्यर्थः। अतः पुष्पबन्धुः शरत्समयः सखि, हृदयं हरति रसोद्दीपकत्वेन हृदयहारको भवतीत्यर्थः॥ यथा वा [ णीभूषणे ]—'श्रीकृष्णेन क्रीडन्तीना क्वचिदपि वनभुवि मनसिजभाजा गोपालीनां चन्द्रज्योत्स्नाविशदरजनिजनितरततीनाम्। घर्मभ्रश्यत्पत्रालीनामुपचितरभसविमलतनुभासा रासक्रीडायासध्वंसी मुदमुपनयति मलयगिरिवातः॥' उट्टवणिका यथा—ऽऽऽऽऽऽऽऽ, ।।।।, ।।।।, ।।।।, ऽऽ, २२ × ४ = ८८॥ यथा वा ग्रन्थान्तरे—'सार्धं कान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती कामक्रीडाकूतस्फीतप्रमदसरसतरमलघु वसन्ती। कालिन्दीये पद्मारण्ये पवनपतनतरतरलपरागे कसाराते पश्य स्वेच्छ सरभसगतिरिह विलसति हसी॥' हसी निवृत्ता॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरान्मदिरानामक छन्दोऽभिधीयते—'सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा'।

यत्रैको गुरुरन्ते वर्तमानः सप्तभकारयुक् भगणसप्तकयुक्तो भवति तन्मदिराभिधान छन्दो भवतीति॥

यथा—

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-
भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम्।
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
त्व भज माधविकामृदुनर्तकयामुनवातकृतोपगमा॥

उट्टवणिका यथा—ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ २२ × ४ = ८८॥ मदिरा निवृत्ता॥ अत्रापि प्रस्तारगत्या द्वाविंशत्यक्षरस्यैकचत्वारिंशल्लक्षाणि चतुर्नवतिसहस्राणि चतुरुत्तर शतत्रयं च ४१९४३०४ भेदाः। तेषु भेदद्वयमुक्तम्। शेषभेदाः शास्त्ररीत्या प्रस्तार्य प्रतिभावद्भिरुदाहर्तव्या इति दिङ्मात्रमुपदिश्यते॥

२०६. अत्र त्रयोविंशत्यक्षरप्रस्तारे सुन्दरीछन्दः—

भोः शिष्याः, यत्रादौ हस्तः सगणो भवति, तथा करतल सगण एव. ततः पादगणो भगणः, ततो लहूजुअ लघुद्वयमित्यर्थः। तदनन्तर वङ्क तिआ वक्रात्रयः

गुरुत्रयमित्यर्थः । ततः पहिल्ली प्रथम शल्यमेव लघुमेव स्थापय स च शल्यो लधुः चमरहिहिल्लौ चमरगुरू मिलित्वैतदग्रे गुरुर्भवतीत्यर्थः । ततः सल्लजुअं शल्ययुगं लघुद्वयमित्यर्थः । पुनर्यत्र वङ्क ठिआ वक्रो गुरुः स्थितः । ततः पदे पदे प्रतिपदमन्ते हस्तगणः सगणः प्रभण्यते । एव त्रयोविंशतिर्वर्णाः पादे यत्र प्रमाणीकृताः । तदेतन्मात्राभिर्वर्णैश्च प्राप्त सुन्दरीनामक छन्दो भणितमशेषैः कविभिः प्रभण्यते भवत्सु कथ्यते इत्यर्थः ॥ वाणीभूषणे तु प्रकारान्तरेणोक्तम्—'करसङ्गि सुवर्णद्वयवलया ताटङ्कमनोहरशङ्खधरा कुसुमत्रयराजच्छ्रवणविलोलकुण्डलमण्डितरत्नधरा । भुजसमतकेयूरजसुविलासा पिङ्गलनागसमालपिता किल सुन्दरिका सा भवति तदा पञ्चावतिका कविराजहिता ॥'

२०७. सुन्दरीमुदाहरति—जहा (यथा)—

कश्चित्कविर्दशावताररूपेण विष्णुं स्तुवन्मङ्गलमभिनन्दति—येन विरचित-मीनशरीरेण प्रलयजलधिमध्यतः पञ्चजनासुराद्वेदाः समुद्धृताः, येन च कृतकूर्मरूपेण पिट्ठिहि पृष्ठेन महीमण्डलं भूमण्डलं विधृतम् । किंच येन विधृतसूकररूपेण दन्ताभ्या मेदिनीमण्डलमुद्धृतम् । येन च विरचितनरहरिरूपेण रिपोर्हिरण्यकशि-पोर्वक्षो विदारितम् अथच येन छलतनुधारिणा कृतवामनशरीरेण शत्रुर्बलिर्बद्ध्वा पाताले धृतः । अपिच प्राकृते पूर्वनिपातानियमात्क्षत्रियकुल येन धृतजामदग्न्य-विग्रहेण तापि ( कम्पि ) तम् । येन च विरचितरामावतारेण दश मुखानि दशमु-खस्य कर्तितानि । खण्डितानीत्यर्थः । येन च कृतरामकृष्णावतारेण कसकेशिनोर्वि-नाशः कृतः । येन च धृतबुद्धशरीरेण करुणा दया प्रकटिता । येन च कृतकल्कि-रूपेण म्लेच्छा विलापिता विलीनाः कृताः । स नारायणो युष्मभ्यं वरमभिलषितफलं ददात्विति ॥ यथा वा [ णीभूषणे ]—'शरदिन्दुसमानं व्यपगतमानं गायति दिक्षु तवैव यशः स्वरसामुनिदेवी विगलितनीवीकामकलाविकला बहुशः । पृथुवेपथुयुक्ता स्त्रग्रहवियुक्ता स्वेदकलावलिमुग्धमुखी धरणीरमणेन्दो विकसदमन्दोदारसभासंवर्ति-मुखी ॥' उट्टवणिका यथा—॥ऽ, ॥ऽ, ऽ॥, ॥, ऽऽऽ, ।, ।ऽ, ऽ।, ऽ, ॥ऽ, २३×४=९२ ॥ सुन्दरी निवृत्ता ॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरादद्रितनयानामकं वृत्तमुच्यते—'नजभजसा जभौ लघुगुरू बुधैस्तु गदितैयमद्रितनया'

यत्र नगणजगणभगणजगणभगणा भवन्ति । अथ च जभौ जगणभगणौ, अथ च लघुगुरू भवतः साद्रितनया निगदिता । तन्नामकं छन्द इत्यर्थः ॥

२७४. यथा—

खरतरशौर्यपावकशिखापतङ्गनिभभग्नदत्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ।

भुवनहितावतारश्चतुरश्चराचरधरोऽवतीर्ण इह यः
क्षितिवलयेऽस्ति कंसशमनस्तवेति तमवोचदद्रितनया ॥

यथा वा—'विलुलितपुष्परेणुकपिशप्रशान्तकलिकापलाशकुसुमम्' इत्यादि भट्टिकाव्ये। उट्टवणिका यथा—।।।, ।ऽ', ऽ।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।।, ।, ऽ, २३×४=९२ ॥ क्वचिदिदमेवश्वललितमिति नामान्तरेणोक्तम् ॥ अद्रितनया निवृत्ता ॥

अथ मत्ताक्रीड छन्दः—'मत्ताक्रीडं वस्वत्त्वाशायति मयुगगयुगमनुलघुगुरुभिः' यत्र वसुभिरष्टभिः, ततोऽक्षैः पञ्चभिः, तत आशाभिर्दशभिर्यतिर्यत्र तत्। किंच भगणद्वय गुरुद्वयं यत्र तदनु चतुर्दशलघूनामन्ते गुरुः। एव त्रयोविंशतिभिर्वर्णैः पद यत्र तन्मत्ताक्रीडं नाम छन्दः ॥

यथा—

मुग्धोन्मीलन्मत्ताक्रीड मधुसमयसुलभमधुरमधुरसं
गाने पाने किंचित्स्पन्दत्पदमरुणनयनयुगलसरसिजम्।
रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयरचितभुजरसं
सान्द्रानन्द वृन्दारण्ये स्मरत हरिमनघपदपरिचयदम् ॥

उट्टवणिका यथा—ऽऽऽ, ऽऽऽ, ऽ, ऽ, ।।।।।।।।।।।।।।, ऽ, २३×४=९२ ॥ मत्ताक्रीड निवृत्तम् ॥

अत्रापि प्रस्तारगत्या त्रयोविंशाक्षरस्य वृत्तस्य त्र्यशीतिलक्षाण्यष्टाशीतिसहस्राण्यष्टोत्तराणि षट्शतानि ( ८३८८६०८ ) भेदाः। तेषु कियन्तो भेदाः प्रोक्ताः। शेषभेदाः शास्त्रोक्तरीत्या प्रस्तार्य सूचनीयाः सुधीभिराकरतो वा समुदाहर्तव्या इति दिगुपादिश्यते ॥

२०८. अथ चतुर्विंशत्यक्षरप्रस्तारे दुर्मिलाछन्दोऽभिधीयते—

भोः शिष्याः दुर्मिलाछन्दसि प्रकाशयति ( त ), वर्णान् विसेसहु विशिष्टान् विशेषतो वा विशेषयत। तान्विशेषणविशिष्टान्कुरुतेत्यर्थः ॥ तान्विशिनष्टि—ये वर्णाः फणीन्द्रेण दर्वीकराधीश्वरेण पिङ्गलेन चारुगणत्वेन दीस दृष्टाः। ते च गणाः शेषेण द्वात्रिंशद्भिर्मात्राभिर्ज्ञायत इति भणिताः। तानाह—अष्टस्वपि स्थानेषु स्थापयित्वा सगणान्। अत्र चतुष्कलात्मकगणाष्टकस्थापनेन द्वात्रिंशन्मात्रात्मकं पदमिति भावः ॥ अथ च त्रिवर्णात्मकगणाष्टकविन्यासेनैव वेदलोचन (२४) वर्णात्मकश्चरणो भवतीति भावः ॥ इतरगणनिषेधमाह—गणेति। अन्यो गणः सगणातिरिक्तोऽस्मिन्वृत्ते न क्रियते। अत एवेतरगणव्यावृत्त्या सगणकरणेन कवेः कीर्तिः मुणिज्जइ ज्ञायत इत्यर्थः ॥ अन्यगणकरणे दोषा अनेके लगन्ति यत्र ॥ यद्यप्यन्यग-

णकरणे प्रकृतप्रस्तारवर्णसंख्या विद्यत एव। तथापि सगणस्य चतुष्कलत्वादष्टसगणविरचनेन प्रोक्तविरतिसहितनयनानल ( ३२ ) कलाकलितमेतत्पदम्, अन्यथाधिककलगणत्वात्प्रोक्तनियमहीनतश्छन्दोभङ्गमावहेदित्याशयः ॥ अथात्र यतिनियममाह—कहि इति कृत्वा विरामत्रय विरतित्रयं पादे तत्र ताः विरतयः प्रथमं दशमात्रासु, पुनरष्टमात्रासु, ततश्चतुर्दशमात्रासु सही सत्य भवन्तीत्यर्थः। तत्प्रोक्तलक्षणं दुर्मिलानामक वृत्तमिति ॥ भूषणेऽप्युक्तम्—'विनिधाय कर गुरुरत्नमनोहरबाहु युगं कुरु रत्नधर सगण च ततः कुरु पाणितलं वरपुष्पयुग विनिधाय गुरुम्। इति दुर्मिलका फणिनायकसरचिता किल वर्णविलासपरा चतुराश्रितविंशतिवर्णकृता कविता सुकृताश्रयशिल्पधरा ॥'

२०९. दुर्मिलामुदाहरति—जहा ( यथा )—

प्रभुणा नरपतिना दापितं वाद्यं प्रयाणार्थं दुन्दुभिनादः समाज्ञप्त इत्यर्थः। ततश्च सज्जीकृत टोप्परु शिरस्त्राणम्। 'टोपर मत्थअ' इति क्वचित्पाठः। तत्र शिरस्त्र मस्तके दत्तम्। कङ्कणो बाहौ दत्तः। शीर्षे किरीटो मुकुटं दत्तम्। अपि च पातयित्वा कर्णयोः कुण्डल यथा रविमण्डल मार्तण्डमण्डलमिव भासमानं स्थापितो हारो लुठन्नुरसि, प्रत्यङ्गुलि मुद्रिका हीरकैः सुन्दरी दत्ता। एवं च कञ्चनविद्युद्वत् सुसज्जा तनुर्ययोः, तथा द्वावपि सुन्दरौ। कौ तावित्याह—स्तावकः कविः, नायकश्च। तत्क्षणे सुन्दरसेष ( शे ) धनुषौ विरेजतुरित्यर्थात् ॥ यथा वा [ णीभूषणे ]—'कति सन्ति न गोपकुले ललिताः स्मरतापहताश्च विहाय च ता रतिकेलिकलारसलालसमानसमुण्डितमान [ समान ] रसम्। वनमालिनमालिनमस्य नमस्य विरस्य [ चिरस्य ] वृथा भविता परितापवती भवती [ भवती ] युवतीजनससदि हासकथा ॥' उट्टवणिका यथा—IIS, IIS, IIS, IIS, IIS, IIS, IIS, IIS, २४×४=९६ ॥ दुर्मिला निवृत्ता ॥

२१०. अथ किरीटछन्दः—

भोः शिष्याः, स्थापयतादौ शक्रगणमाद्यन्तस्थितगुरुक षट्कलमित्यर्थः। तथा तस्याग्र सल्ल विसज्जहु वे वि द्वौ शल्यौ लघुद्वयं विसर्जयत इत्यन्वयः। ततः शब्दयुग लघुद्वयम्। तथा नूपुर गुरुम्। एपरि अनया परिपाट्या षड्गणा पुनः कर्तव्याः। एव द्वादश गणाः। आदौ शक्रगण कृत्वान्ते काहलयुगलं लघुद्वयं कुरु। अनयैव च रीत्या चतुर्विंशतिवर्णान् प्रकाशयत। द्वात्रिंशन्मात्राश्च पदे पदे कुरुतेति शेषः ॥ प्रकारान्तरेण गणनियममाह—अष्टौ भगणान्गुर्वादिकान्गणान्विसर्जयत नान्यान्। एतदतिरिक्तगणदाने मात्रानियमभङ्गाच्छन्दोभङ्गत्वमिति भावः ॥.......................................॥ वाणीभूषणे तु—

'पादयुगं कुरु नूपुरसुन्दरमत्र करं वररत्नमनोहरवज्रयुगं कुसुमद्वयसगतकुण्डलगन्धयुग समुपाहर। पण्डितमण्डलिकाहृतमानसकल्पितसज्जनमौलिरसालय पिङ्गलपन्नगराजनिवेदितवृत्तकिरीटमिदं परिभावय ॥'

२११. किरीटमुदाहरति—जहा (यथा)—

येन रामेण पितृभक्तिः शिरसि गृहीता। यश्च राज्य विसृज्य चलितो विना सोदरम्। येन सहैकलैव सुन्दरी सीता लग्ना। ततो येन विराधः काकः कबन्धो योजनबाहुर्धृत्वा मारितः। ततो मारुतिर्हनुमान्मिलितो यस्य। वाली च येन व्यापादितः। तद्राज्य सुग्रीवाय दत्तमकष्टेनानायासेनेत्यर्थः। बद्ध्वा च समुद्रं विघातितो रावणो दशकण्ठो येन। स राघवो दाशरथिस्तुभ्यं निर्भय ददात्विति ॥ यथा वा [णीभूषणे]—'मल्लि लते मलिनासि किमित्यलिना रहिता भवती बत यद्यपि सा पुनरेति शरद्रजनी तव या तनुते धवलानि जगन्त्यपि। षट्पदकोटिविघट्टितकुड्मलकोटिविनिर्गतसौरभसंपदि न त्वयि कोऽपि विधास्यति सादरमन्तरमुत्तरनागरसदि ॥' उट्टवणिका यथा—ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, ऽ।।, २४×४=९६ ॥ किरीटो निवृत्तः ॥

अथास्मिन्नेव प्रस्तारे ग्रन्थान्तरात्तन्वीनामक छन्दोऽभिधीयते—'भूतमुनीनैर्यतिरिह भतनाः स्भौ भानया श्च यदि भवति तन्वी'

भोः शिष्याः, यत्र भूतैः पञ्चभिः, मुनिभिः सप्तभिः, इनैर्द्वादशभिर्यतिर्विश्रामो भवति। अथ च—भतना भगणतगणनगणाः अथ च स्भौ सगणभगणौ, अथ च भगणनगणयगणा यदि भवन्ति तदा तन्वीनामक छन्दो भवतीति ॥

यथा—

माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा।
पद्मपलाशैर्विरचितशयने देहजसंज्वरभरपरिदूनै—
र्निश्वसती सा मुहुरतिपरुष ध्यानलये तव निवसति तन्वी ॥

उट्टवणिका यथा—ऽ।।, ऽऽ।, ।।।, ।।ऽ, ऽ।।, ऽ।।, ।।।, ।ऽऽ, २४×४=९६ ॥ तन्वी निवृत्ता ॥ अत्रापि प्रस्तारे चतुर्विंशत्यक्षरस्यैका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशोत्तरं शतद्वयं (१६७७७२१६) भेदाः। तेषु दिङ्मात्रमुदाहृतम्। शेषभेदाः शास्त्रोक्तरीत्या प्रस्तार्य सुधीभिरुदाहर्तव्या इत्यलमिति ॥

अथ क्रमप्राप्त पञ्चविंशत्यक्षरप्रस्तारे ग्रन्थान्तरात्क्रौञ्चपदाछन्दो लक्ष्यते—'क्रौञ्चपदास्या न्द्रो मसभाश्चेदिषुशरवसुमुनियतिरनु लघुगैः'

भोः शिष्याः, यत्र पूर्वं भो भगणः, ततो मसभा मगणसगणभगणा भवन्ति । अथ च—इषुभिः पञ्चभिः, शरैः पञ्चभिः, वसुभिरष्टभिः, मुनिभिः सप्तभिश्चेद्यतिर्विश्रामः किंच भमसभानन्तरमनु लघुगैर्गुर्वन्तैर्द्वादशलघुभिः संभूय पञ्चविंशतिभिर्वर्णैर्यत्र पदं तदा सा क्रौञ्चपदा तन्नामकं वृत्तं भवतीति ॥

यथा—

क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरमसकरी ।
फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः
पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा ॥

उट्टवणिका यथा—ऽ।।, ऽऽऽ, ।।ऽ, ऽ।।, ।।।।।।।।।।।।, ऽ, २५×४=१०० ॥ क्वचिदत्र नवमाक्षरलघुत्वम् । तत्रोट्टवणिकाया तृतीयो नगण इति वेदितव्यमिति ॥ अत्रापि प्रस्तारगत्या पञ्चविंशत्यक्षरस्य कोटित्रय, पञ्चत्रिंशल्लक्षाणि, चतुःपञ्चाशत्सहस्राणि, द्वात्रिंशदुत्तराणि चतुःशतानि च ( ३३५५४४३२ ) भेदाः । तेषु दिगुपदर्शनार्थमेकं वृत्तमुक्तम् । वृत्तान्तराणि च प्रस्तार्य सुधीभिरूह्यानीति शिवम् ॥

अथ षड्विंशत्यक्षरप्रस्तारे ग्रन्थान्तरादेव भुजङ्गविजृम्भितं छन्दोऽभिधीयते—
'वस्वीशाश्वच्छेदोपेत ममतनननयुगरशलगैर्भुजङ्गविजृम्भितम्'
भोः शिष्याः, यद्वसुभिरष्टभिः ईशैरेकादशभिः, अश्वैः सप्तभिश्च छेदोपेतं विश्रामयुक्तम्, अथ मगणद्वयतगणनगणनयुगलरगणसगणलघुगुरुभिः षड्विंशत्यक्षरैः पदं तत्र तद्भुजङ्गविजृम्भित नाम वृत्तं भवतीति ॥

यथा—

हेलोदञ्चन्न्यञ्चत्पादप्रकटविकटनटनभरो रणत्करतालक-
श्चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधृक् ।
त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः
पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिबृहद्भुजङ्गविजृम्भितम् ॥

उट्टवणिका यथा—ऽऽऽ, ऽऽऽ, ऽऽ।, ।।।, ।।।, ।।।, ऽ।ऽ, ।।ऽ, ।, ऽ, २६×४=१०४ ॥ भुजङ्गविजृम्भितं निवृत्तम् ॥ तथापि प्रस्तारगत्या रसलोचन ( २६ ) वर्णस्य कोटिषट्कमेकसप्ततिलक्षाणि वसुसहस्राणि चतुःषष्ट्युत्तराण्यष्टौ शतानि च ( ६७१०८८६४ ) भेदाः । तेष्वेको भेदोऽभिहितः शेषभेदा विशेषबुद्धिभिराकरात्प्रस्ताररीत्या वा प्रस्तार्य स्वेच्छया नामान्यारचय्य सूचनीया इति दिङ्मात्रमुपदिश्यत इति सर्वमवदातमिति ॥

एवं चैकाक्षरादिषड्विंशत्यक्षरपर्यन्त प्रत्येकं प्रस्तारपिण्डसंख्या 'रसलोचन-

सप्ताश्वचन्द्रदृग्वेदवह्निभिः । आत्मना योजितैर्वामगत्या ज्ञेया मनीषिभिः ॥' इति निर्दिष्टदिशा त्रयोदश कोटि (?) द्विचत्वारिंशल्लक्षाणि सप्तदश सहस्राणि षड्विंशशत्युत्तराणि सप्त शतानि च ( १३४२१७७२६ ) समस्तप्रस्तारस्य 'छव्वीसा सत्त सआ तह सत्तारह सहस्साइं । बाआलीस लक्ख तेरह कोडी समग्गाइं ॥' इति गाहूच्छन्दसा पूर्वोक्तपिण्डसख्या सिंहावलोकनशालिभिरनुसधातव्येति सर्वमनवद्यम् ॥

२१२. अथ प्रस्तारोत्तीर्णानि मुक्तकानि कानिचिद्वृत्तानि वर्णनियमसहितान्याह-तत्र प्रथमं त्रिभङ्गीछन्दः—

हे गजगमने हे शशिवदने। सकलपदेषु प्रथमं भण दश सुप्रियगणान् लघुद्वयात्मकगणान् भण । तथान्ते भगणः, ततो गुरुयुग्मं ततो हस्तः सगणः पतति । पुनरपि गुरुयुगलम् । अथ च लघुयुगलम् । ततो वलययुगलं गुरुयुगं कुरु । एवं यत्र चतुस्त्रिंशद्वर्णाः पदे पतन्ति । सुखान्यङ्गानि यस्य । सज्जनेषु सङ्गो यस्य तादृशः, सुन्दरकायो रमणीयशरीरः कविराजो नागः पिङ्गलस्तत्त्रिभङ्गीछन्द इति जल्पति । हे मुग्धे, पदे पदे एतावदेव कथय । अथ च द्विचत्वारिंशन्मात्रा युक्ताः कुरु । एतन्निरुक्तं गणयित्वा सर्वपदेषु द्विचत्वारिंशच्चतुर्गुणिताः वसवोऽष्टौ रसाः षट् एकं चेति वामगत्याष्टषष्ट्युत्तरशतं ( १६८ ) मात्राः पअपअ चतुःपदे पअला पतन्तीत्यर्थः । पदैश्चतुस्त्रिंशद्वर्णचतुष्केण षट्त्रिंशदधिकं शत ( १३६ ) वर्णा यत्र तत्प्रोक्तलक्षणं त्रिभङ्गी नामक छन्दो भवतीति समुदितोऽर्थः ॥

२१३. त्रिभङ्गीमुदाहरति—जहा ( यथा )—

प्रथमार्धेन हरं स्तौति—जगति हरः शिवो जयति। कीदृशः । वलयिता विषधराः सर्पा येन । भुजगकङ्कण इत्यर्थः । पुनः—तिलकितः सुन्दरश्चन्द्रो येन । चन्द्रशेखर इत्यर्थः । पुनः—मुनीनामानन्दः अत एव सुखकन्दः । पुनः—वृषभगमनः । पुनः—करे त्रिशूल यस्य स तथा । पुनः—डमरुकधरः । पुनः—नयनेन भालस्थतार्तीयलोचनेन दग्धोऽनङ्गो येन स तथा । पुनः—रिपोर्भङ्गो यस्मात्तादृशः । पुनः—गौरी पार्वती अर्धाङ्गे यस्य स तादृशः ॥ अथ चरमार्धेन हरिं स्तौति—जगति हरिर्विष्णुर्जयति च । कीदृशः । भुजयुगेन धृतो गोवर्धनो गिरिर्येन स तथा । पुनः दशमुखकंसविनाशनः । पीतवासाः पीताम्बरधर इत्यर्थः । पुनः—सागरवासः कृतक्षीरनीरधिशयन इत्यर्थः । येन बलिश्छलितो महीतले तादृशः । येन चासुराणा विलयः कृतः । यश्च मुनिजनानां मानसे हंस इवोपास्यमानः । अतएव शुभ्रभासः श्वेतकान्तिः सात्त्विकस्वभावत्वाद्वा तादृश इति ॥ उट्टवणिका यथा—॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ॥, ऽऽ।, ऽऽ, ॥ऽ, ऽ, ऽ, ।, ।, ऽ, ऽ, ३४×४=

१३६ ॥ ४२×४=१६८ ॥ मात्राप्रस्तारे एकस्य कथनाद्द्वितीय त्रिभङ्गीवृत्तं निवृत्तम् ॥

२१४. अथ शालूरछन्दः—

हे मुग्धे, यत्रैकः कर्णो गुरुद्वयात्मको गणः प्रथम (पतितः) द्विजाश्चतुर्लघुका गणा, सरसपदाः ध्रुवं निश्चित पदेषु पतिताः। ततः स्थापयित्वा करं गुर्वन्तं सगण हे मनोहरणि हे रजनीप्रभुवदने चन्द्रानने, हे कमलदलनयने, तत् वरमतिसुन्दरं शालूरनामक छन्दः सुतरा भणितम्। छान्दसिकैरित्यर्थः। तव पदे मात्रानियममाह—पउ पदे द्वात्रिंशत् (३२) मउ मात्राः हु खलु ठव स्थापय। वर्णाः प्रत्यक्षा एव। प्रकारान्तरेणोट्टवणिकामाह—पअलिअ इति। तह अ तथा च करतल सगणं प्रकटित इति प्राकट्यमवसान लक्षयति। तथा च सगणोऽन्ते। तन्मध्ये द्विजगणाश्चतुर्लघुकाः। तान्विशिनष्टि—मात्राभिवर्णैश्च सुतरा ललिता मनोरमाः। चउकल चतुष्कलाः छउ षट् किअ कृताः कविवरेण पिङ्गलेनेति। यत्र च दिणअरभु दिनकरभूः कर्णो द्विगुर्वात्मको गणः अअ आदौ पअ पतितः। एवमुक्तं भवति—चतुष्कलाः षड्गणा मध्ये, आदौ कर्णः, अन्ते सगणो यत्र तच्छालूरनामकं छन्द इति ॥ वाणीभूषणे तु—'कर्णद्विजवरगणतृ ( त्रि ? ) तयनगणमिह रचय ललितमतिकुसुमगणं नारीगणकलितकलितशरकुसुमसुवनककुसुमवरकृतरसनम्। नागाधिपतिगदितमिति च परिमुषितसकलकविनृकुलमतिरुचिरं शालूरममलमिह कलय कमलमुखि मुपितविबुधजनहृदयवरम् ॥'

२१५. शालूरमुदाहरति—जहा (यथा)—

कश्चिद्वसन्तलक्षणेन प्राप्तं सुरभिसमयमुपवर्णयति—यत्र फुल्ल कमलवनम्, पवनः समीरणो लघु मन्द वहति, भ्रमरकुल दिक्षु विदिक्षु भ्रमति। किंच वने झंकारः पतति। यतः कोकिलगणः पिकप्रकरो विरहिगणाना मुखे समुखेऽतिविरसं यथा स्यात्तथा रौति। कूजतीत्यर्थः। यत्र च आनन्दिता युवजनाः। उल्लसितं रभसान्मनो यस्मिन्नेवविधः। सरसनलिनीदलकृतशयनः कुसुमसमय आगतो वने शिशिरर्तुः फल्लहु प्रत्यावृत्तः। अत एव वसन्तसमयारम्भाद्दिवसा दीर्घा जाता इति ॥ यथा वा [णीभूषणे]—'गोवर्धनगिरिधरसुपञ्चितदितिसुतपरमहृदयमदशमनकरं व्यर्थीकृतजलधरगुरुवरत्र ( पं ? ) णभरगतभयनिजकुलदुरितहरम्। नन्दालयनिवसनकृतवनविलसनविहितविविधरसरभसपर सवीतवसनधरमरुणकरचरणमनुसर सरसिजनयनधरम् ॥' उट्टवणिका यथा—ऽऽ, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।।।, ।।ऽ, २९×४=११६ ॥ शालूरो निवृत्तः ॥

अथ सवैया छन्दः—

छद्दह मत्तह पढमहि दिज्जइ मत्त एअत्तिस पाए पाअ,
सोलहपञ्चदहहि जइ किज्जह अन्तर अन्तर ठाए ठाइ।
चोवीसा स मत्त भणिज्जइ पिङ्गल जम्पइ छन्दसु सार
अन्त अ लहूअ लहूअ दिज्जहु णाम सवैआ छन्द अपार ॥

भोः शिष्याः, षडधिका दश षोडश मात्राः प्रथम दिज्जह दीयन्ताम्। एतेन प्रथमा विरतिः षोडशमात्रासु कर्तव्येत्याशयः। पादे पादे प्रतिपादमेकत्रिंशन्मात्राः। तेन द्वितीया विरतिः पञ्चदशमात्रासु विधातव्येति भावः। अत एव षोडशपञ्चदशभ्या यदि विरतिः क्रियते अन्तरान्तरा स्थापयित्वा विरतिमित्युपरिष्टात्। समुदितमात्रासंख्यामाह—चतुर्विंशत्युत्तरं शतं मात्रा भण्यन्ते यत्र तत्पिङ्गलश्छन्दःसु सारं सारभूतमपार नानाकविसप्रदायसिद्धम्, अन्ते च लघुकं लघुक नियमेन दत्त्वा सवैआनामकं छन्दो जल्पतीति ॥ इदमेवोदाहरणम्। नानाकविबन्दिकृतं वा प्रोक्तलक्षणं सवार्यं (?) समुदाहर्तव्यमिति उट्टवणिका यथा—ऽ।।ऽ।।।।।।ऽ।। १६+ऽ।।ऽ।।ऽऽऽ। १५=३१×४=१२४ ॥ सवैआ निवृत्ता ॥

अथ प्राकृतसूत्रेण [ वर्णवृत्त ] प्रोक्तानां वृत्तानां नामान्यनुक्रामति—

एतानि पञ्चाधिकशतरूपाणि सर्वाणि स्थानकं कृत्वा ज्ञातव्यानीति। अन्यान्यपि प्रस्तारगत्या स्वबुद्धया सुधीभिरूह्यानि छन्दासीत्युपरम्यते ॥

अथ ग्रन्थान्तराद्दण्डकलक्षणानि सोदाहरणान्युच्यन्ते—'यदिहनयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः'।

यदि नगणयुगलानन्तर सप्त रेफाः सप्त सगणा यदि भवन्ति। तदा चण्डवृष्टिप्रपातो नाम दण्डको भवतीति। अतएव 'दण्डको नौरा—' इति पिङ्गलवृत्तौ भट्टहलायुधेनाभ्यधायि (?)।

यथा—

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुल गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया।
कमलनयन रक्ष रक्षेति गर्जत्त्रसन्मुग्धगोपाङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय वः ॥

उट्टवणिका यथा, ।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, २७×४=१०८ ॥ चण्डवृष्टिप्रपातो निवृत्तः ॥

अथार्णोदयः—'प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः'।

यदि नगणद्वयान्तरमेव प्रतिचरणं विवृद्धरेफाः क्रमात् समधिकरगणास्तदा अर्ण—अर्णव—व्याल—जीमूत—लीलाकर—उद्दाम—शङ्खादयो दण्डकाः स्युरिति । एतेन नगणयुगलवसुरेफेणार्णः । ततः परे क्रमाद्रगणवृद्ध्या ज्ञेयाः । आदिशब्दादन्येऽपि रगणवृद्ध्या स्वबुद्धया नामसमेता दण्डका विधेया इत्युपदिश्यते ॥

तत्रार्णो यथा—

जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण
त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव ।
गरुडगमन कृष्ण वैकुण्ठ गोविन्द विश्वंभरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे
बलिदमन नृसिंह शौरे भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम् ॥

उट्टवणिका यथा, ।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ३०×४=१२० ॥ अर्णो निवृत्तः । एवमन्येऽपि क्रमाद्रेफविवृद्धचरणं दण्डकाः समुन्नेया इति ॥

अथ प्रचितको दण्डकः—'प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः' ।

नगणद्वयादुत्तरैः सप्तभिर्यैर्यगणैर्धीरधीभिः सप्तविंशतिवर्णात्मकचरणः प्रचिताख्यो दण्डकः स्मृतः ॥

यथा—

मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्नत्रिलोकैकनाथ
प्रचितकपट सुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केसरीन्द्र ।
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार
प्रणतजनपरितापोग्रदावानलच्छेदमेघ प्रसीद प्रसीद प्रसीद ॥

उट्टवणिका यथा—।।।, ।।।, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ, २७×४=१०८ ॥ प्रचितको निवृत्तः ॥

अथाशोकपुष्पमञ्जरीदण्डकः—'यत्र दृश्यते गुरोः परो लघुः क्रमात्स उच्यते बुधैरशोकपुष्पमञ्जरीति' ।

यत्र गुरोः परः क्रमाल्लघुर्दृश्यते रगणजगणक्रमेण रगणान्तं नवगणा लघ्वन्ता चसुलोचनवर्णाश्चरणे दृश्यन्ते यत्रासावशोकपुष्पमञ्जरीति नाम दण्डको बुधैरुच्यते इति ॥

यथा—

मूर्ध्नि चारुचम्पकस्रजासलीलवेष्टनं लसल्लवङ्गचारुचन्द्रिका कचेषु
कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेऽतिकान्तकेसरोपक्लृप्तदाम ।

फुल्लनागकेसरादिपुष्परेणुभूषणं तनौ विचित्रमित्युपात्तवेष एष
केशवः सदा पुनातु नः सुपुष्पभूषितः स मूर्तिमानिवागतो मधुर्विहर्तुमत्र ॥
उट्टवणिका यथा—ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।ऽ।ऽ, ऽ।ऽ, ।ऽ।, ।ऽ।, २८×४=११२ ॥ अशोकपुष्पमञ्जरी निवृत्ता ॥

अथ कुसुमस्तवको दण्डकः—'सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम्' ।

यत्र खलु निश्चयेन सकलोपि सगण एव भवेत् । सगणनवकं भवेदतश्च सप्तविंशतिवर्णात्मकपदं तं दण्डकं बुधाः कुसुमस्तवकं प्रवदन्ति ॥

यथा—
विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशां कुचकुड्मलगो
भ्रमरप्रकरेण यथाऽऽहतमूर्तिरशोकलताविलसत्कुसुमस्तवकः ।
स नवीनतमालदलप्रतिमच्छविबिभ्रदतीव विलोचनहारिवपु—
श्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः ॥

उट्टवणिका यथा, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, ।।ऽ, २७×४=१०८ ॥ कुसुमस्तवको निवृत्तः ॥

मत्तमातङ्गलीलाकरः—'यत्र रेफः पर स्वेच्छया गुम्फितः सः स्मृतो दण्डको मत्तमातङ्गलीलाकारः' ।

यत्र रेफो रगणः स्वेच्छया नव दशैकादश वा परं गुम्फितः स दण्डको मत्तमातङ्गलीलाकर इति नाम्ना स्मृतः ॥

यथा—
हेमगौरे वसानांऽशुके शक्रनोलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते
तारहाराशुवद्धोनभश्चित्रमाल्याञ्चितो भव्यभूषोज्ज्वलाङ्गः सम सीरिणा ।
अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासोर्मिकौतूहलैः
कसरङ्गाद्रिगः पातु वश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्गलीलाकरः ॥

उट्टवणिका यथा—ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, । मत्तमातङ्गलीलाकरो निवृत्ता ॥

अथानङ्गशेखरः—'लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको भवत्यनङ्गशेखरः' ।

यत्र प्रथमं लघुरनन्तरं गुरुरेवं क्रमेणाशोकपुष्पमञ्जरीविपर्ययेण स्वेच्छया जगणरगणक्रमेण च जगणान्तं नव गणा लभ्यन्ता वसुनयनवर्णाश्चरणे यदा निवेश्यन्ते, स्वेच्छयोक्तक्रमेण दशैकादश वा प्रतिचरणं नियमेन जगणादिजगणान्तं लभ्यमान गणाः स्थाप्यन्ते यदैव दण्डकोऽनङ्गशेखराख्यो भवति ॥

यथा—

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमाणगौरदीधिती
रतिस्वहस्तनिर्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु ।
इति प्रमोदकारिणीं प्रियाविनोदलक्षणा गिर समुद्गिरन्मुरारिरद्भुता
प्रदोषकालसंगमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥

उद्ववणिका यथा— ।S।, S।S, ।S।, S।S, ।S।, SS।, S।S, ।S।, S।S, २८× ४=११२ ॥ अत्र चरणत्रये पादान्तगुरोर्विकल्पेन लघुत्व ज्ञेयमित्यनङ्गशेखरो निवृत्तः । इति दण्डकाः ॥

अथार्धसमवृत्तान्युदाह्रियन्ते—तत्र चतुष्पदी पद्यम् । तद्द्विविधम् । वृत्तजातिभेदेन । तदप्यक्षरसख्यातं वृत्तम् । मात्रासख्याता जातिरिति द्विविधम् । तद्वृत्तं पुनस्त्रिविधम् । समार्धसमविषमभेदेनेति । तत्र समं समचतुश्चरणम् । अर्धसम च यस्य प्रथम तृतीय च पदं समानमथ चतुर्थं द्वितीयं च तुल्य भवति । भिन्नचिह्नचतुश्चरण विषममिति । तदुक्त छन्दोमञ्जर्याम्—

'पद्य चतुष्पदी तच्च वृत्त जातिरिति द्विधा ।
वृत्तमक्षरसख्यात जातिर्मात्राकृता भवेत् ॥
सममर्धसम वृत्त विषम च्चेति तत्त्रिधा ।
समं समचतुष्पाद भवत्यर्धसम पुनः ॥
आदिस्तृतीयवद्यस्य पादस्तुर्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विपम परिकीर्तिततम् ॥'

इति । तत्र मात्रावृत्तक्रमेण सममुक्त्वार्धसममुच्यते । तत्र प्रथमं पुष्पिताग्राछन्दः—

द्विजवरकरज्जुकर्णपूर्णौ प्रथमतृतीयपदौ यदा भवेताम् ।
द्विजपदगुरुरज्जुकर्णयुक्तौ यदि चरणावपरौ च पुष्पिताग्रा ॥

इदमप्युदाहरणम् । छन्दोमञ्जर्यां तु प्रकारान्तरेण लक्षणमुक्तम् ॥

'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' ।

अयुजि विषमे प्रथमे तृतीये चरणे नयुगलरेफतो नगणयुगलरगणतः परो यकारो यगणो भवति । युजि समे तु द्वितीये चतुर्थे च चरणे नजौ नगणजगणावथ च जरगाः जगणरगणगुरवश्च यत्र भवन्ति तत्पुष्पिताग्रानामक छन्दः ॥

यथा—

करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः ।
सितरुचिरविलासपुष्पिताग्रा व्रजयुवतिर्व्रततिर्हरेर्मुदेऽभूत् ॥

उट्टवणिका यथा—वि० ||||, ||S, |S|, SS, स० ||||, S||, S, |S|, SS.

प्रसरति पुरतः सरोजमाला तदनु मदान्धमधुव्रतस्य पङ्क्तिः ।
तदनु धृतशरासनो मनोभूस्तव हरिणाक्षि विलोकनं तु पश्चात् ॥

प्रकारान्तरेणोट्टवणिका यथा—वि० |||, |||, S|S, |SS, स० |||, |S|, |S|, |S|, S, इति पुष्पिताग्रा निवृत्ता ॥

अथोपचित्रं छन्दः—'विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्' ।

यत्र विषमे प्रथमे तृतीये च चरणे एवंविधे दलेऽर्धे यदि सौ सगणावथ च सलगाः सगणलघुगुरवो भवन्ति, किं च युजि समे द्वितीये चतुर्थे च चरणे यदि भौ भगणावथ च भात् भगणात् गुरुकौ भवतस्तदोपचित्राख्यमर्धसम वृत्तमिति। द्विरावृत्त्या श्लोकः पूरयितव्यः ॥

यथा—

मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् ।
गगनं चपलामिलितं यथा शारदनीरधरैरुपचित्रम् ॥

उट्टवणिका यथा—वि० ||S, ||S, ||S, |, S, स० S||, S||, S||, S, S, उपचित्रं निवृत्तम् ॥

अथ वेगवतीछन्दः—'विषमे प्रथमाक्षरहीनं दोधकवृत्तमेव वेगवती स्यात्' ।

विषमे प्रथमे तृतीये च चरणे प्रथमाक्षरहीनं दोधकवृत्तमेव वेगवती स्यात् । समे तु दोधकमेवेति । अतः प्रथमे तृतीये सगणत्रयानन्तरं गुरुः, चतुर्थे द्वितीये च भगणत्रयानन्तरं गुरुद्वयमिति ॥

यथा—

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।
रभसान्न गुरुं गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥

उट्टवणिका यथा—वि० ||S, ||S, ||S, S, स० S||, S||, S||, S, S, वेगवती निवृत्ता ॥

अथ हरिणप्लुता छन्दः—'अयुजि प्रथमेन विवर्जितो द्रुतविलम्बितो हरिणप्लुता'।

अयुजि प्रथमे तृतीये च चरणे द्रुतविलम्बिततः प्रथमेन वर्णेन विवर्जिते सति युजि तु द्रुतविलम्बितछन्दसेव तदा हरिणप्लुता छन्दः । एतदुक्तं भवति—प्रथमे तृतीये च चरणे सगणत्रयानन्तरं लगौ, द्वितीये चतुर्थे च चरणे नगणानन्तरं भगणद्वयमथ च रगणमिति ॥

यथा—

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥

उट्टवणिका यथा—वि० ||S, ||S, ||S, |, S, स० |||, S||, S||, S|S,
हरिणप्लुता निवृत्ता ॥

अथापरवक्त्र छन्दः—'अयुजि ननरलाः गुरुः समे यदपरवक्त्रमिदं नजौ जरौ' ।

अयुजि विषमे प्रथमे तृतीये च चरणे ननरला नगणद्वयरगणलघवः अथ च गुरुः समे द्वितीये चतुर्थे च चरणे नजौ नगणजगणावथ च जरौ जगणरगणौ यत्र भवतस्तदिदमपरवक्त्र नाम वृत्तम् ॥

यथा—

स्फुटमधुरवेणुगीतिभिस्तमपरवक्त्रमिवैत्य माधवम् ।
मृगयुवतिगणैः सम स्थिता व्रजवनिता धृतचित्तविभ्रमा ॥

उट्टवणिका यथा—वि०, |||, |||, S|S, |, S, स० |||, |S|, |S|, S|S,
यथा वा हर्षचरिते—

तरलयसि दृशा किमुत्सुकामविरतिवामविलासलालसे ।
अन्ततर कलहसि वापिकाः पुनरपि यास्यसि पङ्कजालयम् ।

अपरवक्त्र निवृत्तम् ॥

अथ सुन्दरी छन्दः—'अयुजोर्यदि सौ लगौ पुनः समयोः स्भौ रलगाश्च सुन्दरी' ।

यत्र अयुजोर्विषमयोः प्रथमतृतीययोश्चरणयोर्यदि सौ सगणद्वयमथ च लगौ लघुगुरू भवतः पुनरपि तावेव, समयोर्द्वितीयचतुर्थयोश्चरणयोः स्भौ सगणभगणावथ च रलगा रगणलघुगुरवो भवन्ति, तत्सुन्दरीछन्दः ॥ द्विरावृत्त्याश्लोकः पूरणीयः ॥

यथा—

यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ।
अपि कसहरस्य दुर्वच वचन तद्विदधीत विस्मयम् ॥

उट्टवणिका यथा—वि० ||S, ||S, |, S, |, S, स० ||S, S||, S||, |, S,
यथा वा—'अथ तस्य विवाहकौतुकं ललित बिभ्रत एव पार्थिवः' इत्यादि रघुवशे ।
सुन्दरी निवृत्ता ॥

एवमुक्तपरिपाट्यार्धसमवृत्तान्येकाक्षरादिषड्विंशत्यक्षरपर्यन्तप्रस्तारेषु द्वाभ्यां वृत्ताभ्या स्वबुद्धया नामानि धृत्वा सुधीभिरूह्यानि । ग्रन्थविस्तरभीत्या प्रसिद्धान्येव कानिचिद्वृत्तान्यत्रोदाहृतानीति शिवम् । इत्यर्धसमवृत्तानि ॥

अथ विषमवृत्तानि—

तत्र विषमम्—

'यस्य पादचतुष्केऽपिलक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥'

इति लक्षणलक्षितम् ।

तत्र प्रथममुद्गताछन्दः—

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे ।
यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥

भोः शिष्याः, यत्र प्रथमे चरणे सजौ सगणजगणावथ च सलौ सगणलघू भवतः, अनन्तरे द्वितीये नगणसगणजगणगुरुकाणि भवन्ति । अथ तृतीये चरणे यदि भगणनगणभगणगुरवः स्युः । अथो चतुर्थे सजसा सगणजगणसगणाः । अथ च जगौ जगणगुरू भवतस्तदोद्गतानामक छन्दः ॥

यथा—

विललास गोपरमणीषु तरणितनया प्रभोद्गता ।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ॥

उट्टवणिका यथा—१ ।।ऽ, ।ऽ।, ।।ऽ।, २ ।।।, ।।ऽ, ।ऽ।, ऽ, ३ ऽ।।, ।।।, ऽ।।, ऽ, ४ ।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ

अथ च—

प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे ।
यद्यथ भजनलगाः स्युरथो सजसा जगौ प्रभवतीयमुद्गता ॥

यथा प्रथमे चरणे सगणजगणसगणलघवः द्वितीये नसजगुरुकाणि । अथ तृतीये चरणे यदि भनजलगा भगणनगणजगणलघुगुरवः स्युः । चतुर्थे सजसाः सगणजगणसगणाः । अथ च जगौ जगणगुरू यत्र भवतस्तदा तृतीयचरणमात्राजात भेदा भारविमाघयोरुपलभ्यमानत्वादिय प्रकारान्तरेणोद्गता प्रभवतीति ॥

ततश्च किराते यथा—

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।
क्लांतिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनंजयः ॥

उट्टवणिका यथा—१ ।।ऽ, ।ऽ।, ।ऽ, ।, २, ।।।, ।।ऽ, ।ऽ।, ऽ, ३ ऽ।।, ।।।, ।ऽ।, ।, ऽ, ४ ।।ऽ, ।ऽ।, ।।ऽ, ।ऽ, ।, ऽ,

यथा वा माघे—

तव धर्मराज इति नाम सदसि यदपष्ठु पठ्यते ।
भौमदिनमभिदधत्यथ वा भृशमप्रशस्तमपि मङ्गलं-जनाः ॥

उट्टवणिका समानैव । उद्गता निवृत्ता ॥

अथ सौरभकच्छन्दः—

'त्रयमुद्गता सदृशमेव पदमिह तृतीयमन्यथा।
जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम्' ॥

भोः शिष्याः, यत्र त्रय प्रथमद्वितीयचतुर्थमिति पदत्रयमुद्गतासदृशमेव। इह सौरभके तृतीयपादमन्यथा। उद्गतापादाद्भिन्नमित्यर्थः। अन्यथात्वमेवाह—जायत इति। तृतीयपदं रनभगैः रगणनगणभगणगुरुभिर्ग्रथित यत्रैतदीदृश सौरभकनामक वृत्त भवतीति च्छान्दसीयाः कथयन्तीति॥

यथा—

परिभूतफुल्लशतपत्रवनविसृतगन्धविभ्रमा।
कस्य हृन्न हरतीह हरे पद्मसौरभकला तवाद्भुता॥

उद्ववणिका यथा—१ ||ऽ, |ऽ|, ||ऽ, |, २ |||, ||ऽ, |ऽ|, ऽ, ४ ऽ|ऽ, |||, ऽ||, ऽ|, ४ ऽ|ऽ, |||, ऽ|ऽ, |, ऽ, सौरभक निवृत्तम्॥

अथ ललितं छन्दः—

'नयुगं सकारयुगलं च भवति चरणे तृतीयके।
तदुदीरितमुरुमतिभिर्ललित यदि शेषमस्य सकलं यथोद्गता'

भोः शिष्याः, यत्र तृतीयके चरणे नयुग नगणद्वय सकारयुगल सगणयुग्म च भवति तदुरुमतिभिर्ललितमिति नामकमुदीरितमिति। अस्य ललितस्य यदि शेषं सकलं प्रथमद्वितीयतुर्यपद यथोद्गतातुल्यमित्यर्थः॥

यथा—

व्रजसुन्दरीसमुदयेन कलितमनसा स पीयते।
हिमकरगलितमिवामृतक ललित मुरारिमुखचन्द्रविच्युतम्॥

उद्ववणिका यथा—१ ||ऽ, |ऽ|, ||ऽ, |, २ |||, ||ऽ, |ऽ|, ऽ, ३ |||, |||, ||ऽ, ||ऽ, ४ ||ऽ, |ऽ|, ||ऽ, |ऽ|, ऽ, ललितं निवृत्तम्॥

भवत्यर्धसम वक्त्रं विषम च कदाचन।
तयोर्द्वयोरुपान्तेषु छन्दस्तदधुनोच्यते॥

अथ वक्त्र छन्दः—'वक्त्र युग्भ्यां मगौ स्यातामब्धेर्याऽनुष्टुभि ख्यातम्'

भोः शिष्याः, युग्भ्यां दलाभ्या पदाभ्या मगौ मगणगुरू स्याताम्। अथ च—अब्धेश्चतुर्थाद् वर्णात् परतो यो यगणोऽनुष्टुभ्यष्टाक्षरप्रस्तारे यत्र यत्र 'शेषेष्वनियमो मतः' इति वचनाच्चाष्टमो गुरुरेव यत्र तद्वक्त्रमिति वृत्त ख्यातमिति॥

यथा—

वक्त्राम्भोज सदा स्मेर चक्षुर्नीलोत्पलं फुल्लम्।
वल्लवीनां मुरारातेश्चेतोभृङ्ग जहारोच्चैः॥

उद्दवणिका यथा—१ SSS, S, ISS, S, २ SS, S, SIS, S, S, ३ SIS, S, ISS, S, ४ SSS, S, ISS, S,

अथ च—'युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम्'

युजोर्द्वितीयचतुर्थयोश्चरणयोर्दलाभिप्रायेण चतुर्थतो वर्णात् जेन जगणेन पथ्यावक्त्रं ( वक्त्रमेव ) रूपं प्रकीर्तितम् । शेष समानम् ।

यथा—

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।
आसीद्गोपमृगाक्षीणा पथ्यावक्त्रमधुस्तुतिः ॥

उद्दवणिका यथा—१ SIS, II, SSS, २ SSI, I, ISI, S, ३ SSS, II, SSS, ४ SSS, I, ISI, S,

अपि च—

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठं तु पादानां शेषेष्वनियमो मतः ॥

इति । सर्वत्र वक्त्रप्रकरणे निगदितैव । लक्षणमुपलक्षितं विचक्षणैश्छान्दसिकैरिति ॥

यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

किं च—

प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् ।
लोकेऽनुष्टुबिति ख्यातिस्तस्याष्टाक्षरता कृता ॥

तथा नानागणभेदेन विषमवृत्तमेव सकलपुराणादिष्वष्टाक्षरचरणं वक्त्रसंज्ञामेव लभत इति विषमवृत्तानि दिङ्मात्रतः समुदाहृतानि । शेषाणि भट्टहलायुधनिर्मितपिङ्गलवृत्तौ रविकरशंभुपशुपतिविरचितवृत्तकदम्बकग्रन्थे चावदातमतिभिरूह्यानीत्यलमतिविस्तरेण ॥

अथ गद्यानि—

तत्र—

गद्यं पद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः ।
प्रागुक्तलक्षणं पद्यं गद्यं संप्रति गद्यते ॥
अपादः पदसंतानो गद्यं तच्च त्रिधा मतम् ।
चूर्णिकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ॥

ततः—

अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः ।
तद्धि वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥

यथा—

स हि त्रयाणामेव जगतां पतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गीमवनिमवलोक्य करुणार्द्रहृदयस्तस्या भारमवतारयितुं रामकृष्णस्वरूपेण यदुवंशेऽवततार । यः प्रसङ्गेनापि स्मृतोऽभ्यर्चितो वा गृहीतनामा पुंसः संसारपारमवलोकयति ॥

चूर्णकं निवृत्तम् ॥

अथोत्कलिकाप्रायम्—

उत्कलिकाप्रायं कल्लोलप्रायमुत्प्रभासमानमित्यर्थः ॥

यथा—

प्रणिपातप्रवणप्रधानाशेषसुरासुर वृन्दसौन्दर्यप्रकटकिरीटकोटिनिविष्टस्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्रविक्रमोद्दामवामपादाङ्गुष्ठनखरशिखरखण्डितब्रह्माण्डविवरनिःसरत्त्वरदमृतकरप्रकरभासुरसुरवाहिनीप्रवाहपवित्रीकृतविष्टपत्रय कैटभारे क्रूरतरसंसारापारसागर नानाप्रकारावर्तविवर्तमानविग्रहं मामनुग्रहाण ॥

यथा वा—

व्यपगतघनपटलममलजलनिधिसदृशमम्बरतलं विलोक्यते । अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमस्त्यायते ॥

उत्कलिकाप्रायं निवृत्तम् ॥

'वृत्तैकदेशसंबद्धं वृत्तगन्धि पुनः स्मृतम्'

यथा—'पातालतालुतलवासिषु दानवेषु' इत्यादि । 'हर इव जितमन्मथो गुह इवाप्रतिहतशक्तिः' इत्यादि वा ।

यथा वा—

जय जय जय जनार्दन सुकृतिजनमनस्तडागविकस्वरच्चरणपद्म पद्मनयन पद्मापद्मिनीविनोदराजहंस भास्वरयशःपटलपूरितभवनकुहर कमलासनादिवृन्दारकवन्दनीयपादारविन्दद्वन्द्व निर्मुक्तयोगीन्द्रहृदयमन्दिराविष्कृतनिरञ्जनज्योतिःस्वरूप नीरूप विश्वरूप अनाथनाथ जगन्नाथ मामनवधिभवदुःखव्याकुलं रक्ष रक्ष ॥

वृत्तगन्धि गद्यं निवृत्तम् ॥

इति गद्यानि ॥

इत्यादि गद्यकाव्येषु मया किंचित्प्रदर्शितम् ।
विशेषस्तत्र तत्रापि नोक्तो विस्तरशङ्कया ॥

मन्दः कथं ज्ञास्यसि सत्पदार्थमित्याकलय्याशुभया प्रदीतम् ।
छन्दःप्रदीप कवयो विलोक्य छन्दः समस्त स्वयमेव वित्त ॥

अब्दे भास्करवाजिपाण्डवरसक्ष्मा ( १६५७ ) मण्डलोद्भासिते
भाद्रे मासि सिते दले हरिदिने वारे तमिस्रापतेः ।
श्रीमत्पिङ्गलनागनिर्मितवरग्रन्थप्रदीपं मुदे
लोकानां निखिलार्थसाधकमिमं लक्ष्मीपतिर्निममे ॥

विशिष्टस्नेहभरितं सत्पात्रपरिकल्पितम् ।
स्फुरद्वृत्तदशं छन्दःप्रदीपं पश्यत स्फुटम् ॥
छन्दःप्रदीपकः सोऽयमखिलार्थप्रकाशकः ।
लक्ष्मीनाथेन रचितस्तिष्ठत्वाचन्द्रतारकम् ॥

इत्यालंकारिकचक्रचूडामणिश्रीमद्रामभट्टात्मजश्रीलक्ष्मीनाथभट्टविरचिते पिङ्गल-
प्रदीपे वर्णवृत्ताख्यो द्वितीयः परिच्छेदः समाप्तः ।

---

# परिशिष्ट (३)

## वंशीधरकृत 'पिङ्गलप्रकाश' टीका

## प्रथमः परिच्छेदः

### मात्रावृत्तम्

१. ग्रन्थकृद्ग्रन्थारम्भे स्वाभीष्टसिद्धये छन्दःशास्त्रप्रवर्त्तकपिंगलनागानुस्मरणरूपमगलमाचरति। जो विविह मत्तेति·····यो विवि····· ···त्रमात्रापदस्य मात्राप्रस्तारपरत्वाद्विविधमात्राप्रस्तारैरित्यर्थः। विभिमलमइहेलं—विविमलमतिहेलं, वेः पक्षिणो गरुड़स्य विमल········परमतिः बुद्धिस्तया हेलाऽवधारणा वचना यस्या क्रियायां तद्यथा स्यात् तथा स्वबुद्धया गरुड़स्य वचना कृत्वेत्यर्थः। साअरपारपत्तो—सागर···तरडो–प्रथमो भाषातरंडः प्रथम आद्यः भाषा अवहट्टभाषा यथा भाषया अय ग्रन्थो रचितः सा अवहट्टभाषा तस्या इत्यर्थःत प···प्प पारं प्राप्नोति तथा पिंगलप्रणीतं छन्दःशास्त्रं प्राप्यावहट्टभाषारचितैः तद्ग्रन्थपारं प्राप्नोतीति भावः, सो पिंगलो णाओ जअइ—उत्कर्षेण वर्त्तते। अत्रेयमाख्यायिकानुसन्धेया—यथा किल ब्राह्मणवेषधारिणा पिंगलं नागोऽयमिति ज्ञात्वा गरुड़स्तं व्यापादयितु वर्णमात्राप्रस्ताररूपा पूर्वा एका विद्या मया ज्ञायते ता गृह्णात्विति गरुड प्रति उक्त्वा तेन च कथय विद्यामित्युक्तः प्रस्तार भूमौ विरचयन् गरुडं वचितवानिति : १ :

२ प्रस्तारस्य गुरुलघुज्ञानाधीनत्वातल्लक्षणमाह, दीहविति। दीहो दीर्घः आ, ई, ऊ, ए, ऐ, ओ, औ एते दीर्घाः। सजुत्तपरो—संयुक्तपरः. सयुक्तं परस्परमिलित········बिन्दुजुओ—विन्दुः अनुस्वारविसर्गौ, अं अः इत्येतौ, ताभ्यां युतः, यत्तु प्राकृते विसर्गाभावात् अत्र विन्दुपदेन अनुस्वार एवेति तच्च न हीदं प्राकृतमात्रविषय······· पाडिओ च चरणते—पातितश्च चरणाते, पादान्तस्थितो लघुरपि विवक्षया गुरुर्ज्ञेय इत्यर्थः। अतएवोक्तं पादान्तस्य विकल्पेनेति। एवभूतो वर्णो गुरुः······· ज्ञेय इति शेषः। स च गुरुः वंक—वक्रः प्रस्तारादिषु पूर्वप्रश्लिष्टाकारप्रश्लेषवत् अनृजुस्वरूपो लेखनीय इत्यर्थः। दुमत्तो—द्विमात्रः ·······अण्णो—अन्यः आकारादिसंयुक्तपरानुस्वारविसर्गसहिताद्तरभिन्न इत्यर्थः,

लहु होइ—लघुर्भवति, लघुसंज्ञको ज्ञेयः, सुद्ध—शुद्धः प्रस·········म इत्यर्थः। एक्कअलो—एककलः एका कलामात्रा यस्मिन् सः तादृशः, लघोरेका मात्रा॥

३. अथैदुदाहरति माई इति। माई—हे मातः यः ······वृद्धः अतएव जीर्णः शीर्णेन्द्रियागः, हेओ—हेयः त्यागयोग्यः एवमपि देवः क्रीड़ाप्रसक्तः, तं शम्भुं कामंती—कामयमाना गौरी गहिलत्त······शम्भौ पार्वत्या व्रियमाणे विजयादीनां सखीनां परस्परसलापवाक्यमेतत्। अत्र दीर्घादीनि स्पष्टान्येव। कुणइ इतीकारश्च चरणान्ते पातिते···

४. अथ संयुक्तपरस्य वर्णस्य क्वचिद्‌गुरुत्वापवादमाह, कत्थवीति। कत्थवि—कुत्रापि। रकारहकारसयोगादन्यत्रापीत्यर्थः सयुक्तपरो वर्णो लघुर्भवति दर्शनेन लक्ष्यानुरोधेन, जहा—यथा उदाह्रियते, परिह्लसति चित्तधैर्यं तरुणीकटाक्षनिर्वृत्तम्—अत्रल्ह इति संयुक्ताक्षरे परेऽपि रि इति इकारस्य लघुत्वमेव, अन्यथा मात्राधिक्य-प्रसंगः। गाथा छन्दः।

५. अथ विन्दुयुक्तस्य वर्णस्य एकारोकारयोः संयुक्तरकारहकारपूर्ववर्तिनश्च गुरुत्वापवादमाह, इहिआरा इति। क्वचित् विकल्पः, अशेषमपि लघु भवति।

६. यथा उदाह्रियत इत्यर्थः, माणिणीति। हे मानिनि मानेन किं फल जे—यतः कारणात्, कंत—कान्तः, एओ—एवमेव, मानं विनैवेत्यर्थः, चरण पडु· चरणयोः पतितः। एनमेवार्थं द्रढयति सहज इति। भुजंगमः सर्पः, सहजे—सहजतः स्वभावतः, मणिमन्त्राभ्यां विनैवेत्यर्थः, यदि नमति तदा मणिमन्त्राभ्यां किं कार्यं न किमपीत्यर्थः। अत्र माणहिं काइं इति इहिकारौ विन्दुयुतावपि लघू भवतः, एओ अत्र शुद्धौ एकारौकारौ, जे अत्र मिलित एकारो लघुर्भवति। दोहा छन्दः।

७. रहव्यजनसयोगस्य यथा, चेउ सहज इति। हे खुल्लणा—अधमचेतः, तुहु—सहज चचला—स्वभावचचलं, सुदरिह्रदहि च······पअ उण घल्लसि—पदमपि न बहिर्ददासि, किन्तु पुनस्तत्रैव उल्हसत—उल्लासं विनोदं कुर्वत् कीलसि—क्रीडसि। अत्र सुन्दरि इति इकारः ह्रद इति रकारहकारव्यजनसयोगे परे लघुर्बोध्यः, अन्यथा दोहासमचरणे एकादशमात्राणामुक्तत्वात् द्वादशमात्रापत्या छन्दोभगः स्यात्। उल्ह इत्युकारो पि ल्ह इति लकारहकारसंयोगे परे पि लघुर्बोध्यः, अन्यथात्रापि पूर्ववदेव छन्दोभंगापत्तिः।

८. अथ दीर्घो गुरुर्भवतीति पूर्वोक्तापवादं निपातान्तरं चाह, जह दीहो वीति। यदि दीर्घोऽपि वर्णः लघुजिह्वया पठ्यते, भवति तदा सोपि लघुः। वर्णानपि त्वरितपठितान् द्वित्रानपि एकं जानीहि।

९. जहा—यथा, एतदुदाहरतीत्यर्थः। अरेरे इति। अरेरे—हे हे कण्ह—कृष्ण, डगमग—इतश्चेतः पार्श्वद्वये चलतीत्यर्थः, छोडि—स्वल्पां, णाव—नावं, बाहहि—

चालय, कुगतिं—जलम(ग)तिं जलमरणजन्य नरक, ण देहि—मा प्रयच्छ। तइ एहि णइ सतार देइ—त्वमस्या नद्याः पारगमनं दत्वा, यद् आलिंगनचुम्बनादि वाञ्छसि तद् गृहाण। अत्र प्रथमचरणे रेरे इत्यक्षरद्वय त्वरापठितम् एक दीर्घ बोध्यम्, अन्यथा दोहाप्रथमचरणे त्रयोदशमात्रोक्त्या द्वितीयरेकाराय मात्राद्वयाधिक्यात् छन्दोभंगापत्तिः एवं द्वितीयचरणे डगमेत्यक्षरत्रय एक ह्रस्वरूप, देहीत्यक्षरद्वयमेक दीर्घरूप बोध्यम्, अन्यथा दोहाद्वितीयचरणे एकादशमात्राणामुक्तत्वात् (डग) मेति मात्राद्वयाधिक्यात् देहीत्येकमात्राधिक्याच्च छन्दोभगः स्यात्। तृतीयचरणे च एहीति केवलएकारः, देइ इति दकारयुक्तश्च, द्वावपि जिह्वालघुपठितौ लघू बोध्यौ, अन्यथा दोहातृतीयचरणे त्रयोदशमात्रोक्त्या मात्राद्वयाधिक्यात् छन्दोभगः प्रसज्येत। जिह्वया लघुपठनं गुरूपदेशाद्बोध्यमित्यस्ततातचरणोपदेशः सुधीभिर्विभावनीयः।

१०. अथ छन्दोग्रन्थस्योपादेयता दर्शयति, जेम णेति। जेम—यथा कणअतुला—कनकस्य तुला परिमाणनिर्णायक यन्त्रं काण्टा इति लोके; तुलिअं—तुलितं निर्णेयपरिमाणं स्वस्मिन्प्रक्षिप्त सुवर्णं तिलस्य अद्ध अद्धेण—अर्द्धार्द्धेन चतुर्थांशेनापीति यावत्, रत्तिकामाषकादिमापकान्न्यूनाधिकमिति शेषः, ण सहइ—न सहते न निर्णीतपरिमाणं करोति। तेम—तथा सवणतुला—श्रवणरूपा तुलैव तुला—काव्य शुद्ध्यशुद्धिज्ञापकं यन्त्रं, छदभगेण—छन्दसा यथोक्तं छन्दः तस्य गुरुलघूनां भगेन न्यूनाधिकभावेनेत्यर्थः। अवछद—अपच्छन्दस्कं लक्षणहीन काव्य न सहते न प्रमाणयति। अयमर्थः तुलाया सूत्रबद्ध पात्रद्वय भवति, तत्रैकपात्रे परिमाणसाधन रत्तिकामाषकादिद्रव्यं प्रक्षिप्य द्वितीयपात्रे प्रक्षिप्त निर्णेयपरिमाणं सुवर्णादिद्रव्यं यदि तिलचतुर्थांशेनापि परिमाणसाधनरत्तिकामाषकादिद्रव्यान्न्यूनाधिक भवति तदा तत्र परिमाणशुद्धिर्यथा न भवति, तथा लक्षणोक्तगुरुलघुहीनाधिक काव्यं श्रवणविषयीभूतं शुद्ध न प्रतिभातीति काव्यशुद्ध्यशुद्धिज्ञानार्थं छन्दःशास्त्रमुपादेयमिति भावः।

११ अथ छन्दःशास्त्रविदा पुरो लक्षणहीनकाव्यपठन वारयन् पुनरपि छन्दःशास्त्रोपादेयता दर्शयति अबुह इति। अबुधः—काव्यलक्षणानभिज्ञः, बुहाण मज्झे—बुधाना काव्यलक्षणाभिज्ञाना मध्ये, लक्ख (क्ख) णविहूणं—लक्षणविहीन, कव्व—काव्य, पढइ—पठति, सः भुअ अग्ग लग्ग खग्गहिं—भुजाग्रलग्नखड्गेन, खुलिअ—स्खलित, ग्रीवातः पातित, सीस—शीर्ष मस्तक, ण जाणेइ—न जानाति, स स्वहस्तधृतखड्गेन स्वशिरश्छेदक इव विक्षिप्तचित्त इति लोके व्यवह्रियते। अतोऽधीतच्छन्दःशास्त्रो लक्षणलक्षितं काव्यं पठन् पण्डिताख्यां लभते इति छन्दःशास्त्रोपादेयता दर्शितेति भावः।

१२. अथ वक्ष्यमाणमात्राच्छन्दःसूपयुक्तान् गणान् व्यवहाराय संज्ञाभिरुद्दिशति टट्ठेति । ट ठ ड ढा णं—ट ठ ड ढ णैः, छ प च त-द्रा—छ प च त दैः एतैः पंच अक्खरओ—पचाक्षरैः, जहसख—यथासख्यं, छप्पंच चउ त्ति दु कलासु-षट्पचचतुस्त्रिद्विकलेषु गणभेआ—गणेषु मध्ये भेदा नामानि होंति—भवन्ति । अयमर्थः । षट्कलगणस्य टगणछगणेति नामद्वय, पचकलगणस्य ठगणपगणेति नामद्वयं, चतुःकलगणस्य डगण-चगणेति नामद्वयं, त्रिकलगणस्य ढगण-तगणेति नामद्वयं द्विकलगणस्य णगणदगणेति नामद्वयं भवतीति बोध्यमिति ।

१३. अथ ट-गणादीना भेदसंख्यामाह, टगणो तेरह इति । ट-गणः षट्कलः त्रयोदशभेदः, ठगणस्स—ठ-गणस्य पंचकलस्येति यावत् अट्ठाइ······· स्स—ड-गणस्य चतुःकलस्येति यावत् पञ्च भेआ—पंच भेदा भवंति, ढ गणे त्रिकले तिन्न—त्रयो भेदा भवंतीत्यनुकर्षः, ण-गणस्य द्विकलस्य········ ।

१४. टादिगणत्रयोदशादिभेदा उक्तास्तेषां रचना प्रस्तारस्तत्प्रकारमाह । पढम गुरु हेट्ठ ठाणे—प्रथमगुर्वधःस्थाने, ट-गणभेदे यः प्रथमगुरुः स·······ठवहु लघु परिस्थापयत तदग्रे चेति शेषः, तस्य लघोरग्रे चेत्यर्थः । सरिसा सरिसा पत्ति सदृशी सदृशी पंक्तिः, कर्त्तव्येति शेषः । यस्य·······ग्रे येन क्रमेण यावद्गुरु लघु भवेत्तेनैव क्रमेण तावद् गुरु लघु गुर्वधःस्थलघोरग्रे स्थाप्यमित्यर्थः । उव्वरिआ—उर्वरिता मात्रामिति·········रूपामितियावत् । देह-दत्त गुर्वधःस्थलघोरग्रे तथा गुरुलघुस्थाने कृते सति तद्भेदमध्ये उर्वरिमा (ता) या मात्रा सा यथासन्निवेश गुरुलघुरूपेण गुर्वधःस्थलघोः पश्चात् स्थापनीयेत्यर्थः । तत्र यदि मात्रापंचकमवशिष्ट, तदा प्रथम गुरुद्वयं, तत एको लघुः स्थाप्यः, अथ मात्राचतुष्टय, तदा गुरुद्वय स्थाप्य, यदि मात्रात्रय, तदा प्रथममेको गुरुस्ततो लघुः, यदि मात्राद्वय, तदैको गुरुर्यत्रैका मात्रा तदेकस्तावत्कार्य इति गुरूपदेशो, लघुः स्थाप्य इत्यर्थः । एवं अप्पबुद्धीए—आत्मबुद्धया आत्मा गुरुस्तस्य बुद्धिरुपदेशस्तेनेत्यर्थः । मात्राप्रस्तार जानीतेति शेषः । प्रस्तारो भेदरचना । अत्राय विधिर्यावत्सर्वलघुर्भेदो भवति । ········ बोध्यम् । अत्रेदमुक्त भवति, षट्कलगणस्य प्रस्तारे चिकीर्षिते षण्मात्रणा गुरुत्रय स्थाप्यं, सोऽय षट्कलस्य प्रथमो भेदः । अत्र प्रथमगुरोरध एको लघुर्देयः लघोरग्रे चोपरितनसादृश्याद्-गुरुद्वयं देय, पश्चादुर्वरितैकमात्रारूप—एक लघुर्देय इति प्रथम लघुद्वय यत्र पतति स षट्कलस्य द्वितीयो भेदः एव द्वितीयभेदे तृतीयो वर्णः प्रथमगुरुस्तदधो लघुः स्थाप्यो लघोरग्रे चोपरितनसादृश्यादेकोगुरुः स्थाप्यः, उर्वरितं च मात्रात्रय गुरुलघुरूपं क्रमेण पश्चात् स्थाप्यं, एवं यत्र लघुगुरुलघुगुरवः क्रमेण पतति स तृतीयो भेदः । एवमस्य द्वितीयो वर्णः प्रथमगुरुस्तदधो लघुः स्थाप्यस्तदग्रे चोपरितनसादृश्याल्लघुगुरुक्रमेण स्थाप्यः पश्चाच्चोर्वरित मात्राद्वय गुरुर्देयः स्तदधो

लघुर्देयस्तस्याग्रे उपरितनसादृश्याल्लघुद्वयोत्तरमेकोगुरुः स्थाप्यः, पश्चादुर्वरितैकमात्रा लघुरूपा देया, एव यत्र लघुचतुष्टयानतरमेको गुरुः पतति, सोऽस्य पचमभेदः। एवमस्यान्त्यो वर्णः प्रथमगुरुस्तदधो लघुर्देयः, उपरितनसादृश्याभावात् उर्वरितमात्रापचक द्विगुर्वेकलघुरूपमन्त्यलघोः पूर्वक्रमेण स्थाप्यमेवं च यत्र प्रथममेको लघुस्ततो गुरुद्वयोत्तरमेको लघुः पतति सोऽस्य षष्ठो भेदः। एवमस्य द्वितीयो वर्णः प्रथमगुरुस्तदधो लघुः स्थाप्यस्तस्याग्रे उपरितनसादृश्याद् गुरुलघू स्थाप्यौ पश्चादुर्वरित मात्राद्वयमेकगुरुरूपं स्थाप्यम्, एव यत्र प्रथम गुरुलघू ततोऽपि गुरुलघू एवभूतोऽस्य सप्तमो भेदः। एवमस्याद्यो गुरुः''''लघोरग्रे उपरितनसादृश्याल्लघुगुरुलघवः क्रमेण स्थाप्याः, उर्वरिता चैका मात्रा लघुरूपा पश्चात् स्थाप्या, एवं यत्र प्रथम लघुत्रय''''''''। '''''' '''अस्य चतुर्थो वर्णः प्रथमगुरुस्तदधो लघुः स्थाप्यस्तस्याग्रे उपरितनसादृश्यादेको लघुः''''''''गुरुद्वयरूप पश्चात् स्थाप्यम्, एव यत्र प्रथम् गुरुद्वय ततो लघुद्वय पतति, एवभूतोऽस्य नवमो भेदः। एवमस्य प्रथमो वर्णः प्रथमगुरु''''''''(उपरि) तनसादृश्यादेकोगुरुस्ततो लघुद्वय देयम्, उर्वरिता चैका मात्रा चैकलघुरूपा पश्चाद्देया, एव च यत्र लघुद्वयोत्तरमेको गुरुस्ततो लघुद्वयं।

यस्य गुरोरधः, यथोपरि तथा शेषं भूयः कुर्यादमु विधिम्॥ तावद्दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत्। प्रस्तारोऽय-समाख्यातः छदोविरतिवेदिभिरिति॥

१५. अथ वक्ष्यमाणमात्राच्छदःसु व्यवहारार्थं षट्कलत्रयोदशभेदाना क्रमेण नामान्याह हर इति। हरः शशी शूरः शक्रः शेषः अहिः कमलं ब्रह्म कलिः चन्द्रः ध्रुवः धर्मः शालिचरः, छमत्ताणं—षण्मात्रकाणा त्रयोदशभेदानाम् एतानि तेरह णाम—त्रयोदश नामानि यथासख्यं बोध्यानीत्यर्थः॥

१६. अथ पचकलाष्टभेदाना प्रत्येकं नामान्याह इदासणेति। इन्द्रासन अरु—अपरः सूरः चापः हीरश्च शेखरः कुसुम। अहिगणः पदातिगणः पचकलगणे एतानि नामानि क्रमेणेति शेष पिंगलेन कथितानि, पंचकलगणस्य ये अष्टौ भेदास्तेषा प्रत्येकमेतान्यष्टौ नामानि पिंगलेन कथितानीत्यर्थः।

१७. अथ चतुष्कलगणपचभेदनामान्याह गुर्विति। गुरुजुअ—गुरुयुगं, गुरोः युग द्वय यस्मिन्नेतादृशो यो भेदः स इत्यर्थः, कण्णो—कर्णः चतुःकलस्य प्रथमो भेदः कर्णो नामेत्यर्थः। गुर्वंतः गुरुरते यस्य तादृशो द्वितीयो भेदः पयोधरनामक इत्यर्थः। म्मि पादपूरणे। आदिगुरुः आदौ गुरुः यस्य तादृशश्चतुर्थो भेदो वसुः चरणः इति तस्य नामद्वय। सर्वैः लघुभिः सर्वलघुः पचमोभेदः विप्रः विप्रनामेत्यर्थः।

१८. अथ त्रिकलप्रथमभेदस्य लघ्वादेर्नामान्याह धअ इति। ध्वजः चिह्न

चिर चिरालयः तोमरं तुंबुरुः पत्रं चूतमाला रसः वासः पवनः वलयः एतानि नामानीति शेषः, लघुकालंवेण लघ्वादेस्त्रिकलप्रथमभेद इत्यर्थः, जाणेहु—जानीतेत्यर्थः।

१९. अथ त्रिकलद्वितीयभेदस्य गुर्वा ( देर्ना ) मान्याह सुरबइ इति। सुरपतिः पटहः तालः करतालः नंदः छंदः ण—ननु निश्चयेन निर्वाणः ( स ) समुद्र तूर्यम् एह—एतानि नामानि प्पमाणेण—प्रमाणेन गुर्वादेस्त्रिकलस्य जानीतेति शेषः, इति सम्प्रदायविदः, एवमग्रे।

२०. लघोस्त्रिकलस्य नामान्याह भावेति। भावः रसः ताडव नारी अह अथ कुलभामिनी इति नामानि त्रिलघुगणस्य कविवरः पिंगलः कथयति।

* * * * * *

३०. ......अथ चतुष्कलस्य सामान्यानि नामान्याह, गअ रहेति। गजः रथः तुरगः पद ( दा ) तिः, एतैर्नामभिः जानीहि चतुर्मात्रिकान्।

३१. अथैकगुरोर्नामान्याह ताटंकेति। ताटंका हारा नूपुरं केयूरम् एतानि गुरुभेदाः गुरोर्नामानीति यावत्, होंति-भवति। अथैकलघोर्नामान्याह, सरेति। सरः मेरुः दंडः काहलः, एत्ताइ—एतानि, लहुभेआ—लघुभेदा लघोर्नामानि, होंति-भवति।

३२. शङ्खः पुष्पं काहल रवः कनक लता रूव नाना कुसुमं पुष्पजातीना यावति नामानि तानि सर्वाणीत्यर्थः। रसः गंधः शब्दः एते अशेषा लघुभेदा भवतीत्यनुकर्षः इति प्रमाण निश्चयः।

३३. अथ वर्णवृत्तोपयोगिनो मगणादीनष्टौ गणान्नामलक्षणाभ्यामुद्दिशति मोति इति। तिगुरु—त्रिगुरुः गुरुत्रयस्वरुपो यो मगणः SSS, तिलहु—त्रिलघुः लघुत्रय स्वरूप इति यावत् णो—नगणः ।।।, आदिलघुगुरू यभौ, तेन आदौ यस्य लघुः स यगणः आदौ यस्य गुरुः स भगणः इत्यर्थः। मध्यगुरुः—यस्य मध्ये गुरुः स जगणः। मध्यलघुः—यस्य मध्ये लघुः SIS,स रो-रगणः। अंतगुरुः-यस्य अंते गुरुः स पुनः सो—सगणः। अंतलघुना उपलक्षितः तो—तगणः, यस्याते लघुः स तगण इत्यर्थः।

३४. मनुष्यकवित्वे कविनायकयोर्देवताकवित्वे देवतानां दुष्प्रधर्षत्वात्कवेरेव कवित्वस्यादौ दुष्टगणपाते अनीष्टफलप्राप्तिस्तच्छान्त्यर्थं शुभगणपाते शुभफलवृद्धये च तत्त(द्) गणदेवताः पूज्या इति मगणाद्यष्टगणानां क्रमेण ता आह, पुहवीति। पुहवी—पृथिवी मगणस्य त्रिगुरोः१, जल—जलं नगणस्य त्रिलघोः २, सिहि—शिखी अग्निः यगणस्यादिलघोः ३, कालो भगणस्यादिगुरोः ४, गगन

मध्यगुरोर्जगणस्य ५, सूर्यश्च अत मध्य) लघोः रगणस्य ६, चद्रमा मध्यलघोः (अतगुरोः) सगणस्य ७, नागो अतगुरोः (लघोः) तगणस्य ८, एते गणाष्टकेऽष्टदेवाः यथासख्य पूर्वोद्देश क्रमेण पिंगलेन कथिताः ।

३५. वक्ष्यमाणशुभाशुभफलोपोद्घातेन गणानां परस्परस्य मित्रादिभावं कथयति । भगण-यगणौ द्वौ गणौ, मित्रे मित्रसंज्ञाविति यावत् भवतः, भगण-यगणौ द्वौ गणौ भृत्यौ भृत्यसंज्ञौ भवतः, ज तौ जगण-तगणौ द्वौ उदासीनौ उदासीनसज्ञौ, अवशिष्टौ रगण-सगणौ अरी शत्रुसज्ञौ नित्य भवत इति क्रियापदं द्विवचनाते सर्वत्र योज्यम् ।

३६. अथ मगणाद्यष्टगणानां काव्यादौ पतने प्रत्येक फलमाह मगणेति । कवित्वस्यादौ यदि मगणः पतति, तदा ऋद्धिः कार्यं स्थिर ददातीत्याकर्यः । यदि यगणः पतति·········तदा मरण प्रयच्छति । यदि सगणः पतति, तदा सहवासान्निजदेशादुद्वासयति । यदि तगणः पतति, तदा शून्यं फल कथयति । यदि जगणः पतति, तदा खरकिरण सतापं विसर्जयति । भगणः अनेकानि मगलानि कथयति । य वत्काव्यगाथादोहास्तत्र प्रथमाक्षरे प्रथमगणो यदि नगणो भवति, तदा तत्र ऋद्धिबुद्धयः सर्वाः स्फुरति रणे राजकुले दुस्तरं तरति इति मुणह जानीत इति कविपिंगलो भाषते ।

३७. अत्र मनुष्यकवित्वे तदुक्त फल, पर्व्वतादिवर्णने कविगतं, देवतावर्णने न क्वापि । तदुक्तमभियुक्तैः—वर्ण्यते मनुजो यत्र फलं तद्गतमादिशेत् । अन्यथा तु कृते काव्ये कवेर्दोषावहं फल । देवता वर्ण्यते यत्र काव्ये क्वापि कवीश्वरैः । मित्रामित्रविचारो वा न तत्र फलकल्पनेति ॥ उपर्य्युक्तगणगुणानपवदन् द्विगण-विचारमाह, मित्त मित्तेति । मित्रात् मित्र यदि पतति तदेति शेषः सर्वत्र यथायथ योजनीय', ऋद्धिं बुद्धिम् अपरं मगलं ददाति, मित्राद्भृत्यो यदि पतति तदा युद्धे स्कन्धस्थैर्यं निर्भय जय करोति, मित्रादुदासीनो यदि पतति तदा कार्यंबंधं कार्यप्रतिबंध खलु पुनः पुनः करोति, मित्रात् यदि शत्रुः भवति तदा गोत्रबान्धवान् पीडयति, अपरं भृत्यात् मित्र यदि पतति तदा सर्वाणि कार्याणि भवति, भृत्यात् भृत्यो यदि पतति तदा आयतिरुत्तरकालो वर्द्धते, भृत्यात् उदासीनो यदि पतति तदा धन नश्यति, भृत्यात् वैरी यदि पतति तदा हाक्रंदः हाहहाकारः पतति ।

३८. उदासीनात् यदि मित्रं पतति तदा कार्यं किमपि अनिष्ट दर्शयति, उदासीनात् यदि भृत्यः पतति तदा सर्व्वामायतिं चालयति, उदासीनात् यदि उदासीनः पतति तदा असत्फलं किमपि न दृश्यते, उदासीनात् यदि शत्रुः पतति तदा गोत्रमपि वैरिकृत ज्ञेयम् , यदि शत्रोर्मित्रं भवति तदा शून्यं फलं भवति किमपि

फलं न भवतीत्यर्थः। यदि शत्रोर्भृत्यो भवति तदा गृहिणी नश्यति, पुनः शत्रो रुदासीनो यदि पतति तदा धन नश्यति, यदि शत्रोः शत्रुः पतति तदा नायकः स्खलति नश्यतीत्यर्थः ॥

३९. निर्दिष्टप्रस्तारक्रमस्थितिनिर्द्धारितसंख्याकगुरुलघुयुक्तत्वं रूपनिर्णीतस्वरूपे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारण उद्दिष्ट । तद्द्विविध मात्रावर्णभेदात् । तत्र केनाचित्कौतुकाद्वर्णोद्दिष्टे ( ? ) पृष्टे तत्प्रकारमाह । पुव्व जुअलेति। पुव्व जुअल सरि अंका—पूर्वयुगलसदृशाकान्, अत्र पूर्वपदस्य पूर्वांकपरत्वात् पूर्वयुगलेत्यर्थः । एव च पूर्वं यदंकयुगलं तत्सदृशं तत्तुल्य तदैक्यक्रियया यत्संपद्यते इति यावत् तमंकमित्यर्थः । दिज्जसु—ददस्व, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मंकभेदस्वरूपं लिखित्वा तदक्षरोपरि पूर्वांकयुगलसदृशाकं यथाप्रस्तारसख्यं क्रमेणोत्तरोत्तरं स्थापयेत्यर्थः । अत्र यतः पूर्वांक एव नास्ति त ( तः ) प्रथमातिक्रमे कारणाभावात् प्रथमोऽकः स्थाप्यः, यतश्च पूर्वम् अंकयुगलं नास्ति यत्र य एव पूर्वांको भवति तद्द्विगुणितांकः स्थाप्य इति गुरूपदेशोऽनुसधेयः । ततः गुरु सिर अंकन्ह—गुरुशिरोंकान् गुरोः शिरसि ये अंकास्तान्, सेस—शेषे सर्वांतिमे अके, मिटिज्जसु—लोपय, गुरुशिरोऽकबोधितसख्यां सर्वांतिकांकबोधितसंख्यायामूनीकुरु इति भावः । एव सति उबरल अंल—उर्वरितमंक गुरुशिरोऽकबोधितसंलोपे सति सर्वांतिमाकमध्ये उर्वरितो योऽकस्तमित्यर्थः, सर्वांतिमाकबोधितसख्यामध्योर्वरितसख्याबोधकमंकमिति यावत् । लेक्खिकइ—वप्रसख्याः परिधार्येति यावत्, आणहु—आनयस्व जानीहि इति यावत्, तहि पर—तदुपरि तेनेति यावत् मात्राणामिति शेषः, उद्दिट्टा—उद्दिष्टम्, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारणं, ध्रुवं निश्चितं, जाणह-जानीहि । अत्र गुरुशिर इति शिरःपदोपादानात् गुरोरुपर्यधश्चाको देय इति सूच्यते, अन्यथा वर्णोद्दिष्टे लघूपरीतिवदत्रापि गुरोरुपरि इत्येव ब्रूयात् । लघोस्तु उपर्येवेति नियमो गुरूपदिष्टोऽनुसधेयः । अथमर्थः—अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेदस्वरूपं विन्यस्य प्रथमाक्षरोपरि एकत्वसंख्याबोधकोऽकः स्थाप्यः, द्वितीयोऽकः स्थाप्यः, तृतीयस्थाने च तत्पूर्वद्वितीयैकेत्यंकद्वयैक्यक्रियानिःपन्नः तृतीयोऽकः स्थाप्यश्चतुर्थस्थाने च तत्पूर्वतृतीयद्वितीयेत्यंकद्वयैक्यक्रियानिःपन्नः पचमोऽकः स्थाप्यः, । पंचमस्थाने च तत्पूर्वपंचमतृतीयेत्यकद्वयैक्यक्रियानिःपन्नोऽष्टमोऽकः स्थाप्यः, षष्ठस्थाने च तत्पूर्वाष्टमपंचमतृतीयेत्यकद्वयैक्यक्रियानिःपन्नस्त्रयोदशाऽकः स्थाप्यः । एवं षट्सु स्थानेषु षडंकाः यथाप्रस्तारसंख्यं षट्कलगणोद्दिष्टे स्थाप्याः । एव पंचकलादावपि यथाप्रस्तारसंख्यमंकाः स्थाप्याः ।

एवं च त्रिगुरुः षट्कलस्य कतमो भेद इति पृष्टे, गुरुत्रयं लिखित्वा तत्र

एकद्वित्रिपञ्चाष्टत्रयोदशेति षडङ्कान् क्रमेण गुरूणामुपर्युपर्यधश्च संस्थाप्य गुरुशिरःस्थैकतृतीयोष्टमेत्यंकत्रयबोधितद्वादशसंख्यायाः शेषाङ्कत्रयोदशबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, एवं च त्रिगुरुः षट्कलस्य प्रथमो भेद इति वाच्यम् । एवं यत्र लघुद्वयोत्तरं गुरुद्वयं पतति एतादृशः षट्कलस्य कतमो भेद इति पृष्टे, पूर्वोक्तरीत्या यथास्थानं षडङ्कान् संस्थाप्य गुरुशिरःस्थतृतीयाष्टमेत्यङ्कद्वयैक्यक्रियानिःपन्नैकादशाङ्कबोधितसंख्यायास्त्रयोदशसंख्यामध्ये लोपे उर्वरिता द्वित्वसंख्या, तथा चायं द्वितीयो भेद इति वाच्यम् । एवं यत्रादौ लघुगुरू ततोऽपि लघुगुरू एवंभूतः षट्कलस्य कतमो भेद इति पृष्टे, उक्तरीत्या उक्तस्थानेषु तत् षडङ्कस्थापने गुरुशिरःस्थद्वितीयाष्टमेत्यङ्कद्वयैक्यक्रियानिःपन्नदशाङ्कबोधितसंख्यायास्त्रयोदशसंख्यामध्ये लोपे अवशिष्टा त्रित्वसंख्या, तथा चायं तृतीयो भेद इति वाच्यम् । एवमग्रेऽपि गुरुशिरोऽङ्कसंख्याया त्रयोदशसंख्यामध्ये लुप्तोर्वरितसंख्या तत्तद्भेदे वाच्या । षड्लघुरूपे गुरुशिरोङ्काऽभावादायूर्यसमाजसिद्धस्तादृशस्त्रयोदशो भेदो बोध्यः ।

एवं पञ्चकलप्रस्तारेऽपि अनिर्द्धारितप्रथमत्वाद्द्वितीयत्वादिधर्मभेदं लिखित्वा तद्वर्णोपरि एकद्वित्रिपञ्चाष्टेत्यङ्कपञ्चकं यथाप्रस्तारसंख्यं यथाक्रममुत्तरोत्तरं स्थाप्यम् । एवं च यत्रादौ लघुस्ततो गुरुद्वयमीदृशः पञ्चकलस्य कतमो भेद इति पृष्टे, एकद्वित्रिपंचाष्टेत्यङ्कपञ्चके तथोक्तस्थाने यथाक्रममुत्तरोत्तरं संस्थापिते गुरुशिरःस्थद्वितीयपञ्चमेत्यङ्कद्वयैक्यक्रियानिःपन्नसप्तमाङ्कबोधितसंख्यायाः सर्वातिमाष्टमांकबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, एवं चायं प्रथमो भेद इति वाच्यम् । एवं यत्र प्रथमं गुरुलघू ततो गुरुरीदृशो भेदः पञ्चकलस्य कतम इति पृष्टे, एकद्वित्रिपञ्चाष्टेत्यङ्कपञ्चके यथास्थानं यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकपञ्चमेत्यङ्कद्वयमेव लब्धं, लब्धषष्ठसंख्याया अष्टमसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं यत्र लघुत्रयाते गुरुरीदृशो भेदः कतम इति पृष्टे, पूर्वोक्तेऽङ्कपञ्चके तथैव स्थापिते गुरुशिरःस्थपञ्चमांकबोधितसंख्यायाः सर्वातिमाष्टमाङ्कबोधिताष्टमसंख्यामध्यलोपे उर्वरिता त्रित्वसंख्या, तथाचायं तृतीयो भेद इति वाच्यम् । एवमग्रेऽपि गुरुशिरोऽङ्कसंख्यामष्टमसंख्याया लुप्तोर्वरितसंख्या तत्तद्भेदे वाच्या ।

एवं चतुःकले द्विगुरुः कतमो भेद इति पृष्टे, एकद्वित्रिपञ्चेत्यङ्कचतुष्टये यथोक्तस्थाने यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकतृतीयेत्यङ्कद्वयबोधितचतुर्थसंख्यायाः सर्वातिमपञ्चाङ्कबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, तथाचायं प्रथमो भेद इति वाच्यम् । एवं चतुष्कले आदौ लघुद्वयं ततो गुरुशिरःस्थतृतीयाङ्कबोधितत्रित्वसंख्यायाः सर्वातिमपंचमांकबोधितसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं त्रिकले एकद्वित्रीति अङ्कत्रयं, द्विकले एकद्वीत्यंकद्वयं संस्थाप्य वाच्यम् ॥

४२. अथ वर्णवृत्तभेदेषु नष्टप्रकारमाह णट्ठेति। अंके समे विषमे वेत्यर्थः, भअ—भागं, अर्द्धांशमिति यावत् यथाप्रस्तारसंख्यामिति शेषः, करिज्जसु—कुरुष्व कल्पयेति यावत्, तत्र यः सम भाअहं—सम भागः समस्य भागः अर्द्धांश इत्यर्थः, तह—ततः, लहु—लघुं मुणिज्जसु—जानीहि क(थ)येति यावत्, त्रिसम-विषमस्यांकस्य एक्क—एकम् एकत्वसंख्याबोधकमंकमित्यर्थः, देइ—दत्वा संयोज्येति यावत्, बटण—वटन भागमर्द्धांशमिति यावत्, किज्जसु—कुरुष्व कल्पयेति यावत्, वटनमिति भागकल्पने देशी, ततः गुरु आणिज्जसु—गुरुमानय कल्पयेति यावत्। एवंप्रकारेण वर्णवृत्तभेदानामिति शेषः, णट्ठे—नष्ट नष्टप्रकारमिति यावत्, पिंगल जपइ—पिंगलो जल्पति कथयति॥ समांकभागे कृते योऽङ्कः स लघुकल्पकः, विषमांकभागे योऽङ्कः स गुरुकल्पकः। विषमांकस्य भागस्तु विषमात्मकेन संयोज्य कल्पनीय इति निर्गलितार्थः। अत्र यद्यपि एकांकेन योजितो विषमः समभाव प्राप्नोति तथापि तस्य भागः विषमांकभाग एवेति, ततो लघुकल्पनभ्रान्तिर्न कर्त्तव्येति ध्येयम्। अयमर्थः—

एकाक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, एकांके विषमे एकांकयोजनेन कृतभागे एको गुरुः कल्प्यः। अनंतरं चाक्षराभावान्न कल्पना। एवं च एकाक्षरवृत्तस्य प्रथमो भेद एकगुरुरिति वाच्यम्। एवमेकाक्षरवृत्तस्य द्वितीयो भेदः कीदृश इति पृष्टे कल्पनीयः, अनंतरं चाक्षराभावान्न कल्पना, एकलघुर्द्वितीयो भेद इति वाच्यम्।

एवं द्व्यक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टस्य एकांकस्य विषमस्य एकांकयोजनेन भागे एको गुरुः कल्पनीयः, पुनरपि भागलब्धस्यैकांकस्य विषमस्य भागे द्वितीयो गुरुः कल्प्यः। अनंतरं चाक्षराभावान्न कल्पना, एवं द्विगुरुर्द्व्यक्षर-वृत्तस्य प्रथमो भेद इति वाच्यः। एवं द्वितीयो भेदः कीदृश इति पृष्टे पृष्टस्य द्वितीयांकस्य समस्य भागे एको लघुः कल्पनीयस्ततो भागलब्धस्यैकांकस्य विषमत्वा-देकेन योजितस्य भागे एको गुरुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च प्रथममेको लघुस्तत एकोगुरुरीदृशो द्वितीयो भेदः। एवं द्व्यक्षरवृत्तस्य तृतीयो भेदः कीदृश इति पृष्टे, पृष्टांकस्य तृतीयस्य विषमत्वादेकांकयोजनेन भागे प्रथममेको गुरुः कल्पनीयस्ततो भागलब्धस्य द्वितीयांकस्य समत्वाद्भागे एको लघुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र क्रमेण गुरुलघू भवत ईदृशो द्व्यक्षरवृत्तस्य तृतीयो भेद इति वाच्यम्। एवं चतुर्थो भेदः कीदृश इति पृष्टे, पृष्टांकस्य चतुर्थस्य समत्वात्तद्भागे प्रथम एको लघुः कल्प्यः, ततोभागलब्धस्य द्वितीयांकस्यापि समत्वात्तद्भागेऽपि पुनरप्येको लघुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र लघुद्वयं स द्व्यक्षरवृत्तस्य चतुर्थो भेद इति वाच्यम्॥

एव त्र्यक्षरस्य प्रथमो भेदः कीदृश इति पृष्टे पृष्टाकस्य एकस्य विषमत्वादेकांकेन योजितस्य भागे एको गुरुः प्रथमः कल्प्यः, ततो भागलब्धस्यैकांकस्य विषमत्वादेकाकयोजनाद्वारद्वय भागे गुरुद्वयकल्पनम्, अनतरं चाक्षराभावान्न कल्पना, एव च यत्र गुरुत्रयमीदृशस्त्र्यक्षरवृत्तस्य प्रथमो भेद इति वाच्यम्। एवं त्र्यक्षरस्य द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टांकस्य द्वितीयस्य समत्वाद्भागे प्रथममेको लघुः कल्प्यस्ततो भागलब्धस्यैकाकस्य विषमत्वादेकाकयोजनाद्वारद्वय भागे गुरुद्वय कल्पनीयमनतरं चाक्षराभावान्न कल्पना, एव यत्र प्रथममेको लघुस्ततो गुरुद्वयमीदृशस्त्र्यक्षरस्य द्वितीयो भेद इति वाच्यम्। एव त्र्यक्षरस्य तृतीयो भेदः कीदृश इति ( पृष्टे ), पृष्टांकस्य तृतीयस्य विषमत्वादेकाकयोगेन भागकल्पने एकगुरुः कल्प्यस्ततो भागलब्धस्य द्वितीयाकस्य समत्वात्तद्भागे लघुः कल्प्यस्ततो भागलब्धस्य एकाकस्य विषमत्वादेकाकयोगेन तद्भागे गुरुः कल्प्यः, अनतरं चाक्षराभावान्न कल्पना, एव च यत्र प्रथममेको गुरुस्ततो लघुगुरू ईदृशस्त्र्यक्षरस्य तृतीयो भेद इति वाच्यम्। एव त्र्यक्षरवृत्तस्य चतुर्थो भेदः कीदृश इति पृष्टे, पृष्टस्य चतुर्थांकस्य समत्वात्तद्भागेऽपि लघुः कल्पनीयः, ततो भागलब्धस्यैकाकस्यापि समत्वात्तद्भागेपि लघुः कल्पनीयः, ततो भागलब्धस्यैकाकस्य विषमत्वादेकाकयोगेन तद्भागे गुरुः कल्पनीयस्तश्चाक्षराभावान्न कल्पना, एव च यत्र प्रथम लघुद्वयं तत एको गुरुरीदृशस्त्र्यक्षरवृत्तस्य चतुर्थो भेदः इति वाच्यम्। एवमग्रेऽप्यूह्यम्।

एव चतुरक्षरस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टांकस्यैकस्य विषमत्वादेक दत्वा तद्भागे एको गुरुः कल्पनीयः, ततो भागलब्धस्यैकाकस्य वारत्रयमेकाकयोजनेन भागे गुरुत्रय कल्पयित्वा चतुर्गुरुश्चतुरक्षर ( स्य ) प्रथमो भेद इति वाच्यम्। एव चतुरक्षरस्य द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टस्य द्वितीयाकस्य समत्वात्तद्भागे एको लघुः कल्पनीयस्ततो भागलब्धस्यैकस्य विषमत्वादेकाक दत्वा वारत्रयं भागकल्पने गुरुकल्पने गुरुत्रय कल्पनीयम्, एवं च यत्रादौ एको लघुस्ततो गुरुत्रयमीदृशश्चतुरक्षरस्य द्वितीयो भेद इति वाच्यम्। एवमग्रेऽप्यूह्यम्॥

४२. अमुकवर्णवृत्तमात्रागणप्रस्तारयोरेतावद्गुरुलघुको भेदः कतिसंख्याक इति अनिर्दिष्टक्रमस्थितिनिर्द्धारितसंख्याकगुरुलघुयुक्तत्वरूपप्रस्तारे निर्णीतस्वरूपानिर्द्धारितसख्याभेदनिष्ठायाः एको द्वाविंशत्यादिपिंडीभूतैकत्वद्वित्वादिकायाः निखिलवर्णवृत्तमात्रागणभेदनिष्ठायाश्च पिंडीभूतद्विचतुरष्टषोडशेत्यादिकायाः सख्यायानिर्द्धारककोष्ठस्थाकसमूहो वा मेरुः। अत्र निखिलभेदनिष्ठपिंडीभूतद्वित्वचतुष्ट्वादिसख्यानिर्द्धारण तत्तन्मेरुपंक्तिनिखिलकोष्ठवर्त्यंकयोजननिष्पन्नाकेन बोध्यमिति गुरूपदेशोऽनुसंधेयः। पूर्ववद्द्विविधे, तत्र वर्णमेरुप्रकारमाह। अक्खरसखेति। अक्खर संखे—सख्याताक्षराणाम्। अत्राक्षरपदस्य चरणाक्षरपा-

दत्वात्संख्यातचरणाक्षराणामित्यर्थः । संख्यातानि एकादिषड्विंशतिपर्यंत-संख्यायुक्तानि चरणाक्षराणि येषां तेषां वृत्तानामिति निर्गलितार्थः । कोट्ठ—कोष्ठानि गुरूपदेशादिति शेषः, करु—कुरु । एकाक्षरचरणवृत्तस्य कोष्ठद्वयं, द्वयक्षरचरणवृत्तस्य कोष्ठत्रय, त्र्यक्षरचरणवृत्तस्य कोष्ठ ( चतुष्टय ), चतुरक्षर-चरणवृत्तस्य कोष्ठपचकमित्येव गुरुपदेशादुत्तरोत्तरेकैकवृद्ध्या एकाक्षरमारभ्य षड्विंशत्यक्षरपर्यंत कोष्ठानि कल्पयेति निर्गलितार्थः । तसु आइ अंत—आद्यंतयोः कोष्ठयोः, पढ़मंक—प्रथममकमेकत्वसंख्याबोधकमकमिति यावत्, देहीति शेषः । अवर—अपरं आद्यंतांतरालस्थितमिति यावत् कोष्ठक, सिर दुइ अंके—शिरोऽकद्वयेन, अवहट्ठभाषाया पूर्व्वनिपातानियमात्, भरु—पूरय पूरणीयकोष्ठशिरःस्थांकद्वययोजननिष्पन्नाकेनाद्यंतांतरालस्थित कोष्ठ पूरणीयमित्यर्थः । एवम्प्रकारेणेति शेषः, मेरु—मेरुः, णिसक—निश्शंक निश्चयेनेति यावत्, सूई—सूच्यते निर्मीयते इति योजना ।

अथैतन्निर्माणप्रकारो लिख्यते । प्रथम वामदक्षिणयोरेकांगुलमायतमूर्द्ध्वाधोरेखाद्वय विनिर्माय तत्पार्श्वयोः ऋजुरेखया मेलनीयमेवमेक दीर्घ कोष्ठ विधाय तत्र उद्र्ध्वरेखामध्यदेशमारभ्याधोरेखामध्यदेशपर्यंतमेकामृजुरेखा दत्वा कोष्ठद्वयं कल्पनीय, तत्र तत्र प्रत्येकमेकैकोऽको देयः, तत्र प्रथममिद मेरु-स्वरूपं प्रथमकोष्ठस्यैकाकेन एकवर्णवृत्त एकगुरुरेको भेदः, द्वितीयकोष्ठस्यैकाकेन च एकलघुरेको भेदः इति निर्द्धारितैकत्वसंख्याकगुरुलघुयुक्तत्वस्वरूपनिर्णीतस्वरूपैकवर्णभेदनिष्ठैकत्वसख्या प्रतीयते । कोष्ठद्वयस्थैकाकद्वयपरस्परयोजननिःपन्नद्वितीयाकेन चैकवर्णवृत्तभेदस्य द्वित्वरूपा समस्ता सख्या प्रतीयते, इतीय कोष्ठद्वयात्मिका प्रथमा एकवर्णमेरुपक्तिः ।

एवमेतत्पक्त्यधोरेखा पार्श्वयोर्मनाग्वर्द्धयित्वा अगुष्ठमात्र मध्यदेश त्यक्त्वा अधस्तादेका रेखा उपरितनरेखासमाना कार्या, पार्श्वयोश्च ऋजुरेखया मेलन कार्यमेवमेकमायतं कोष्ठं विधाय तत्र उपरितनप्रथमकोष्ठस्थाधोरेखामध्यदेशमारभ्याधस्तनरेखापर्यंतमेका ऋजुरेखा देया, ततः द्वितीयकोष्ठाधोरेखामध्यमारभ्याधस्तनरेखापर्यंतमेका ऋजुरेखा देया, एव कोष्ठत्रय सपाद्य प्रथमान्त्यकोष्ठयोः प्रत्येकमेकैकोऽको देयः, अतरालवर्त्ती च द्वितीयः कोष्ठः शिरःस्थैकत्ताक-द्वययोजननिःपन्नद्वितीयाकेन पूरणीयः, तत्र द्वयक्षरवृत्तभेदेषु द्विगुरुरेको भेद इति निर्द्धारितद्वित्वसख्याकगुरुयुक्तद्वयक्षरवृत्तभेदनिष्ठैकत्वरूपसख्या प्रथमकोष्ठस्थैकाकेन प्रतीयते । ततोद्वितीयकोष्ठस्थद्वितीयाकेन द्वयक्षरस्यैकगुर्वेकलघुयुक्तौ द्वौ भेदाविति निर्द्धारितैकत्वसंख्याकगुरुलघुयुक्तद्वयक्षरभेदनिष्ठद्वित्वरूपसख्या प्रतीयते । ततस्तृतीयकोष्ठस्यैकाकेन द्वयक्षरस्य द्विलघुरेको भेद इति निर्द्धारितद्वित्वरूपसख्या

प्रतीयते। ततस्तृतीयकोष्ठस्थैकाकेन द्वयक्षरस्य द्विलघुरेको भेद इति निर्द्धारितद्वित्वसंख्याकलघुयुक्तद्वयक्षरभेदनिष्ठैकत्वरूपसख्या प्रतीयते। कोष्ठत्रयस्थलसमस्तांकयोजननिःपन्नचतुर्थांकेन च चतुष्ट्वरूपा समस्तभेदसख्या निश्चीयते, सेयं कोष्ठत्रययुक्ता द्वयक्षरमेरुपङ्क्तिर्द्वितीया ॥

एवमेतत्पक्त्यधोरेखा पार्श्वयोर्मनाग्वर्द्धयित्वैकागुलमात्रमध्यदेशं त्यक्त्वोपरितनरेखासमानाधस्तद्रेखा कार्या, पार्श्वयोश्च ऋजुरेखया मेलन कार्यमेवमेकं दीर्घं कोष्ठ निर्माय तत्र उपरितनप्रथमकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यंतमेका ऋजुरेखा देया, एव कोष्ठचतुष्टय सपाद्य तत्राद्यतकोष्ठयोः प्रत्येकमेकैकोऽङ्को देयस्तदंतरालस्य द्वितीयकोष्ठस्य च तच्छिरःस्थैकद्वितीयेत्यंकद्वययोजननिःपन्नतृतीयाकेन पूरणं कार्यं, तृतीयकोष्ठस्य च तच्छिरःस्थैकद्वितीयैकेत्यकद्वययोजननिःपन्नतृतीयाकेन पूरण कार्यं, तत्र प्रथमकोष्ठस्थैकाकेन त्र्यक्षरस्य त्रिगुरुरेको भेद इति निर्द्धारितत्रित्वसख्याकगुरुयुक्तत्र्यक्षरवृत्तभेदनिष्ठैकत्वरूपसख्या प्रतीयते। द्वितीयकोष्ठस्थतृतीयाकेन च त्र्यक्षरस्य द्विगुर्वेकलघुयुक्तं भेदत्रयमिति निर्द्धारितद्वित्वैकत्वसंख्याकगुरुलघुयुक्तत्र्यक्षरभेदनिष्ठत्रित्वगुरुरूपसंख्या निश्चीयते। एव तृतीयकोष्ठस्थतृतीयाकेन (त्र्य) क्षरस्यैकगुरुद्विलघुयुक्त भेदत्रयमिति निर्द्धारितैकत्वद्वित्वसंख्याकगुरुलघुयुक्तत्र्यक्षरभेदनिष्ठक(त्रित्व) रूपसख्या निश्चीयते। एव चतुर्थकोष्ठस्थैकाकेन त्र्यक्षरस्य त्रिलघुयुक्त एको भेद इति निर्द्धारितत्रित्वसंख्याकलघुयुक्तत्र्यक्षरभेदनिष्ठैकत्वरूप सख्या प्रतीयते। कोष्ठचतुष्टयस्थसर्वांकयोजननिष्पन्नाष्टमाकेन च त्र्यक्षरस्याष्टौ भेदा इति समस्ता त्र्यक्षरवृत्तभेदसख्या निश्चीयते, सेय तृतीया कोष्ठचतुष्टययुक्ता तृतीयाक्षरमेरुपक्तिः।

एव पूर्वोक्तरीत्यैकं दीर्घं कोष्ठ निर्माय तत्र कोष्ठपंचकं विधाय प्रथमान्त्ययोः कोष्ठयोरेकैको देयः, अतरालस्थस्य द्वितीयकोष्ठस्य शिरःस्थैकतृतीयेत्यंकद्वययोजननिःपन्नचतुर्थांकेन पूरण विधेय, तृतीये कोष्ठस्य च शिरःस्थतृतीयाकद्वययोज(न)निःपन्नषष्ठाकेन पूरण विधेयं, चतुर्थकोष्ठस्य च शिरःस्थतृतीयैकेत्यकद्वययोजननिःपन्नचतुर्थांकेन पूरणं विधेय, तत्र प्रथमकोष्ठस्थैकाकेन चतुरक्ष(र)वृत्तस्य चतुर्गुरुरेको भेद इति निर्द्धारितचतुष्ट्वसख्याकगुरुयुक्तचतुरक्षरवृत्तभेदनिष्ठैकत्वसख्या प्रतीयते। द्वितीयकोष्ठस्थचतुर्थांकेन च चतुरक्षरस्य त्रिगुर्वेकल(ल)घुयुक्तं भेदचतुष्टयमिति निर्द्धारितत्रित्वैकत्वसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठचतुष्ट्वरूपसख्या प्रतीयते। ततः चतुर्थकोष्ठस्थचतुर्थांकेनैकगुरुत्रिलघुयुक्तं चतुरक्षरस्य भेदचतुष्टयमिति निर्द्धारितैकत्वत्रित्वसख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठचतुष्ट्वत्र(रू)पसख्या निश्चीयते। ततः पंचमकोष्ठस्थैकाकेन चतुर्लघुयुक्तश्चतुरक्षरस्यैको भेद इति निर्द्धारितचतुष्ट्वसख्याकलघुयुक्तचतुरक्षरभेदनिष्ठैकत्वरूपसख्या निश्ची-

यते । कोष्ठपंचकनिष्ठसर्वांकयोजननिःपन्नषोडशाकेन च षोड़शरूपा समस्ता चतुरक्षरभेदसंख्या प्रतीयते, सेयं पचकोष्ठयुक्ता चतुर्थी चतुरक्षरमेरुपंक्तिः।

एव पूर्वोक्तरीत्या एकं दीर्घ कोष्ठं विधाय तत्र कोष्ठषट्कं निर्माय प्रथमान्त्यकोष्ठयोरेकैकोऽको देयः, अंतरालस्थद्वितीयकोष्ठस्य शिरःस्थैकचतुर्थेत्यंकद्वययोजननिःपन्नपचमाकेन पूरण विधेय । ततस्तृतीयकोष्ठस्य शिरःस्थचतुर्थषष्ठेत्यकद्वययोजननिःपन्नदशमाकेन पूरण विधेयं । ततः पचमकोष्ठस्य शिरःस्थचतुर्थैकेत्यकद्वययोजननिःपन्न-पचमाकेन पूरण विधेयं । तत्र प्रथमकोष्ठस्यैकाकेन पचाक्षरवृत्तस्य पचगुरुरेको भेद इति निर्द्धारितपंचत्वसंख्याकगुरुयुक्तपचाक्षरभेदनिष्ठैकत्वसंख्या ततः द्वितीयकोष्ठस्थपंचमाकेन च पचाक्षरवृत्तस्य चतुर्गुर्वेकलघुयुक्त भेदपंचकमिति निर्द्धारितचतुष्ट्वैकत्वसख्याकगुरुलघुयुक्तपंचाक्षरभेदनिष्ठपचत्वसख्या निश्चीयते । ततस्तृतीयकोष्ठस्थदशमाकेनपचाक्षरवृत्तस्य त्रिगुरुद्विलघुयुक्तं भेददशकमिति निर्द्धारितत्रित्वद्वित्वसख्याकगुरुलघुयुक्तपचाक्षरभेदनिष्ठदशत्वसख्या निश्चीयते । ततश्चतुर्थकोष्ठस्थदशमाकेन पचाक्षरवृत्तस्य द्विगुरुत्रिलघुयुक्तं भेददशकमिति निर्द्धारितद्वित्वत्रित्वसख्याकगुरुलघुयुक्तपचाक्षरभेदनिष्ठदशत्वसंख्या निश्चीयते । ततः पचमकोष्ठस्थपचमाकेन पचाक्षरवृत्तस्य एकगुरुचतुर्लघुयुक्तं भेदपचकमिति निर्द्धारितैकत्वचतुष्ट्वसख्याकगुरुलघुयुक्तपचाक्षरभेदनिष्ठपचत्वसंख्या निश्चीयते । ततः षष्ठकोष्ठस्थैकाकेन पचाक्षरवृत्तस्य पचलघुयुक्त एको भेद इति निर्द्धारितपचत्वसंख्याकलघुयुक्तभेदनिष्ठैकत्वसंख्या निश्चीयते । कोष्ठषट्कनिष्ठसर्वांकयोजननिःपन्नद्वात्रिंशत्तमाकेन च द्वात्रिंशद्रूपा समस्ता पंचाक्षरवृत्तभेदसंख्या प्रतीयते। एवमग्रेऽपि सुधीभिः स्वयमूह्यं, ग्रन्थविस्तरभयान्न लिख्यते ॥

४४. अमुकवर्णमात्राप्रस्तारयोरेतावद्गुरुलघुयुक्तो भेद एतावत्संख्यक इति मेरुपङ्क्तिवर्त्तितत्तत्कोष्ठस्थाकनिर्द्धारितस्वरूपसख्याकाना भेदाना प्रथमद्वितीयादिप्रास्तिस्थकरूपस्य निर्द्धारणं तन्निर्द्धारकाकसमूहो वा पताका, सा द्विविधा वर्णपताका चेति ।

वर्णपताकानिर्माणप्रकारमाह उद्दिठ्ठा सरि अकेति । उद्दिट्ठा सरि—उद्दिष्टसदृशान् उद्दिष्टपदस्योद्दिष्टाकपरत्वादुद्दिष्टाकसदृशानित्यर्थः, अंक—अंकान्, दिज्जसु—देहि, पूर्वमेकमंक दत्वा उत्तरोत्तर द्विगुणितान् द्विचतुरष्टादिकानकान् यथाप्रस्तारसंख्यं स्थापयेदित्यर्थः, ततः पुव्व अक—पूर्वांकस्य, पर—परस्मिन्नुत्तरवर्त्तिनीति यावत् अके इति शेषः, पत्थरसंख—प्रस्तारसख्यं प्रस्तारस्य सख्या यस्या क्रियायां तद्यथा स्यात्तथेत्यर्थः, भरणयोजनं करिज्जसु—कुरु । यस्य पूर्वांकस्य यत्पराकयोजने प्रस्तारसंख्याकोऽको निष्पद्यते, तस्य पूर्वांकस्य तत्र पराके योजनं न कार्यमित्येको नियम इत्यर्थः। एवं कृते पाउल अंक पढम—अवहट्टभाषाया पूर्वनिपाता-

नियमात् प्रथमप्राप्तमंकमित्यर्थः, परितेज्जसु—परित्यज । यस्य पूर्वांकस्य यत्पराकयोजने पूर्वंप्राप्तोऽको निष्पद्यते तस्य तत्र योजनं न कार्यमिति द्वितीयो नियम इत्यर्थः । एव प्रकारेण वर्णानामिति शेषः, पताका किज्जसु—पताका कुरु इति योजना ।

अत्र यः पूर्वांकः यत्र पराके प्रथम योज्यते तद्योजननिःपन्ना अकाः तत्परांकादधोऽधः स्थाप्या इति नियमो गुरूपदेशादवधारणीयः । पूर्वांकस्य सर्वपरांकयोजने येंऽका निःपद्यंते तैः कोष्ठपक्तिर्बोध्या ।

अथैतदनुसारेण चतुर्वर्णपताकालिखनप्रकार उच्यते । चतुर्वर्णपताकायामादौ एक कोष्ठ कर्तव्यं, तत ऊद्र्ध्वाधः कोष्ठचतुष्टयं कल्पनीयं, तत ऊद्र्ध्वाधः कोष्ठषट्क, ततः ऊद्र्ध्वाधः कोष्ठचतुष्टयं, ततएकः कोष्ठः । एवं परस्परसंश्लिष्टरेखं कोष्ठस्थान-पचक विधाय, यत्रोपरितनप्रथमद्वितीयतृतीयचतुर्थपंचमकोष्ठेषु एकद्विचतुरष्ट-षोडशेति पंचांका यथाक्रमं स्थाप्याः, तत्र प्रथमकोष्ठस्थानमेकाकयुक्तमिति सर्व्वापेक्षया पूर्वं एकोऽकः, स च उत्तरवर्त्तिषु द्वितीयचतुर्थाष्टमाकेषु योज्यमानः प्रथमं द्वितीयाके योज्यते इति तद्योजननिःपन्ना अंका द्वितीयाकादधोधः स्थाप्या इति एकांकद्वितीयाकयोजननिःपन्नस्तृतीयांको द्वितीयाकादधः स्थाप्यः, तत एकाकचतुर्थाकयोजननिःपन्नः पचमाकस्तृतीयाकादधः स्थाप्यः, ततः एकाष्ट-माकयोजननिःपन्नो नवमोऽकः पचमाकादधः स्थाप्यस्तत एकाकस्य षोडशाक-योजने सप्तदशोऽकः प्रस्तारसख्यातोऽधिकसंख्याको निःपद्यते इति तस्य तत्र योजन न कार्यमेवं प्रथमाकस्य द्वितीयचतुर्थाष्टमांकेषु योजन कृत्वा निःपन्नद्वितीय-तृतीयपंचमनवमैश्चतुर्भिरकैर्द्वितीयस्थानकोष्ठपक्तिः कल्पनीया । एतत्कोष्ठपक्तिस्था द्वितीयादयश्चत्वारोऽप्यकाश्चतुर्थाष्टमाकपूर्ववर्त्तित इति क्रमेण तयोर्योज्यमानाः प्रथम चतुर्थाके योज्यते ततस्तद्योजननिःपन्ना अकाश्चतुर्थाकादधोऽधः स्थाप्या इति, द्वितीयचतुर्था कयोजननिःपन्न सप्तमोऽकः षष्ठाकादधः स्थाप्यः, ततः पचमचतुर्थ-योजने नवमाकः प्रथमप्राप्तो निःपद्यते इति तस्य तत्र योजन न कार्यमिति, पचमाष्टमाकयोजननिःपन्नस्त्रयोदशाकः सप्तमांकादधः स्थाप्यः, एवं द्वितीया-दिचतुर्णामकाना चतुर्थाके योजन कृत्वा द्वितीयाष्टमांकयोजननिःपन्नो दशमाकस्त्र-योदशांकादधः स्थाप्यस्ततः तृतीयाष्टमयोजननिःपन्न एकादशाको दश-माकादधः स्थाप्यः, ततः पंचमाष्टमयोजननिःपन्नस्त्रयोदशाकः प्रथम-प्राप्तो निःपद्यते इति तयोर्योजनं न कार्यं, नवमाष्टमयोजननिःपन्नः सप्तदशो नवमषोडशयोजननिःपन्नः पंचविंशतितमश्चाकः प्रस्तारसख्यातोऽधिकसख्याको निःपद्यते इति तद्योजन न कार्यम् । एव द्वितीयाद्यंकाना चतुर्थाष्टमाकयोर्योजनं कृत्वा चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशेति षडकैः तृतीयस्थानकोष्ठपंक्तिः कल्प-नीया, ततश्चतुर्थादयः षडंकाअष्ट माकपूर्व ( व ) त्तिन इति तेषा तत्र योजने

चतुर्थाष्टमयोजननिःपन्नो द्वादशाकोष्ठमाकादधः स्थाप्यस्ततः षष्ठाष्टमाकयोजननिःपन्नश्चतुर्दशोऽको द्वादशाकादधः स्थाप्यस्ततः सप्तमाष्टमयोजननिःपन्नपचदशोऽकश्चतुर्दशाकादधः स्थाप्यस्ततस्त्रयोदशदशैकादशाकानामष्टमाकयोजने, अष्टमादीना च षोडशकयोजने प्रस्तारसंख्यातोऽधिकसंख्याका अका निःपद्यते अतस्तेषा तत्र योजन न कार्यमेव चतुर्थाष्टमाकयोर्योजन कृत्वाष्टमद्वादशचतुर्दशपंचदशेति चतुर्भिरंकैश्चतुर्थस्थानकोष्ठपक्तिः कल्पनीया। पचमस्थानकोष्ठक पोडशाकयुक्तं कल्पनीयम्। एवं चतुर्वर्णवृत्तपताकायां कोष्ठस्थानपंचकं कल्पनीयं, तत्स्वरूप लिखित्वा प्रदर्श्यते। एवं च चतुर्वर्णमेरुपंक्तिवर्त्तिप्रथमकोष्ठस्थैकाकनिर्धारितचतुर्गुरुयुक्तत्वरूपैकत्वसख्याकस्य भेदः प्रथम इति प्रातिस्विकं रूप पताकाप्रथम कोष्ठस्थैकाकेन निर्द्धार्य्यते चतुर्गुरुयुक्त एको भेदः प्रथम इति। एव चतुर्वर्णमेरुपक्तिवर्त्तिद्वितीयकोष्ठस्यचतुर्थाकनिर्द्धारितैकलघुत्रिगुरुयुक्तत्वस्वरूपचतुष्ठसख्याकानां भेदानां द्वितीयतृतीयपचमनवमेति प्रातिस्विकं रूपं चतुर्वर्णपताकाद्वितीयस्थानकोष्ठपक्तिवर्त्तिभिश्चतुर्भिरकैर्निर्द्धार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा द्वितीयतृतीयपचमनवमरूपा इति। एवं चतुर्वर्णमेरुपक्तिवर्त्तितृतीयकोष्ठस्यषष्ठाकनिर्द्धारितद्विगुरुद्विलघुयुक्तत्वस्वरूपषट्सख्याकानां भेदानां चतुर्थषष्ठाकनिर्द्धारितद्विगुरुद्विलघुयुक्तत्वस्वरूपषट्सख्याकाना भेदाना चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशेति प्रातिस्विकं रूपं पताकातृतीयस्थानकोष्ठपक्तिवर्त्तिभिः षड्भिरकैर्निर्द्धार्य्यते द्विगुरुद्विलघुयुक्ताः षड्भेदाः चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशरूपा इति। एव चतुर्वर्णमेरुपक्तिवर्त्तिचतुर्थकोष्ठस्थचतुर्थाकनिर्द्धारितैकगुरुत्रिलघुयुक्तत्वस्वरूपचतुष्ठसख्याकानां भेदानामष्टमद्वादशचतुर्दशपंचदशेति प्रातिस्विक रूपं पताकाचतुर्थस्थानकोष्ठपक्तिवर्त्तिभिश्चतुर्भिरकैरवधार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा अष्टमद्वादशचतुर्दशपंचदशरूपा इति। एव चतुर्वर्णमेरुपक्तिवर्त्तिपचमकोष्ठस्थैकाकनिर्द्धारितचतुर्लघुयुक्तत्वस्वरूपैकत्वसंख्याकस्य भेदस्य षोडश इति प्रातिस्विकं रूपं पताकापंचमकोष्ठस्थषोडशाकेन निर्द्धार्य्यते चतुर्लघुरेको भेदः षोडशेति। एवमन्यत्रापि पताका बोध्याः। ग्रंथविस्तरभयान्न लिख्यते।

४५–४६. अथ मात्रामेरुप्रकारमाह दुइ दुइ कोट्ठेति। दुइ दुइ—द्वयोर्द्वयोः कलयोरिति शेषः, कोट्ठा—कोष्ठकानि, सरि—सदृशानि समसंख्याकानीति यावत्, लिहहु—लिखत। एककलप्रस्ताराभावात् द्विकलमारभ्य मेरूत्पत्तिः, एवं च द्वितीयतृतीयेति द्वयोः कलयोः प्रत्येकं कोष्ठद्वयम् ऊर्द्ध्वाधः स्थित्या परस्परसंश्लिष्टं, चतुर्थपंचमेति द्वयोः कलयोः प्रत्येकं कोष्ठत्रयमूर्द्ध्वाधः स्थित्या परस्परसंश्लिष्टं, षष्ठसप्तमेति द्वयोः कलयोरूर्द्ध्वाधःस्थित्या परस्परसंसक्तं प्रत्येकं कोष्ठचतुष्टयमित्यादिरीत्या द्वयोर्द्वयोः कलयोः समसंख्याकान्यूर्द्ध्वाधःस्थित्या

परस्परससक्तानि कोष्ठकानि उत्तरोत्तरं वर्द्धितानि गुरूपदेशात् कल्पनीयानीति निर्गलितार्थः। अत्र कोष्ठसादृश्यं समसख्याकत्वमेव। तसु—तेषु कोष्ठेषु, अत—अतिमे कोष्ठे इत्यर्थः, पढम अंक—प्रथमोऽकः स्थाप्य इति शेषः, तसु आइहि—तेष्वाद्येषु कोष्ठेषु मध्ये ( पुनः ) विषमे प्रथमतृतीयपचमसप्तमादिकोष्ठेषु, एक्क—एकः अंकः स्थाप्य इत्यनुषगः। क्वचिद्विषमे इत्यस्य स्थाने पढम इति पाठः, तत्र समादित्यध्याहृत्य योज्यम्, एवं च समात्प्रथमे पूर्ववर्त्तिनि विषम इति, स एवार्थः, यतः समात्पूर्ववर्त्ती विषम एवेति, सउ—समेषु द्वितीयचतुर्थषष्ठाष्टमादिषु कोष्ठेषु, बेबि मिलत—द्वौ मिलितौ पूर्वांकाविति शेषः, स्थापयेत्यनुषगः। आद्या ये विषमाः कोष्ठास्तेष्वेकाको देयः, ये समास्तेषु पूर्ववर्त्यकद्वययोजननिःपन्नोऽको देय इत्यर्थः। ततः उबरल कोट्ठ—उर्वरितानि आद्यतातरालस्थितानि कोष्ठकानीत्यर्थः। सिर अके तसु सिर पर अंके—शिरोंकाः तच्छिरउपर्यकाभ्या, णीसंक ( के )—निःशक यथा स्यात् पूरह—पूरय, एव अक सचारिअकान् संचार्य सस्थाप्य, जण दुइ चारि—जना द्विचत्वारः, मत्ता मेरु—मात्रामेरु जाणह—( बुज्झहु ) बुध्यध्वम् इति योजना।

अथैतन्निर्माणप्रकारो लिख्यते। एककलप्रस्ताराभावात् द्विकलमारभ्य मेरुप्रवृत्तिः। एव च प्रथम वामदक्षिणयो रेखागुलमात्रदीर्घं मध्ये रेखाभूतमूर्ध्वमधश्च द्वयगुलमात्रमंतरं विसृज्योर्ध्वाधो रेखात्रयं कार्यं, ततस्तत्पार्श्वद्वयमेलनम् ऋजुरेखया कार्यम्, एव दीर्घकोष्ठद्वयं विधाय तत्र प्रथमरेखामध्यदेशमारभ्याधस्तनतृतीयरेखामध्यदेशपर्यंतम् एकाम् ऋजुरेखा दत्वा प्रथमस्थाने ऊर्ध्वाधःस्थित्या परस्परसंसक्तं कोष्ठकचः चतुष्टय कार्यं, तत्रातिमकोष्ठयोः प्रत्येकमंको देयः, आद्ये उपरितने प्रथमे च विषमत्वादेको देयः, तदधस्तने च द्वितीयत्वात् समे उपरितनकोष्ठद्वयस्थैकाकद्वयरूपपूर्वाकद्वययोजननिःपन्नद्वितीयाकेन पूरण विधेयम्। एवं चोपरितनकोष्ठद्वय द्विकलमेरुपक्तिः, तत्र प्रथमकोष्ठस्थैकाकेन द्विकलस्यैक गुरुरूप एको भेद इति, द्वितीयकोष्ठस्थैकाकेन च द्विलघुरेको भेद इति प्रतीयते। कोष्ठद्वयस्थैकाकद्वययोजननिःपन्न द्वितीयाकेन च द्विकलस्य भेदद्वयमिति द्विकलगणभेदपिंडीभूता समस्ता द्वित्वसंख्या प्रतीयते। एवमधस्तनकोष्ठद्वय त्रिमात्रमेरुपक्तिः; तत्र प्रथमकोष्ठस्थद्वितीयाकेन त्रिकलप्रस्तारे एकगुरुयुक्त भेदद्वयं, द्वितीयकोष्ठस्थैकाकेन च त्रिलघुयुक्त एको भेद इति प्रतीयते। कोष्ठद्वयस्थद्वितीयैकेत्यंकद्वययोजननिःपन्नतृतीययाकेन च त्रिकलस्य समस्तास्त्रयो भेदा इति पिंडीभूता समस्ता त्रित्वरूपा त्रिकलगणभेदसंख्या प्रतीयते। ततोऽधस्तनीं तृतीयां रेखामाद्यतपार्श्वयोर्मनाग्वर्द्धयित्वाऽघोध एकैकमंगुलमतरं विसृज्य तत्परिमाणं रेखाद्वयं कार्यम्, ऋजुरेखया

तत्पार्श्वद्वयमेलन च कार्यम्। एव त्रिकलमेरुपंक्तिसंसृष्टं तदधःस्थ दीर्घं कोष्ठद्वक कार्यं, तत्रोपरितनत्रिकलमेरुपंक्तेः प्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनातिम-रेखापर्यंतम् एका ऋजुरेखा कार्या, एवं तत्पंक्तिद्वितीयकोष्ठाधोरेखामध्यदेशमार-भ्याधस्तनातिमरेखापर्यंतमेका ऋजुरेखा कार्या, एवं द्वितीयस्थमेरूद्र्ध्वापेक्षया अधःस्थित्या परस्परसक्तं कोष्ठषट्क कार्यं, तत्रोपरितनकोष्ठमयात्मिका सर्वापेक्षया तृतीया चतुःकलमेरुपंक्तिः, तत्र सर्वापेक्षया तृतीयत्वाद्विषमे प्रथमकोष्ठे सर्वांतिमे च तृतीये एकोऽको देयः, द्वितीये च शिरोऽकतच्छिरोंकद्वितीयैकेत्यंकद्वययोजननिःपन्न तृतीयांकेन पूरणं विधेयम्, एतदधस्तनी च कोष्ठत्रयात्मिका चतुर्थी पञ्चकलमेरुपंक्तिः, तत्र प्रथमकोष्ठे सर्वापेक्षया चतुर्थत्वात्समे एकद्वयेतिपूर्वांकद्वययो-जननिःपन्नतृतीयैकेत्यंकद्वययोजननिःपन्नचतुर्थांकेन पूरण कार्यम्। तदग्रिमे च तृतीयकोष्ठे सर्वांतिमे एकोंऽको देयः, तत्रोपरितनकोष्ठरूपात्मकचतुःकलमेरुपंक्ति-प्रथमकोष्ठस्थैकांकेन चतुःकलप्रस्तारे द्विगुरुरेको भेद इति प्रतीयते। तदग्रिम-द्वितीयकोष्ठस्थतृतीयांकेन तत्र प्रस्तारे एकगुरुयुक्त भेदत्रयमिति प्रतीयते। अंतिमतृतीयकोष्ठस्थैकांकेन च तत्र प्रस्तारे त्रिचतुः लघुयुक्त एको भेद इति प्रतीयते। एकतृतीयैकेतिकोष्ठत्रयस्थसमस्तांकयोजननिःपन्नपञ्चमांकेन त्रिचतुः-कलस्य पञ्च भेदा इति समस्ता पिंडीभूता प्रस्तारसंख्या प्रतीयते। एवमेतदध-स्तनकोष्ठत्रयात्मकपञ्चकलप्रस्तारे द्विगुरुयुक्त भेदत्रयमिति प्रतीयते। तदग्रिमद्वितीय-कोष्ठस्थचतुर्थांकेन च तत्र प्रस्तारे एकगुरुयुक्तं भेदचतुष्टयमिति प्रतीयते। तदग्रिमतृतीयकोष्ठत्रयस्थत्रिचतुरेकेत्यंकत्रययोजननिःपन्नाष्टमाकेन च पंचकलस्याष्टौ भेदा इति समस्ता पिंडीभूताष्टत्वरूपा पंचकलप्रस्तारसंख्या प्रतीयते।

एवं पूर्वमेतत्कोष्ठद्वयादधस्ताद्दीर्घं कोष्ठद्वय निर्माय उपरितनपञ्चकलमेरुपंक्ति-प्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनद्वितीयकोष्ठाधोरेखापर्यंतमृजुरेखा देया, तत उपरितनद्वितीयकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनकोष्ठाधोरेखापर्यंतमृजुरेखा देया, तत उपरितनतृतीयकोष्ठाधोरेखामध्य ( देश ) मारभ्याधस्तनकोष्ठाधोरेखाप-र्यंतमृजुरेखा देया, एवं तृतीयस्थाने उद्र्ध्वाधःस्थित्या परस्परसक्त कोष्ठाष्टक कार्यं, तत्रोपरितनं कोष्ठचतुष्टयं षट्कलमेरुपंक्तिः। तत्र प्रथमकोष्ठे सर्वापेक्षया पञ्चमत्वाद्विषमसर्वांतिमे चतुर्थे च एकोंऽको देयः। द्वितीयकोष्ठे च शिरोंकतच्छिरोंऽकतृतीयाकद्वययोजननिःपन्नषष्ठाकेन पूरण कार्यम्। तदग्रिमे च तृतीयकोष्ठे शिरोंकतच्छिरोंकचतुर्थकेत्यंकद्वययोजननिःपन्नपञ्चमाकेन पूरण विधेयम्। सर्वांतिमे च चतुर्थे कोष्ठे एकाकेन पूरणं विधेयम्। एवं चात्र प्रथमकोष्ठस्थैकाकेन षट्कलप्रस्तारे त्रिगुरुयुक्त एको भेद इति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थषष्ठाकेन च तत्र प्रस्तारे द्विगुरुयुक्ताः षड् भेदा इति प्रतीयते।

तदग्रिमतृतीयकोष्ठस्थपंचमाकेन च तत्र प्रस्तारे एकगुरुयुक्ताः पंच भेदा इति प्रतीयते। तदग्रिमचतुर्थकोष्ठस्थैकाकेन च षड्लघुयुक्त एको भेद इति प्रतीयते। कोष्ठचतुष्टयस्थाकचतुष्टययोजननिःपन्नत्रयोदशाकेन च समस्ता पिंडीभूता षट्कलप्रस्तारे सख्या त्रयोदशरूपा प्रतीयते। तत्र प्रथमकोष्ठे च सर्वापेक्षया षष्ठत्वात्समे एकतृतीयेतिपूर्वाकद्वययोजननिःपन्नचतुर्थाकेन पूरण कार्यम्। तदग्रिमे द्वितीयकोष्ठे शिरोंकतच्छिरोंकषष्ठचतुर्थेत्यकद्वययोजननिःपन्नदशमाकेन पूरण कार्यम्। तदग्रिमतृतीयकोष्ठे च शिरोऽकतच्छिरोऽकपचमैकेत्यकद्वययोजननिःपन्नपष्ठाकेन पूरण कार्यम्। अधस्तन कोष्ठचतुष्टय च सप्तकलचतुर्थाकेन सप्तकलप्रस्तारे त्रिगुरुयुक्त भेदचतुष्टयमिति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थदशमाकेन च तत्र प्रस्तारे द्विगुरुयुक्ता दश भेदा इति प्रतीयते। तदग्रिमतृतीयकोष्ठस्थषष्ठाकेन च तत्र प्रस्तारे एकगुरुयुक्ताः षड्भेदा इति प्रतीयते। तदग्रिमचतुर्थकोष्ठस्थैकाकेन च तत्र प्रस्तारे सप्तलघुयुक्त एको भेद इति प्रतीयते। कोष्ठचतुष्टयस्थाकचतुष्टययोजननिःपन्नैकविंशतितमाकेन च समस्ता पिंडीभूता एकविंशतिरूपा सप्तकलमेरुपक्तिः। एवमग्रेऽपि मेरुकल्पना यथेच्छ विधेया। अस्माभिस्तु ग्रन्थविस्तरभयात्प्रयोजनाभावाच्च न लिखिता।

४७. ४८—अथ मात्रापताकानिर्माणप्रकारमाह, उद्दिट्ठा सरि अका इति। उद्दिट्ठा सरि अका—अत्र उद्दिष्टपदस्योद्दिष्टाकपरत्वादुद्दिष्टाकसदृशानकानेकद्वित्रिपचाष्टत्रयोदशादिरूपानित्यर्थः थप्पह—क्रमेणोत्तरोत्तर स्थापयत तान् इति शेषः। वामावत्ते—वामावर्तेन प्रतिलोमविधिना सर्वातिमाकाव्यवहितपूर्वाकमारभ्येति यावत्। लेइ—गृहीत्वा, पर—परस्मिन्, सर्वातिमाके, लुप्पह—लोपयत न्यूनता नयत सर्वातिमेऽके तदव्यवहितपूर्वाकमारभ्य पूर्वपूर्वाकाः क्रमेण लोप्याः, तत्र एकरलोपे—एकलोपे, अत्र एकपदस्यैकाकपरत्वादेकाकलोपे इत्यर्थः, एक्क गुरु जाणहु—एकगुरु जानीत। दुत्तिणिलोपे—द्वित्राणामंकाना लोपे, दुत्तिणि—द्वित्रान् गुरून् जाणहु—जानीत। एकैकपूर्वाकलोपे येंऽका अवशिष्यंते ते एकगुरुयुक्तभेदज्ञापकाः, पूर्वाकद्वयलोपे येंऽका अवशिष्यते ते गुरुत्रययुक्तभेदज्ञापकाः, पूर्वाकत्रयलोपे येवशिष्यते गुरुत्रययुक्तभेदज्ञापका इति निर्गलितार्थः। एव प्रकारेण पिंगल णाग—पिंगलो नागः मत्त पताका—मात्रापताका गावइ—गायति कथयतीत्यर्थः। जो पावइ—यः प्राप्नोति गुरूपदेशाज्जानाति, सो परहि बुझावह—स पर बोधयति इति योजना। अत्र (?) एकत्वसख्याविशिष्टो द्वित्वसंख्याविशिष्टो च पूर्वाङ्कः प्रथम सर्वान्तिमाके लुप्यते तदव्यवहितपूर्वाङ्कमारभ्यतेऽवशिष्टाकाः क्रमेणाधोधः स्थाप्या इति, यदकद्वयलोपे अन्योऽवशिष्यते पूर्वप्राप्तो वाऽकः प्राप्यते तदकद्वयलोपो न कार्य इति नियमत्रय गुरूपदेशादध्यवसेयम्।

अथ षट्कलपताकास्वरू(प)लिखनप्रकारतो वामदक्षिणयोरंगुलपचकपरिमाणमूर्ध्वाध ऋजुरेखाद्वयमर्द्धांगुलमधिक वा मध्यदेशेऽतर विसृज्य कर्तव्य, ततो ऋजुरेखया तत्पार्श्वमेलन विधेयमेवमेक दीर्घ कोष्ठ विधाय तत्रैकागुलपरिमितमतर त्यक्त्वोर्द्ध्वरेखामारभ्याधोरेखापर्यन्त पंच ऋजुरेखाः क्रमेण दत्वा कोष्ठषट्कमुत्तरोत्तर परस्परसश्लिष्ट विधेय, तत्रोद्दिष्टाकसदृशा एकद्वित्रिपचाष्टत्रयोदशेति षडकाः क्रमेण स्थाप्याः। ततो द्वितीयाककोष्ठादधोर्द्धांगुलमितानि परस्परसंश्लिष्टानि पंच कोष्ठकानि कार्याणि, ततः पचमांककोष्ठादधोऽधस्तादशमेव कोष्ठचतुष्टय कार्य, ततः सर्वान्तिमत्रयोदशाकमध्ये तदब्य(व) हिताष्टाकलोपे उर्वरितं पचमाक तत्र चतुर्थकोष्ठे विन्यस्तमेवास्तीति तदन्यत्र लेख्यमिति सप्रदायः। ततः सर्वान्तिमत्रयोदशाकमध्ये क्रमप्राप्तपञ्चमाकलोपे उर्वरितमष्टमाक पञ्चमाकत्रो(को)ष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र क्रमप्राततृतीयाकलोपे उर्वरित दशमाकमष्टमाककोष्ठादधस्तनकोष्ठे स्थाप्य, ततस्तत्र क्रमप्राप्तद्वितीयाकलोपे उर्वरितमेकादशाक दशमांककोष्ठदधस्तनकोष्ठे स्थाप्य, ततस्तत्र क्रमप्राप्तैकाकलोपे उर्वरित द्वादशाकमेकादशाककोष्ठादधस्तनकोष्ठे स्थाप्य, सेयमेकाकलोपनिःपन्नपञ्चकोष्ठात्मिका षट्कलमेरुपक्तितृतीयकोष्ठस्थपञ्चमाकनिर्द्धारितैकगुरुयुक्तत्वस्वरूपपञ्चस्वसख्याकाना षट्कलगणभेदानां पञ्चमाष्टमदशमैकादशद्वादशेतिप्रातिस्विकरूपज्ञापिका षट्कलपताकापक्तिः। ततो द्वयंकलोपेऽष्टमपञ्चमांकयोस्त्रयोदशाकमध्ये लोपः शून्यशेषत्वान्न कार्य इति, सर्वान्तिमत्रयोदशाकमध्ये अष्टमतृतीयेत्यकद्वयलोपे उर्वरित द्वितीयमक तद्द्वितीयकोष्टेऽस्त्येव ततस्त्रयोदशमध्ये अष्टमद्वितीयेत्यकद्वयलोपे उर्वरितं तृतीयाक द्वितीयाकवोष्ठादधस्तनकोष्ठे स्थाप्य ततस्त्रयोदशमध्ये अष्टमैकेत्यकद्वयलोपे उर्वरितं चतुर्थमकं तृतीयांककोष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्त्रयोदशमध्ये पञ्चमतृतीयेत्यकद्वयलोपे प्रथमप्राप्तः पञ्चमाकोऽवशिष्यते इति पञ्चमतृतीयांकयोर्लोपे त्यक्त्वा पञ्चमद्वितीययोर्लोपे अवशिष्टः षष्ठाकश्चतुर्थांककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तत्र पञ्चमैकेत्यकद्वयलोपे अवशिष्टः सप्तमोऽकः पष्ठाककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तत्र पञ्चमैकेत्यकलोपे अवशिष्टः सप्तमोऽकः पष्ठाककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तत्र तृतीयद्वितीयेत्यंकद्वयलोपे अवशिष्टोऽष्टमोऽकः प्रथमप्राप्तोवशिष्यते इति तयोस्तत्र लोप त्यक्त्वा तृतीयैकेत्यकद्वयलोपे अवशिष्टो नवमोऽकः सप्तमाककोष्ठादधस्तनकोष्ठे स्थाप्यः, सेयमकद्वयलोपनिःपन्ना षट्कलमेरुपक्तिद्वितीयकोष्टस्थषष्ठाकनिर्द्धा(रि)तद्विगुरुयुक्तत्वस्वरूपषट्सख्याकाना षट्कलभेदानां द्वितीयतृतीय च(तु)र्थषष्ठसप्तमनवमेतिप्रातिस्विकरूपज्ञापिका षट्कोष्ठात्मिका षट्कलपताकापक्तिः। एवं तत्र प्रथमतृतीयाष्टेत्यकत्रयलोपे उर्वरित एवोऽकः, स च षट्कलमेरुप्रथमकोष्ठस्यैकाकनिर्द्धारितत्रिगुरुयुक्तत्वस्वरूपैकत्वस्या-

कस्य षट्कलभेदस्य त्रिगुरुयुक्तो भेदः प्रथम इति प्रातिस्विकरूपज्ञापकः प्रकोष्ठे ऽस्त्येवेति सर्वमनवद्यम् ।

४९. अथैतावत्संख्याककलाविशिष्टैतावत्सख्याकाक्षरचरणे वृत्ते कति गुरवः कति लघव इति कौतुकात्केनचित्पृष्टे उत्तरप्रकारमाह, पुछलेति । पुछल छंद कला पृष्टच्छंदःकलायाम्, अत्र कलापदस्य कलासख्यापरत्वात्पृ(ष्ट)च्छन्दःकलासख्यायामित्यर्थः । यस्य गुरुलघुजिज्ञासा तत्पृष्ट छदस्तस्य या मात्रासंख्या तन्मध्ये इत्यर्थः । पुछल ( अक ) छद—पृष्ट छदः, अत्रापि छदःपदस्य छदोऽक्षरसंख्यापरत्वात्पृष्टछदोऽक्षरसख्यामित्यर्थः । मेटाव—हीना कुरु । एव करि—( एव ) कृत्वा एव कृते सतीत्यर्थः । अवसिट्ठउ—अवशिष्टा सख्येति शेषः, कलासख्यामध्योर्वरिता संख्येत्यर्थः, गुरु जाणिअहु—गुरोर्ज्ञातव्या, उताव—उर्वरिता गुरुसख्यातिरिक्ता वृत्ताक्षरसख्येति यावत् । लघु जाणिअ—लघोर्ज्ञातव्या । यथा अष्टादश कलाविशिष्टैकादशाक्षरचरणे वृत्ते गुरवो लघवश्चेति पृष्टे, अष्टादशरूपकलासख्यामध्य एकादशरूपाक्षरसख्यालोपे उर्वरिता सप्तसख्या, सा गुरुसख्या ज्ञेया । एकादशाक्षरमध्ये यदि सप्त गुरवस्तदोर्वरिता चतुष्टयसख्या, लघोर्ज्ञातव्या, एवं चैतादृशचरणे वृत्ते सप्त गुरवश्चत्वारो लघव इत्युत्तर देयमिद च वृत्तमिंद्रवज्राख्यमेवमन्यत्राप्यूह्यम् ।

५०. अथैकाक्षरमारभ्य षड्विशत्यक्षरपर्यंतसमस्तवर्णवृत्तपिंडीभूतसंख्यामाह छब्बीसेति । षड्विंशतिः सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारिंशल्लक्षाणि त्रयोदशकोट्यः, एव समग्राणि एकाक्षरादिषड्विंशत्यक्षरपर्यन्तानीत्यर्थः वर्णवृत्तानि भवन्तीति शेषः । मात्रावृत्तानामसंख्यातत्वात्तत्सख्या नोक्ता, वर्णवृत्ताना प्रत्येकसख्या ग्रथविस्तरभयादनतिप्रयोजनत्वाच्चास्माभिरत्र नोक्ता ।

५१. अथ पुरस्ताद्वक्ष्यमाणाना गाहूप्रभृतिसप्तमात्राच्छन्दसां सामान्यतश्चरणचतुष्टयसमुचिता सख्या रड्डावृत्तेनोद्दिशति, होइ गाहू इति । गाहूनामके छदसीत्यर्थः मत्त चौअण—मात्राश्चतुःपचाशत्, होइ—भवति, तह गाहाइ सत्तावणइ—तथा गाथाया सप्तपंचाशत् मात्राः भवतीति पूर्वानुषगः, तेहि—ता गाथां पल्लट्टि—परावर्त्य, गाथायाः पूर्वार्द्धम् उत्तरार्द्धं कृत्वा उत्तरार्द्धं (च पूर्वार्द्धं) कृत्वेत्यर्थः, विग्गाह—विगाथा, किज्जिअइ—क्रियते । अत्र तेहि इत्येकारो ह्रस्वो बोध्यः एओ सुद्धा अ वण्ण मिलिआ वि लहू इत्युक्तत्वात् । उग्गाहउ—उद्गाथा छट्ठिकला षष्टिकला षष्टिः कला मात्रा यस्याः सेत्यर्थः, गाहिणिअ—गाहिन्यां, बासट्ठि—द्विषष्टिः, मत्तह—मात्राः करु—कुरु, तह वि पलट्टिअ—तद्विपरीताया तस्यां गाहिन्याः विपरीतायामित्यर्थः सिंहिणी—सिंहिन्या, वे अग्गल—द्व्यधिका, सट्ठि—षष्टिः

मात्रा इत्यनुषङ्गः, होइ—भवन्ति, अत्र हो इत्योकारः पूर्वोक्तदिशा ह्रस्वो बोध्यः। अत्र क्वचित् तह गाहाइ सत्रा(त्ता)वणी इति, तह विग्गाह पलट्टि किज्जइ इति च पाठः, स रड्डालक्षणविरुद्धत्वादुपेक्ष्यः। खध—स्कधके, मत्त चौ (चउ) सट्ठि—मात्राः चतुःषष्टिर्भवतीत्यनुषंगः। एतानि सत्तरूअ—सप्तरूपकाणि छन्दांसि, अण्णोण्णगुण—अन्योन्यगुणानि, अन्योन्य गुणाः षष्ठजगण नलध्वेकलघु पादांतगुर्वादयो येषां तादृशानीत्यर्थः, भवन्तीत्यनुषङ्गः, इति योजना।

५२. अथ गाहूप्रभृतिसप्तच्छंदःसु सामान्यतो मात्रा उद्दिश्य विशेषतस्तानि लिलक्षयिषुः प्रथम गाहूं लक्षयति पुव्वद्धे इति। यत्र पुव्वद्धे उत्तद्धे पूर्वार्द्धे उत्तरार्द्धे, पअमज्झे—पादयोर्मध्ये पूर्वार्द्धे प्रथमद्वितीयपादयोर्मध्ये, उत्तरार्द्धे तृतीयचतुर्थयोः पादयोर्मध्ये इत्यर्थः। सत्तगल—सप्ताधिकाः, मत्त बीसाई—मात्राः विंशतिः, सप्तविंशतिर्मात्रा इत्यर्थः पततीति शेषः छट्ठमगण—षष्ठो गणः, मेरुअ जुअलाई—मेरोः युगलं, मेरुर्लघुस्तयुगलमित्यर्थः। पूर्वार्द्धे उत्तरार्द्धे च प्रत्येकं गुर्वन्ताः सप्तगणाः स्थाप्यास्तत्र षष्ठस्थाने एको लघ्वात्मको गणः स्थाप्यः, अन्यत्र चतुर्मात्रिक इत्यर्थः, एवं च षण्णा चतुर्मात्रिकगणाना चतुर्विंशतिर्मात्रा एका च मात्रा षष्ठस्थानस्थलघोर्मात्राद्वयं चान्तस्थगुरोरेवमत्र सप्तविंशतिमात्राः पूर्वार्द्धे उत्तरार्द्धे च प्रत्येक पतति, तद्गाहूनामक छद इति निर्गलितार्थः।

५३. गाहूमुदाहरति, चदो इत्ति। चद्रः चंदन हारो मुक्तादाम, एते तावत् रूपं स्वकांति प्रकाशयति। चडेश्वरवरकीर्त्तिः जाव—यावत्, अप्पं—आत्मान स्व, न (ण) णिअंसेइ—न निदर्शति प्रकटयति।

५४. अथ गाथा लक्षयति पढममिति। अत्र पढम—प्रथममाद्यचरण इत्यर्थः बारह मत्ता—द्वादशमात्राः पतंतीति शेषः, या च बीए—द्वितीये चरणे इत्यर्थः, अट्ठारहहिं—अष्टादशभिः मात्राभिरिति शेषः, सजुत्ता—सयुक्ता। यस्याश्च जह पढमं तह तीअ—यथा प्रथमस्तथा तृतीयः चरण इति शेषः, द्वादशमात्रायुक्त इत्यर्थः या च चतुर्थे चरणे इति शेषः दहपञ्चविहूसिआ—पंचदशभिर्मात्राभिरिति शेषः विभूषिता सा गाहा गाथानामकं छद इत्यर्थः।

५५—गाथामुदाहरति जेणेति। येन (जेण) विणा ण जिविज्जइ—येन विना न जीव्यते सः कआवराहोवि—कृतापराधोपि, अणुणिज्जइ—अनुनीयते। एनमेवार्थमर्थांतरन्यासेन द्रढयति पत्ते वीति। पत्ते वि—प्राप्तेऽपि णअरडाहे—नगरदाहे, अग्गी—अग्निः, कस्स ण वल्लहो—कस्य न वल्लभ इति भण—वद, अपि तु सर्वस्यापि वल्लभ इत्यर्थः। मानवतीं काचिन्नायिकां प्रति सखीवाक्यमेतत्। अय च वक्ष्यमाणभेदेषु चूर्णानामको दशमो भेद इति बोध्यम्।

५६—अथ गाथाया मात्रानियममुक्त्वा गणनियममाह सत्तेति । गाहे—गाथाया, सत्तगणा दीहता—सप्तगणाः दीर्घान्ताः दीर्घो गुरुस्तदन्ताः भवति । अत्र विशेषपरोऽपि दीर्घशब्दः सामान्यगुरुपरो ज्ञेयः, एव च पूर्वार्द्धे उत्तरार्द्धे च गुर्व्वन्ताश्चतुर्मात्रिकाः सप्तगणाः कर्त्तव्या इत्यर्थः, इह इत्यग्रेतनस्यानुकर्षः, इह गाथाया छट्ठ—षष्ठः गणः, जो ण लहु—जो जगणः गुरुमध्यः, नलघु लघुयुक्तो नगणो वा भवति, कर्त्तव्येषु गुर्व्वन्तसप्तगणेषु षष्ठो जगणश्चतुष्कलः ( १ ) नगणो वा देय इत्यर्थः । णेह जो विसमे—इह गाथाया विषमे ( प्रथमे ) तृतीये पचमे सप्तमे च स्थान इत्यर्थः यो ( जो ) जगणो गुरुमध्यो न पततीत्यर्थः, तह—तथा, बिअ अद्धे—द्वितीयार्द्धे छट्ठं लहुअ बिआणेहु—षष्ठ गण लघुकम् एकलघुरूप विजानीत, एव च पूर्व नलघुजगणयोरन्यतरदान पूर्वार्द्धाभिप्रायेणेति प्रतीयते, तथा च मध्यलघु ( गुरुः ) गणः लघुसयुक्तो नगणस्त्रिलध्वात्मको वा लगणः पूर्वार्द्धे षष्ठे विधेयः, उत्तरार्द्धे च एकलध्वात्मक एव षष्ठोगणो विधेय इति भावः ।

५७—अथ गाथाया वर्त्तमानषड्विंशतिविधाया समुदितमात्रानियममाह, सव्वाए इति । पुव्वद्धम्मि अ तीसा—पूर्वार्द्धे त्रिंशत् परार्द्धे उत्तरार्द्धे इत्यर्थः सत्ताईसा—सप्तविंशतिः । एव प्रकारेण सव्वाए गाहाए—सर्वस्या गाथाया सत्तावण्णाइ—सप्तपचाशत् मत्ताई—मात्राः होंति भवतीत्यर्थः । पूर्वार्द्धे षष्ठे चतुर्मात्रिकस्य जगणस्य लघुयुक्तनगणस्य वा दानात्त्रिशन्मात्राः पतति, उत्तरार्द्धे च च षष्ठस्थाने एकलध्वात्मकस्यैव गणस्य दानात्तदपेक्षाया मात्रात्रय न्यून भवतीति सप्तविंशतिमात्राः पततीत्यर्थः ।

५८—अथानुपदमेव वक्ष्यमाणेषु प्रथमं भेद लक्ष्मीनामक लक्षयति सत्ताइसेति । जस्सम्मि—यस्या, सल्ला—श्लाघ्याः सत्ताइसा हाराः—सप्तविंशतिर्दीर्घाः गुरव इत्यर्थः, तिण्णि रेहाई—तिस्रो रेखा लघवश्चेत्यर्थः, पततीति शेषः, सा गाहाण—गाथाना मध्ये, आआ—आद्या प्रथमेति यावत्, तीसक्खरा-त्रिंशदक्षरा, लच्छी—लक्ष्मीः, गाहा—गाथा, सा लक्ष्मीनाम्नी गाथेत्यर्थः । अयमर्थः—पूर्व गाथायाः प्रथमचरणे द्वादशमात्रादानमुक्तं, तासा च षड्गुरवो भवति, द्वितीयचरणे अष्टादशमात्रादानमुक्त, तत्र षष्ठस्थानपतितजगणाद्यन्तस्थलघुद्वयवर्जनात्तासामष्टौ गुरवो भवतीति पूर्वार्द्धे चतुर्दश गुरवः, एव तृतीयेऽपि चरणे द्वादशमात्रादानस्योक्तत्वात्तासा षड्गुरवः चतुर्थे च पचदशमात्रा दानस्योक्तत्वात्तत्र षष्ठस्थानपतितैकलध्वात्मकगणवर्जनात्तासा सप्त गुरवः, इति उत्तरार्द्धे त्रयोदश गुरवः, एव पूर्वार्द्धोत्तरार्द्धयोस्सकलने सप्तविंशतिर्गुरवः पूर्वार्द्धजगणाद्यन्तस्थौ द्वौ लघू, उत्तरार्धे च षष्ठस्थैकलघुरेव त्रयो लघवश्चेति त्रिंशदक्षराणि यत्र पतति सा लक्ष्मीनाम्नी गाथेत्यर्थः ।

५९. अथ लक्ष्मीनाम्नीं गाथां स्तौति तीसेति। विक्खाआ—विख्याता, हासइ—ह्रसति, वंकं—वक्रं, गुरुरित्यर्थः। एकैकस्य गुरोर्ह्रासेन लघुद्वयवृद्धिर्बोद्धव्या, अन्यथा ( सप्त ) पंचाशन्मात्राणां नैयत्यं न स्यात्। ताण करेति नामानि एकैकगुरोर्ह्रासे लघुद्वय( यु )क्तस्य च वृद्धौ ये भेदास्तेषां नामानि करोतीत्यर्थः।

६०, ६१. लच्छीति। क्रमानुरोधात्पुनरुपात्तं। खमआ—क्षमा, देही—देवी, राई—रात्रिः, चुण्णा—चूर्णा, महामारी। मनोरमा विश्वासिता। शोभा। तेन षड्विंशतिनामानि, भेदानामपि तावन्मात्रत्वात्। तथाहि, सप्तविंशतिरेव गाहाया गुरवो न त्वधिकाः, तत्रान्तिमौ नियतौ एवं चावशिष्टपञ्चविंशतिगुरूणां भिद्यमानानां पञ्चविंशति भेदाः, एकश्चसर्वगुरुक इति षड्विंशतिरेव भेदाः। एतेन पादान्त्यस्य मात्रापूरणनिर्वाहाय गुरुत्वापादनेऽपि वस्तुगत्या लघुत्वादष्टाविंशतिर्भेदाः इत्यनुरुधाय मानिनी रमा विश्वा वसितेति अष्टाविंशतिनामानि वदन्तः परास्ताः।

अथ प्रथमो भेदो जगणमेवावलंब्य ततो द्वितीयादयश्चतुर्विंशतिर्भेदाः षष्ठे जगणनलघ्वात्मकगणान्यतरदानमवलम्ब्य बोध्याः, अतस्तु षष्ठे नलघुभेदावलम्ब्येति हृदयम्। यत्तु माणी रामेति नामद्वय विधाय एकगुरुपञ्चपचाशल्लघ्वात्मकः सप्तविंशतितमो भेदः कैश्चित्स्वीकृतस्तदनवधानात्। तथाहि यदि षष्ठे जगणो दीयते तदा जगणमध्यस्थ एको गुरुर्दलद्वयांतस्य च गुरुद्वयमावश्यकमिति एको गुरुर्न सभवत्येव, यदि च षष्ठे नलघ्वात्मकगणो दीयते तदापि दलद्वयान्तस्थगुरुद्वयस्यावश्यकत्वादेको गुरुर्न सभवत्येवेति। षड्विंशतिरेव भेदा न सप्तविंशतिरिति सुधीभिर्विभावनीयम्। यदपि माणी रामेति एक नाम विधाय गाहिनीति नाम लेखकप्रमादात्पतितमिति, लक्ष्म्याद्यास्त्रिगुर्वं(क) पचाशल्लघ्वात्मकान्त्याः पञ्चविंशतिरेव भेदा नाम न च तु षडविंशतिमिति, तदप्यनवधाननिबन्धनं यतः षष्ठ नलघुरूपगणदानेनान्त्ये चावश्यकगुरुद्वयदानेन निराबाध सम्भवतो द्विगुरुत्रिपञ्चाशल्लघ्वात्मकस्य षड्विंशतितमस्य भेदस्य त्यागो नौचित्यमावहतीत्यलमितिविस्तरेणेत्य स्मत्तातचरणोपदिष्टः पथाः सुधीभिर्विभावनीयः।

६२. अथ गाथापठनप्रकारमाह पढममिति। अत्र चीश(ब्द)स्त्वर्थः, तथाच पढम ची—प्रथमं तु, गाहा—गाथा, ( हसपअ )—हंसपदं, जाआ—यथा मंथरमित्यर्थः, तथा मंथर इति शेषः सर्वत्र योज्यः, बीए—द्वितीये चरणे, सिंहस्य विक्कमं—सिंहस्य विक्रमो यथा, तीए—तृतीये चरणे, गअवरलुलिअ गजवरलुलिअ गजेन्द्रगमनमित्यर्थः यथा, चउत्थए—चतुर्थे चरणे, अहिलुलिअ—अहिलुलित सर्पगतिविशेष इति यावत् यथा।

६३. अथ समस्थानेऽपि जगणदाने गाथाया गुणदोषावाह—एक्के जे इति।

एक्के जे कुलवती—एकस्मिन् जगणे सति कुलवती होइ—भवति गाथेति शेषः । यथोक्तषष्ठस्थानस्थजगणमात्रेण समीचीना गाथा भवतीति, तदतिरिक्तो जगणः समस्थानेऽपि न कर्त्तव्य इति भावः । वे णाअक्केण—द्विनायकाभ्या द्वाभ्या जगणाभ्यामिति यावत्, संगहणी—सगृहिणी भवतीति पूर्वेणान्वयः, द्वाभ्या नायकाभ्या परस्परं गृहीता कामिनी न सतां समता तथेयमपीति, जगणद्वयमत्र न देयमी(मि) ति भावः । णाअकहीना(णा) रडा—नायकेन जगणेन हीना रहिता, षष्ठे स्थाने नलघुयुक्तेत्यर्थः रडेव रडेत्यर्थः, तथा च यथा नायकेन हीना कामिनी न शोभते तथेयमपीति, बहुधा षष्ठो जगण एव देय इति भावः । वहुणाअका(का)—बहुनायका बहवो नायका जगणा यस्याः सा तादृशीत्यर्थः, वेश्या होइ—भवति । तथाच यथा वेश्या सतामनादरणीया तथेयं, बहवो जगणा न देया इति भावः ।

६४. अथ वर्णभेदेन गाथाया जातिभेदमाह तेरहेति । तेरह लहुआ-त्रयोदशलघुकाक्षराख्या गाथेत्यर्थः सर्वत्र योज्यं, विप्पी—विप्रा भवतीति शेषः, एआइसेहिं—एकचत्वारिंशद्भिरेकविंशद्भिर्वेत्यर्थः लघुभिरिति शेषः खत्तिणी—क्षत्रिया भणिता । सत्ताईसे—सप्तविंशतिभिर्लघुभिर्वेसी—वैश्या भणितेति पूर्वेणान्वयः, सेसा—शेषा, अनुक्तलघुसख्याका सुद्दिणी होइ—शूद्रा भवतीत्यर्थः ।

६५. अथ विषमस्थानस्थजगणदोषमाह, जा इति । जा पढम तीअ पंचम सत्तम ठाणे—या प्रथमे तृतीये पञ्चमे सप्तमे च स्थाने, ण—ननु निश्चयेनेति यावत्, गुरुमज्झा—गुरुमध्यो जगणस्तद्युक्तेति यावत् , होइ—भवति, सा गाहा—गाथा गुणरहिता, गुव्विणिए—गुर्विणीव दोष प्रकाशयति । तथाच विषमे गाथाया जगणो न देय इति भावः ।

६६. अथ विगाथा लक्षयति विग्गाहेति । विग्गाहा पढम दले—विगाथा-प्रथमदले पूर्वार्द्धे इति यावत्, सत्ताईसाई मत्ताई—सप्तविंशतिर्मात्राः भवतीति शेषः, पच्छिमदले—पश्चिमदले उत्तरार्द्धे इत्यर्थः, ण—ननु निश्चयेनेत्यर्थः, तीसा—त्रिंशन्मात्रा भवतीति पूर्वेणान्वयः, इअ—एव पिगलेन नागेन जपिअ—जल्पितम् । अय भावः । पूर्वे विपरीतगाथा विगाथा भवतीत्युक्ते, तथाच गाथा(या) उत्तरार्द्धम् एव पूर्वार्द्धम् अग्रे देयमित्युक्तं भवति, अतएव पूर्वार्द्धे सप्तविंशतिर्मात्रा उत्तरार्द्धे त्रिंशन्मात्रा उक्ताः एव चात्रापि पूर्वार्द्धे षष्ठो गण एकलघ्वात्मको देय उत्तरार्द्धे च षष्ठो गणो जगणो नलघ्वात्मको वा देयः, विषमे च जगणो न देय एवेति सुधीभिर्बोध्यम् ।

६७—विगाथामुदाहरति परिहरेति । णीवस्य—नीपस्य कदम्बस्य कुसुमानि पेक्खहि—प्रेक्षस्व । किं तावतेत्यत आह तुज्झ कए इति । खरहिअओ—कठिन-

हृदयो निर्दय इति यावत् कामो—कामः, धणुहि—धनुषि गुडिआ गुटिका, यद्वा-गुडिआधणुहि इत्येकं पद, तस्य वटिकाधनुः गुटिकायुक्ता ( क्त ) धनुरित्यर्थः। गुलेल इति लोके; गेण्हइ—गृह्णाति, अतो मान परिहरेत्यर्थः।

६८—उद्गाथा लक्षयति पुव्वद्धे इति। यत्र पु ( व्व ) द्धे उत्तर्द्धे—पूर्वार्द्धे मत्ता तिसत्ति—मात्राः त्रिशत् सभणिआ—संभणिताः, हे तु ( सु )भग शिष्य। सो—तत् पिंगल कइ दिच ( ट्ठ )—पिंगलकविना दृष्ट, सट्ठि मत्तगो—षष्टिमात्राणं पष्टिमात्रात्मकशरीरमित्यर्थः, उग्गाहो वुत्तो—गुग्दा ( उद्गा ) थावृत्तम्। गाथा-पूर्वार्द्धं दलद्वयेऽपि देयमिति भावः।

६९—उद्गागाथामुदाहरति सोऊणेति। हे सुमुहि—सुमुखि। जस्स णाम—यस्य नाम सोऊण—श्रुत्वा अंसू—कर्तृभूतानि णअणाइ—नयने कर्मणी रुधेइ—रुधति, अतस्तस्य चेइपइणो—चेदिपतेः मुह—मुख जहिच्छ—यथेच्छ कह—कथ, पेक्खामि—पश्यामि इति त्व भण—कथय।

७०—अथ गाहिनीं सिंहिनीं लक्षयति पुव्व इति। मुद्धिणि—हे मुग्धे यत्र पुव्वद्धे तीस मत्ता—पूर्वार्द्धे त्रिशन्मात्रा भवतीति शेषः, उत्तद्धे बत्तीसा—उत्तरार्द्धे द्वात्रिशन्मात्रा भवतीति पूर्वणा( न्व )यः, सा गाहिणि—गाहिणी ( नी )ति पिंगल पभणेइ—पिंगलः प्रभणति त्व मुणेहि—जानीहि, अत्र तामिति शेषः। तथा च ता गाहिनीं विवरीअ—परावर्त्य विपरीता कृत्वेति यावद् सिंहिणी—सिंहिनीं सत्य निस्संशय भण—कथय॥ अय भावः, पूर्वं सामान्यतो गाहिन्या द्विषष्टिमात्रा ऊक्तास्तत्र पूर्वार्द्धे कियत्य उत्तरार्द्धे कियत्य इति शिष्य-जिज्ञासाया पूर्वं पूर्वार्द्धे त्रिशन्मात्रा उत्तरार्द्धे द्वात्रिंशन्मात्रा इत्युक्तमेव च पूर्वार्द्धे गाथाया इवास्या अपि कर्त्तव्या उत्तरार्द्धे द्वात्रिंशन्मात्राया उक्तत्वात्तत्र षष्ठ जगणं कृत्वा चतुर्मात्रिका अष्टौ गणा वक्ष्यमाणस्कधकवत्कर्त्तव्या इति गाहिनी-व्यवस्था। सिंहिन्या च षष्ठ जगण दत्वाष्टौ चतुर्मात्रिका गणाः पूर्वार्द्धे देया उत्तरार्द्धे च गाथाप्रथमदलवद्विधेयमिति निर्णय इति सुधीभिर्ध्येयम्।

७१—तत्र गाहिनीमुदाहरति मुचहीति। हे सुदरि पाअ—पाद मुचहि—मुच हे सुमुखि हसिऊण—हसित्वा मे—मह्य मम वा खग्ग—खड्ग अप्पहि—अर्पय, मेच्छसरीरं—म्लेच्छशरीर, कप्पिअ—कर्त्तयित्वा हम्मीरो—हम्मीरः तुह—तव वअणाइ—वदन पेक्खइ—प्रेक्षते। युद्धार्थं सनद्धस्य हम्मीरस्य खड्गा-नयनार्थमागतवतः प्रतिरोध कुर्वाणा काता प्रत्येतद्वाक्यम्, एवं च म्लेच्छान्निर्जित्य मया अक्षतेनैव झटित्यागत्य भवत्या दर्शन विधेयम्, म्लेच्छतो वटीभीतिर्मम वा उग्रामे मरणशका न विधेयेति भावः।

७२—अथ सिंहिनीमुदाहरति बरिसईति। णीसक—निश्शकः जग्गतो—जाग्रत् महाजागरूक इत्यर्थः, साहसको—साहसाको विक्रमादित्यः, कण (अ) ह विट्ठि—कनकस्य वृष्टि बरिसइ—वर्षति, अथच दिआणिस—अहोरात्र, भुवने जगति तप्पइ—तपति, अतः इद—इंद्र च सूरबिंब—सूर्यबिंब च, णिंदइ—निंदति। इद्रो जलं वर्षति महातापसेभ्यः साशकश्च, सूर्यश्च दिवैव तपत्यजागरुकश्च, अयं तु कनक वर्षति निश्शकश्च, सर्वदा च तपति जागरुकश्चेति तौ निंदतीति भावः।

७३—अथ स्कधक लक्षयति चौमत्तेति। पुव्बद्धे उत्तद्धे बि—पूर्वार्द्धे उत्तरार्द्धेऽपि, समरुआ—समरूपाः सम षष्ठजगण तद्रूपं येषा तादृशा इत्यर्थः। यत्तु सम षष्ठजगणनलध्वन्यतरत्कमिति तन्न, अत्र नलघुदानासंभवात्। इद चानुपदमेव व्यक्तीभविष्यति। चौमत्ता अट्ठ गणा—चतुर्मात्रिका अष्टौ गणाः होंति—भवति, तत् बहुसभेआ—बहुसभेदक बहवो वक्ष्यमाणाः सप्तविंशतिविधभेदा यस्य तत्तादृश खधहा (आ)—स्कधक बिआणहु—विजानीत इति पिंगल पभणेइ—पिंगलः प्रभणति, मुद्धि—हे मुग्धे। अत्र उत्तद्ध इति तकारः सयुक्तपरोऽपि लघुर्बोध्यः, कत्थवि सजुत्तपरो इत्युक्तेः अन्यथात्र षष्ठे पचमात्रापत्या जगणासभवाल्लक्षण न सगच्छते, एतत्तत्वं पुनर्भेदप्रकारावसरेऽनुपदमेव विवेचयिष्यामः।

७४—स्कधकमुदाहरति ज जमिति। हणुआ—हनुमान्, रविरहचक्कपरिधसाणसह—रविरथचक्रपरिघर्षणसह ज ज—य य गिरिं पर्वतं, आणेइ—आनयति, त त णलो—नलः वामकरत्थभिअं—वामकरोत्तभित, लीलाइ—लीलया अनायासेन, समुद्दे—समुद्रे, रएइ—रचयति॥

७५. अथ पुरः सप्तविंशतिभेदानयनप्रकार विवक्षुः रड्डावृत्तेन प्रथमं तावन्नामानि सख्या चाह। नद इति। नंदः १—भद्रः २—शेषः ३—सरग—सारगः ४—शिवः ५—ब्रह्मा ६—वारणः ७—वरुणः ८—णीलइ—नीलः ९—मणणतलक—मदनताडकः १०—शेखरः ११—शरः १२—गगनं १३—शरभः १४—विमतिः १५—क्षीरं १६—नगर १७—नरः १८—स्निग्धः १९—स्नेहलः २०—मदवलः २१—लोलः २२—शुद्धः २३—सरिः २४—कुम्भः २५—कलशः २६—शशी २७—इति हि शरभशेषशशधराः प्राकृतवयः खधाए—स्कन्धके, सत्ताइस—सप्तविंशतिः णाम—नामानि, मुणह—जानीत॥ क्वचित्तु णाम इत्यत्र जाण इति पाठस्तत्र विजेयइत्यर्थस्तदा नामद्वैविध्य परिहार्यम्। अत्र क्वचिदट्ठाइस खधाए इति पाठः, स तु लेखकप्रमादाज्जातः, एतदनुरोधेन

च मनद ( मदन ) स्ताटंक इति नामद्वयं विधाय त्रिगुर्वष्टपचाशल्लघ्वात्मकमष्टाविंशतिभेद वदति, तदपि भ्रमविलसित, क(त)स्य गाथाभेदत्वादत्रापि षष्ठो जगणो दलद्वये देयः, अन्ते च गुरुरेव स्थाप्य इति एकैको गुरुः (ज)गणस्य एकैकश्चान्त्य इति मिलित्वा प्रतिभेदं दलद्वये गुरुचतुष्टयमावश्यकम्, एवं च त्रिंशद्गुरवश्चत्वारो लघवश्च यत्र पतति स आद्यो भेदः, चत्वारो गुरवः षट्पचाशल्लघवश्च यत्र पतति स चरमो भेद इति त्रिगुरूणामसमवात् सप्तविंशतिरेव भेदा न त्वष्टाविंशतिरिति, ताश्च भेदाननुपदमेव स्पष्टीकरिष्यामः। चैतस्य गाथाभेदत्वे उत्तरार्धे षष्ठो गण एकलघ्वात्मक एव स्यादिति वाच्यम्, उद्गाथावदत्रापि षष्ठे जगणस्थापने बाधकाभावात्। ननु तथापि तद्वदत्रापि षष्ठो गणो नलघ्वात्मक एव स्यादिति पादान्तस्थगुरुयुगस्यैवा(व)श्यकत्व न तु जगणान्तर्गतस्येति प्रतिभेद कथ गुरुचतुष्टयस्यावश्यकत्वमिति चेत्तन्न, द्विगुरुषष्टिलघ्वात्मकैकोनत्रिंशत्तमभेदापत्ते— र्नलघुदानस्य सर्वथा निषेधात्। अतएव गाथामध्योदितसप्तगणदाननियमादत्र तद्भगेऽपि यथा नापी (पि) विशेषत्वहानिस्तथान्तिमगुरुद्वयस्यैवावश्यकत्व न पादान्तस्थस्य, तथा च त्रिगुरुसत्वेऽपि तथाविधगुरुद्वयवत्त्वस्याबाधान्न त्रिगुर्वष्टपञ्चाशल्लघ्वात्मके भेदे किंचिद्बाध(क) मस्तीत्यपास्त द्विगुरुषष्टि(ल)घ्वात्मकभेदापत्तेः उर्वरि(त)त्वात्। किं च गाहिनीसिंहिन्योरुत्तरार्द्धपूर्वार्धयोरिवात्रापि गुर्वन्तसप्तगणनियमभगेना(ने)य विशेषत्वहानिर्भवति भवति च दलद्वयान्तस्थगुरुद्वयनियमभगे सर्वत्र उद्गाथादौ दलद्वयान्तस्थगुरुद्वयनियमदर्शनात्, एव चैतस्यावश्यकत्वे त्रिगुर्वष्टपञ्चाशल्लघ्वात्मको भेदः खपुष्पकल्प एवेति, न च तथापि, दलद्वयेपि षष्ठो जगण एव न देयः किन्तु एकत्र जगणः परत्र नलघुः एव जगणस्य एको गुरुः पादान्तस्थं गुरुद्वयमिति प्रतिभेद गुरुत्रयमावश्यकमित्थं च यत्र षड्लघवः एकोनत्रिंशद्गुरवश्च पतति स आद्यो भेदः, यत्र च त्रयो गुरवोऽष्टपंचाशल्लघवश्च पतति सोऽन्तिमश्चेदिति तथाविधे भेदे न किं(चि) द्बाधकमस्त्यस्ति च तथाविधम् इति वाच्यम्, चौलहु कत्थवीति विरोधात्, उदाहरणे च दलद्वयेऽपि जगणस्यैव दर्शनात्, पूर्वं समरूपाश्चतुर्मात्रिका अष्टौ गणा देया इति लक्षणोक्तविरोधश्च, यतः समरूपत्व तेषा तदैव निर्वहति यदि पूर्वार्द्धे यो गणः षष्ठ उत्तरार्द्धेऽपि स एव स्यादिति, पूर्वोक्तभेदापत्त्या चैकत्र तदावश्यकत्वे परत्रापि तस्यैवोचितत्वात् दीयता वा षष्ठे जगणः अपरत्र चतुर्लघुः ( लघव ) क्रियता चानेनैन प्रकारेण भेदास्तथापि भवदुक्तरीत्या प्रस्तारक्रियया त्रिगुर्वष्टपचाशल्लघ्वात्मको भेदः सप्तविंशतितम एवायाति न त्वष्टाविंशतितम इत्यस्मत्तातचरणैरुपदिष्टः पथास्सुधीभिर्विभावनीयः।

७६. अथ सप्तविंशतिभेदानदा(य)नप्रकार दोहावृत्तेनाह। चौ लहु कत्थवीति।

सहि—सखि, जहि—यत्र, चउ लहु—चत्वारः लघवः, कत्थवि—कुत्रापि, पसर—प्रसरति सो णदउ जाण—तं नट जानीहि, यदि गुरु टुट्टइ गुरुस्त्रुटति ह्रसतीत्यर्थः, बिबि लहु बढइ—द्वौ लघू वृद्धिं प्राप्नुत इत्यर्थः, तदा त त णाम बिआण—तत्तत् भद्रादिक नाम जानीहि। अयमर्थः—पूर्वोक्तप्रकारेण दलद्वये षष्ठ जगणमेव दत्वा चतुर्मात्रिका अष्टौ गणाः प्रतिदल विधेयाः, एव च गाथावदत्रापि प्रथमचरणे द्वादशमात्राः स्थाप्यास्तासा षड्गुरवः, द्वितीयचरणे पचचतुर्मात्रिकाणा सत्वात्तेषा विंशतिर्मात्रास्तासा च षष्ठजगणाद्यतर्गतलघुद्वय विहाय नवगुरवो भवन्ति, तदेव प्रथमदले पचदशगुरवो द्वौ लघू, एव द्वितीयदलेऽपि, तथाच द्वयोर्दलयोर्मिलित्वा यत्र त्रिंशद्गुरुः षष्ठजग(ण) द्वयातर्गताश्चत्वारो लघवः पतति, स नदः प्रथमभेदः, यदि च त्रिंशद्गुरुषु एकैकगुरुह्रासेन तत्समानमात्राक लघुद्वय वद्धते तदा भद्रादयो भेदा भवन्ति, ते च प्रदर्श्यंते लिखित्वा।

७७. अथ नदाख्यं स्कन्धकभेदमुदाहरति चंदेति। चदा—चद्रः, कुदा—कुन्दः, कासा—कासः, हारा—हारो मुक्तादाम, हीरा—हीरक, तिलोअणा—त्रिलोचनः कर्पूरगौर इति यावत्, केलासा—कैलासः पर्वतः इत्यादीनीति शेषः जेत्ता जेत्ता सेत्ता—यावति (यावति) श्वेतानि, तेत्ता—तावंति, हे कासीस—काशीपते दिवोदास, ते तव कित्ती—कीर्त्या जिणिआ जिजा(ता) नि, एतेभ्योपि त्वदीया कीर्त्तिरतिधवलेति भावः।

७८. अथ द्विपथा लक्षयति तेरहेति। पढमपादे, तेरह मत्ता—त्रयोदश मात्राः, देह—देहि, इद च क्रियापद सर्वत्रान्वेति, पुनः द्वितीयचरणे इत्यर्थः, तेरह—त्रयोदश मात्रा देहीति पूर्वेणान्वयः, चतुर्थचरणे इति शेषः एआरह—एकादश मात्रा देहीति तेनैवान्वयः, एह—एतद् दोहा लक्खण—द्विपथालक्षणम्॥

७९. द्विपथामुदाहरति सुरअरु इति। सुरतरुः कल्पवृक्ष इत्यर्थः, सुरही—सुरभिः कामधेनुरित्यर्थः, परसमणि—स्पर्शमणिः, एते इति शेषः वीरेस समाण—वीरेशसदृशा नहि। तत्र हेतुमाह ओ वक्कल इति। ओ—सः सुरतरुरित्यर्थः वक्कल ओ कठिणतणु—वल्कलः वल्कलमय इति यावत् अथ च कठिनतनुः ओ पसु—सा सुरभिः पशुः विवेकरहिता। ओ पासाण—स स्पर्शमणिः पाषाणः जड इति भावः, वीरेश्वरस्तु मृदुचित्तः विवेकी महाबुद्धिरिति तेभ्यो विलक्षण इति भावः।

८०. अथैतद्भेदान् रड्डावृत्तेनाह भमरु इतिः—भ्रमरः १—भ्रामरः २—शरभः ३—सरचाण—श्येनः ४—मडूकः ५—मर्कटः ६—करभः ७—नरः ८—मरालः ९—मदकलः १०—पयोधरः ११—चलः १२—वानरः १३—

त्रिकलः १४—कच्छप: १५—मत्स्यः १६—सदूल—शार्दूलः १७—अहीवर—अहिवरः १८—व्याघ्रः १९—विरालः २०—शुनकः २१—तह—तथा उंदुरः २२—सर्पः २३—इति, यदा गुरु टुट्टइ—गुरुस्त्रुटति ह्रसतीत्यर्थः, बे लहु—द्वौ चढइ—वर्द्धते, तदा तं त—तत्तत् भ्रमरादिक णाम—नाम, बिजाण—विजानीहि पमाण—प्रमाण निश्चितमित्यर्थं ।

८१. अथैनमेव प्रस्तारप्रकार दोहावृत्तेन विशदीकरोति छव्वीस इति । बाइस (स)—द्वाविंशतिः, गुरु—गुरवः, चारि—चत्वारः, लहु—लघवः, एव छव्वीसक्खर—षड्विंशत्यक्षराणि, भमर हो—भ्रमरे भवति, बे लहु बढइ—द्वौ लघू वर्द्धते, तदा तद्भ्रामरादिकं नाम बिआरि—विचारय जानीहीत्यर्थः अथमर्थः—पूर्व्वं द्विपथायाः प्रथमचरणे त्रयोदशमात्राणामुक्तत्वाद् तासा च प्रथम षट्कल पुनश्चतुष्कलः पुनस्त्रिकलः स्थाप्य इति उट्टवनिकाप्रकारस्य वक्तव्यत्वादेकलघुः प्रथमचरणे त्रिकलातर्गत आवश्यकः, अन्यथा त्रयोदशमात्राणामसंभवापत्तेः, एव द्वितीयचरणे एकादशमात्राणामुक्तत्वात्तासा च प्रथमं षट्कलस्ततश्चतुष्कलस्तत एककलः स्थाप्य इति उट्टवनिकाप्रकारस्य वक्ष्यमाणत्वात्तत्राप्येको लघुरावश्यकः, एव तृती(य) चतुर्थयोरप्येकैको लघुरावश्यक इति लघुचतुष्टय प्रतिभेदमावश्यकमेव च प्रथमचरणे द्वादशमात्राणा षड्गुरवस्त्रयोदशमात्रात्मकश्चैको लघुरेव द्वितीयचरणे दशमात्राणा पञ्च गुरव एकादशतममात्राकश्चैको लघुरेवं पूर्वदले एकादश गुरवो द्वौ लघू, एव त्रयोदशाक्षराणि पतति, एव परदलेऽपि इति द्वाविशतिगुरवश्चत्वारश्च लघवो यत्र पतति(तत्र) भ्रमरः। अत्र षड्विंशत्यक्षरात्मके भ्रमरे च यत्रैको गुरुर्न्यूनो भवति पूर्वभेदस्य लघुचतुष्टयेनैकीकृत्य तत्समानमात्रासख्याक च लघुद्वय वर्द्धते, एवमेकविंशतिर्गुरवः षड्लघवः यत्र पतति, स भ्रामरः। एव पूर्वभेदापेक्षया उत्तरत्र भेदे एक गुरु न्यून कृत्वा लघुद्वयमधिक कृत्वा ते ते भेदा वाच्याः, ते लिखित्वा प्रदर्श्यते ।

८२. अथैतेषु भेदेषु आद्य भ्रमरनामक भेदमुदाहरति जा अद्धङ्ग इति । जा अद्धङ्गे पव्वई—यस्यार्द्धाङ्ग पार्वती, सीसे गगा जासु—शीर्षे गगा (यस्य) जो—यो, देवाना वल्लभः, तासु पाअ—तस्य पादौ, वदे—नमस्करोमि ।

८३. अथ वर्णभेदेन द्विपथाया जातिभेदमाह, (बारह) लहुआ—द्वादशलघुका द्विपथेति शेषः, विप्पी—विप्रा भवतीति शेषः, तह बाईसेहिं—तथा द्वाविशतिभिर्लघुभिरिति शेषोऽग्रेऽपि योजनीयः खत्तिणी भणिआ—क्षत्रिया भणिता, बत्तीस—द्वात्रिंशद्भिर्लघुभिः वेसी—वैश्या होइ—भवति । जा इअरा—या इतरा अनुक्तलघुसंख्याका सा सुद्दिणी होइ—शूद्रा भवति ॥

८४. अथ द्विपथाया गणविशेषपुरस्कारेण दोषमाह जस्सेति । जस्सा—यस्याः द्विपथायाः, पढमहि—प्रथमे, पाअ—पादे, तथा तीए—तृतीये, पाए—पादे, ण—ननु, निश्चित, जगणा—मध्यगुरुका गणाः दीसति—दृश्यते, सा चडालह घर रहिआ—चण्डालगृहस्थिता, दोहा—द्विपथा दोष पआसेइ—प्रकाशयति ॥ तथा च दोहाप्रथमतृतीयचरणयोर्जगणो न देय इति भावः ।

८५. अथ द्विपथाया उट्टवनिकामाह चक्कलु इति । आदौ छक्कलु—षट्-कलः, ततः चक्कलु—चतुष्कलः, ततश्च त्रिकलः, एमपरि—अनया परिपाट्या बिसम—विषमे चरणे गण इति शेषः, पलति—पतति, सम पाअहि—समे पादे द्वितीये चतुर्थे चेत्यर्थः । अन्ते षट्कलचतुष्कलयोरंते इत्यर्थः एक्ककलु—एककलः पततीति शेषः, इमभति—एव प्रकारेण, दोहा—दोहा, ठेवि—स्थापय । एक्क-कलु अत्र एको ह्रस्वः । अयमर्थः—विषमचरणयोस्त्रयोदशमात्राणां सत्वात्प्रथम षट्कलमात्रास्ततः चतुष्कलस्ततत्रिकल एव त्रयोदश मात्राः स्थाप्याः, समचरणयोश्च प्रथम षट्कलस्ततश्चतुष्कलस्तत एककल एवमेकादश मात्राः स्थाप्या इति ।

८६. अथ रसिकानामक वृत्त लक्षयति । दिअवरगणेति । हे मिअणअणि—मृग-नयने, गअगमणि—गजगमने, दिअवरगण धरि जुअल—द्विजवरगणस्य चतुर्लघु-युक्तगणस्य युगले स्थापय, पुणविअ—पुनरपि च द्विजवरयुगलानतर चेत्यर्थः, तिअलहु पअल—त्रीन् लघून् प्रकटय, इम विहि—एव विधिना छउ पअणि—षट्पदेषु प्रत्येकमिति भावः, एअ(ह)दह कल—एकादश कलाः, विहु—विधेहि विरचयेत्यर्थः, एह(अ) रसिका, जिम—यथा, रअणि—रजन्यां, सुससि—पूर्ण-श्चंद्रः, तथा सुहइ—शोभते । यत्र एकादशमात्रा एव षट्चरणानि यस्याः सा रसि-केति फलितार्थः ।

८७—रसिकामुदाहरति विमुहेति । अचलः कश्चिद्राजा हअ गअ बल—हय-गजबलानि, परिहरिअ—परिहृत्य, रण—रणे विमुखः सन्, चलिअ—चलितः पलायित इत्यर्थः, किंच जस जसु तिहुअण पिअइ—यस्य यशः त्रिभुवन पिबति सोऽपीति शेषः, मलअणिवइ—मलयनृपतिः, हलहलिअ—हलहलितः, किंच वरणसि णरवइ—वाराणसीनरपतिः दिवोदास इत्यर्थः, लुलिअ—लुलितः पराङ्मुखीभूत इति यावत् । अत तस्य राज्ञः सकलोपरि यशः स्फुरितम् ॥

८८—अथैतस्या नामान्तरकथनपूर्वक भेदानयनप्रकारमाह आईति । उकच्छ मह—उकच्छामध्ये उकच्छापरपर्यायरसिकामध्ये इति यावत्, सारु—सार-भूता, लोहगिणि—लोहागिनी, आइकव्व—आदिकाव्यं प्रथमभेदः किउ—कृत । गुरुर्वर्द्धते द्वौ लघू ह्रसतः, तदा त त—तत्तद् वक्ष्यमाण नाम विआरु—विचारय॥

अत्र उक्कच्छेति रसिकायाः पर्यायः, रसिकात्व च सर्वभेदावृत्ति। तथा च लक्ष्मीत्यादिवत् लोहागिनीत्वादि व्याप्य, रसिकात्व गाथात्वमिव व्यापक बोध्यम्।

८९—अथ नामान्याह लोहगिणीति। लोहगिणि—लोहागिनी, हसीआ—हसिका, रेखा, ताडकिनो, कंपिनी, गभीरा, काली, कालरुद्राणी इति उक्कच्छाया अष्टौ भेदा इत्यर्थः॥

९०—अथ प्रस्तारक्रममाह लोहगिणीति। सव्वलहु—सर्वलघुः सर्वे षट्पादस्था षट्षष्ट्यपि वर्णा लघवो यस्या सा इत्यर्थः, लोहागिनी भवतीति शेषः जत्थ—यत्र, एक्क—एकः, गुरु—गुरुः, होइ—भवति सा हंसी। एव यथा यथा वर्द्धते हारः गुरुः, तथा तथा यत्र यत् नाम, तत्र तत् नाम ज्ञेयमित्यर्थः। अय भावः—यत्र षट्षष्टिर्लघवः सा लोहागिनी, यत्रैको गुरुश्चतुःषष्टिर्लघवः सा हसी, यत्र द्वौ गुरु द्विषष्टिर्लघवः सा रेखा, एवं पूर्वभेदापेक्षया यथा उत्तरत्र भेदे एको गुरुर्वर्द्धते, लघुद्वय च य( अ ,वहीयते, तथा भेदा बोध्याः, ते च लिखित्वा प्रदर्श्यते।

अत्र यद्यपि नवमादयोऽप्यन्ये त्रयोविंशतिर्भेदाः सभवति बाधकाभावात्तथापि ते ग्रथकृता नोक्ताः, वस्तुतस्तु तेऽपि सुधीभिरूहनीयाः तत्र च त्रिंशद्गुरवः षट् लघवो यत्र भवति सोऽतिमो भेद', प्रतिच ( रण ) मेकादशमात्राणामुक्तत्वादेकादशतम एको लघुरवश्य प्रतिचरणमतेऽपेक्षित इति बोध्यम्। अत्र कचित् जत्थ गुरु चारि होइ सा हंसीति पाठश्च—यत्र गुरुचतुष्टय भवति सा हंसी, एकगुरुमारभ्य यावत् गुरुचतुष्टय वर्द्धते तावत्पर्यंतं भेदचतुष्टय हसीसंज्ञकमित्यर्थः। अत्रायमाशयः। यत्र चरणषट्के षट्षष्टिर्लघवः पतति सा लोहागिनी, यत्रैको गुरुश्चतुःषष्टिर्लघवः****।

यत्र च षड् गुरवश्चतुःपंचाशल्लघवः यत्र सप्त गुरवः द्विपचाशल्लघवः*** एते चत्वारो भेदा रेखासंज्ञकाः २। यत्र च नव गुरवः अष्टचत्वारिंशल्लघवः, यत्र दश गुरवः षट्चत्वारिंशल्लघवः, यत्र चैकादश गुरवः चतुश्चत्वारिंशल्लघवः, यत्र च द्वादश गुरवः द्विचत्वारिंशल्लघवः एषा च चतुर्णां ताडकिनी सज्ञा ३। यत्र त्रयोदश गुरवः चत्वारिंशल्लघवः, यत्र च चतुर्दश गुरवः अष्टत्रिंशल्लघवः, यत्र च पचदश गुरवः षट्त्रिंशल्लघवः, यत्र च षोडश गुरवः चतुस्त्रिंशल्लघवः, एषा चतुर्णां कपिनी संज्ञा ४। यत्र सप्तदश गुरवः द्वात्रिंशल्लघव', यत्र चाष्टादशगुरवस्त्रिंशल्लघवः, यत्रैकोनविंशतिर्गुरवः अष्टाविंशतिर्लघवः, यत्र विंशतिर्गुरवः षड्विंशतिर्गुरवः ( लघव ), एषा चतुर्णां गभीरा सज्ञा ५। यत्रैकविंशतिर्गुरवः चतुर्विंशतिर्लघवः, यत्र द्वाविंशतिर्गुरवो लघवश्च, यत्र त्रयोविंशतिर्गुरवः विंश-

तिर्ल्लघवः, यत्र च चतुर्विंशतिर्गुरवः अष्टादश लघवः, एषां चतुर्णां काली सञ्ज्ञा ६। यत्र पंचविंशतिर्गुरवः षोडश लघवः, यत्र षड्विंशतिर्गुरवः चतुर्दश लघवः, यत्र सप्तविंशतिर्गुरवः द्वादश लघवः, यत्र षड्विं ( अष्टाविं ) शतिर्गुरवः दश लघवः, एषां चतुर्णां कालरुद्राणी संज्ञा। अत्रैकगुरुवृद्धिमारभ्यागुरुचतुष्टयवृद्धि प्रथमभेदकरणादुत्तरोत्तरभेदानामपि तथैव विधानमुचितमित्यष्टौ भेदा बोध्याः। अत्रैकोनत्रिंशद्गुर्वष्टलघुयुक्तः त्रिंशद्गुरुषड्लघुयुक्तश्चैतद्भेदद्वयम् अन्यदपि सम्भवति बाधकाभावात्, ग्रन्थकृता तन्नोक्त, वस्तुतस्तु तदपि बोध्यम्। अथवा एतदपि भेदद्वय कालरुद्राणीमध्ये पातनीयम्, एवं च कालरुद्राण्याः, षड्भेदा बोध्याः। अथवा यत्र चत्वारो गुरवः अष्टपचाशल्लघवः सा हसी, यत्राष्टौ गुरवः पचाशल्लघवः सा रेखा, यत्र द्वादश गुरवः द्विचत्वारिंशल्लघवः सा ताडकिनी, यत्र षोडश गुरवः चतुस्त्रिंशत् लघवः सा कालरुद्राणी, अत्र प्रथम गुरु-चतुष्टय-र्द्धनादुत्तरत्रापि तस्यैव ( व )र्द्धनमुचितमिति लोहागिनीसहिता अष्टौ भेदा बोध्या इत्यस्मत्तातचरणोपदिष्टः पथा निर्मत्सरैः सुधीभिर्विभावनीयः॥

९१. अथ रोलावृत्त लक्षयति पढम इति। यत्र पढम—प्रथमे चरणे, इदं च द्वितीयादीनामप्युपलक्षक, गुरु अतर जुत्ते—अतरा गुरुयुक्ता मध्ये गुरुसयुक्ता इत्यर्थः चउबीस मत्त—चतुर्विंशतिर्मात्राः, होहिं—भवंति, सेस नाग—शेषनागः, पिंगलोऽभूत्, तेन्ह रोला उत्ते—तेन रोला उक्ता, एग्गाराहा हारा—एकादश हारा द्विलघुयुक्ता इति शेषः, त्रयोदशाक्षरगणम(स्या)ग्रे वक्ष्यमाणत्वात्, रोला छंदो-रोलाच्छंदसि प्रतिचरणमित्यर्थः, जुज्जइ—युक्ता भवतीत्यर्थः, एक्के एक्के—एकैकः गुरुरिति शेषः, टुट्टइ—त्रुटति ह्सतीत्यर्थः, अण्णो अण्णो—अन्यः अन्यः लघु-रित्यर्थः, बढ्ढइ—वर्द्धते, तथाचात्र प्रतिचरणमेकादश गुरवो लघुद्वययुक्ताः पतति, तत्र चैकैकगुरुह्रासेन लघुद्वयवृद्ध्या द्वादशभेदा भवन्तीत्यर्थः। एतल्लक्षणनिष्कर्षः। यथैतस्योदाहरणे सगतिस्तथानुपदमेव विवेचयिष्यामः।

९२. रोलामुदाहरति पअभरेति। यदा गअजूह सजुत्ते—गजयूथसयुक्तः हमीर-वीरः, कोहे चलिअ—क्रोधेन चलितः, तदा धरणि—धरणिः, पअभर दरमरि—पादभरेण दलिता वेगधावद्धस्तिहयपत्तिप्रभृतिसेनासमूहचरणघातेन दलितेत्यर्थः, तरणि रह धुल्लिहि झंपिअ—तरणिरथः धूलिभिः प्रयाणोत्थरेणुभिश्छादितः, कमठपिट्ठ टरपरिअ—क(म)ठपृष्ठमधस्तात् गत, मेरु मदर सिर कपिअ—मेरु-मदरशिरः कपित, मेछहके पुत्ते—म्लेच्छानामपि पुत्रैः, कट्ठ—कष्ट यथा स्यात्तथा, हाकद—हाक्रदः, किएउ—कृतः मुच्छि—मूर्छित च। अत्र किएउ इत्येकारः एओ सुद्धा बि इत्युक्तत्वाल्लघुर्बोध्यः, अन्यथा पचविंशतिमात्रापत्तिः॥

९३. अथैतद्भेदानयनप्रकारं तेषां च नामानि रड्डावृत्तेनाह, कुन्द कर-

अलेति। जेहि—येषु, एग्गारह गुरु—एकादश गुरवः, एवभूतानि, तेरह अक्ख (र)—त्रयोदशाक्षराणि। ज—यत्र, पलइ—पतति, त्रयोदशाक्षरमध्ये एकादश चेत् गुरवस्तदोर्वरितमक्षरद्वय तल्लघुरूपमित्यर्थाक्षिप्त, तथाच द्विलघुयुक्ता एकादश-गुरवः एवं प्रतिचरण यत्र त्रयोदशाक्षराणि पततीत्यर्थः, तेषु यदि अक्खर अक्खर अक्षरमक्षरमेकैको गुरुरित्यर्थः, ज चलइ—यत्र चलति ह्रसतीत्यर्थः, तत्र कुद, १—करतल २—मेघः ३, ताडकः २, कालरुद्रः, ५, कोकिलः ६, कमल ७, इदुः ८, शभुः ९, चामर १०, गणेश्वरः ११, सहस्राक्षः १२, इति, त त—तत्तत् नाम, कुणेहि—कुरु इति नागराजः फणीश्वरः शेषः पिंगलः, जपइ—जल्पति इति, भणिअ—भणित पूर्वाचार्यैरिति शेषः। इदमत्र तत्वम्—रोलाया चतुर्विंशतिर्मात्राः प्रतिचरण देया इत्यावश्यकं, तत्र प्रकारद्वयेन सभवति, लघु-द्वययुक्तैकादशगुरुदानेन, यथेच्छ गुरुलघुदानेन वा। एवं च पूर्वं लक्षणद्वयं कृत-मिति बोध्यं, तथाहि पढमेति पूर्वार्द्धेनैकं, एग्गाराहा हारा इत्युत्तरार्द्धेन च द्वितीय। तत्र यदि यथाकथचिच्चतुर्विंशतिर्मात्रा अतरा अंतरा गुरुयुक्ताः क्रियते, तदा रोला-वृत्त भवतीति प्रथमलक्षणार्थः। यदि च लघुद्वययुक्तैकादशगुरुभिश्चतुर्विंशतिर्मात्रा-क्रियन्ते, तदापि रोलावृत्तं, भवतीति द्वितीयलक्षणार्थः। तत्र पअभर इत्युदा-हरण प्रथमलक्षणाभिप्रायेण, भेदानयनप्रकारश्च द्वितीयलक्षणाभिप्रायेण प्रदर्शित-मित्यवधेयम्।

एवं च यत्रैकादश गुरवः अते च द्वौ लघू, एव त्रयोदशाक्षराणि चतुर्विं-शतिर्मात्राश्च प्रतिचरण पतंति सः कुदः, यत्र दश गुरवः एव चतुर्द्दशाक्षराणि चतुर्विंशतिर्मात्राश्च प्रतिचरण पतति सः करतलम्, एव पूर्वभेदापेक्षया उत्तरत्र भेदे एकगुरुन्यूनक्रिया लघुद्वयमेकाक्षरं च वर्द्धते तदा ते ते भेदा ज्ञेयाः, ते लिखित्वा प्रदर्श्यंते।

यद्वा पूर्वोक्तमेकमेव लक्षण, तत्र च कथमंतरातरागुरुयोगः कर्त्तव्य इत्यपेक्षाया-माह एग्गाराहा हारेति, तथा च द्विलघुयुक्तैकादशगुरुषु एकैकगुरुह्रासेन लघुद्वय-वृद्ध्या अतरातरा गुरुयोगश्च कर्त्तव्य इति भावः। न चैव सत्युदाहरणासगति-रिति वाच्यमव्यवहितपूर्वोक्ते रसिकानामके वृत्ते इवात्रापि भेदकरणात्।

तथाहि यत्र चरणचतुष्टयपिंडीभूताश्चतुश्चत्वारिंशद्गुरवः अष्टौ लघवः, यत्र च त्रयश्चत्वारिंशद्गुरवो (दश लघवः), यत्र च द्विचत्वारिंशद्गुरवो द्वादश लघवः, यत्र च एकचत्वारिंशद्गुरवश्चतुर्द्दश लघवः, एषां चतुर्णां कुंदसज्ञा। एव चत्वा-रिंशद्गुरुषोडशलघुकमारभ्य सप्तत्रिंशद्गुरुद्वाविंशतिलघुकपर्यंतं चतुर्णां करतलसज्ञा २। एव षट्त्रिंशद्गुरुचतुर्विंशतिलघुकमारभ्य त्रयस्त्रिंशद्गुरुत्रिंशल्लघुपर्यंतं चतुर्णां मेघसंज्ञा ३। एवं द्वात्रिंशद्गुरुद्वात्रिंशल्लघुकमारभ्य एकोनत्रिंशद्गुरु—

अष्टत्रिंशल्लघुकपर्यंत चतुर्णां ताडकसंज्ञा ४ । एवमष्टाविंशतिगुरुचत्वारिंशल्लघुकमारभ्य पचविंशतिगुरुषट्चत्वारिंशल्लघुपर्यंत चतुर्णां कालरुद्रसज्ञा ५ । एव चतुर्विंशतिगुरुअष्टचत्वारिंशलघुकमारभ्य एकविंशतिगुरुचतुःपचाशल्लघुकपर्यंत चतुर्णां कोकिलसज्ञा ६ । एव विंशतिगुरुअष्टपचाशल्लघुकमारभ्य सप्तदशगुरुद्विषष्टिलघुकपर्यंत चतुर्णां कमलसज्ञा ७ । एव षोडशगुरुचतुःषष्टिलघुकमारभ्य त्रयोदशगुरुसप्ततिलघुकपर्यंतं चतुर्णां इदुसज्ञा ८ । एव द्वादशगुरुद्विसप्ततिलघुकमारभ्य नवगुरुअष्टसप्ततिलघुकपर्यंतं चतुर्णां शम्भुसज्ञा ९ । एवमष्टगुरु-अशीतिलघुकमारभ्य पचगुरुषडशीतिलघुकपर्यंत चतुर्णां चामरसंज्ञा १० । एव चतुर्गुरुअष्टाशीतिलघुकमारभ्य एकगुरुचतुर्णवतिलघुकपर्यंत चतुर्णां गणेश्वरसज्ञा ११ । एवं सर्वलघुः सहस्राक्षः १२ । इत्थ च भेदानयनप्रकारः ।

जेहि—येषु एग्गारहगुरु—एकादशगुरुकः द्वौ लघू, एव—भूतानि जं—यत्र तेरह अक्खर—त्रयोदशाक्षराणि पलइ—पतंति, इत्थं यत्र चरणचतुष्टये द्विपचाशदक्षराणि स्थापयित्वेति शेषः, अक्षरमक्षर एकैको गुरुः यावद्गुरुचतुष्टय ह्रसति तदा कुदादि तत्तन्नाम कुरु इति व्याख्येयम् । एव द्वा ( एक ) विंशतिगुरुयुक्तं पअभरेत्युदाहरण कोकिलाख्यषष्ठभेदाभिप्रायमिति सर्वं सुस्थमित्यस्मत्तातचरणोपदिष्टः पंथाः सुधीभिर्विभावनीयः ।

कश्चित्तु***त्रयोदशगुरु १ ल(?) कालरुद्रः, यथाष्टौ गुरवोऽशीतिर्लघवः स कोकिलः, यत्र सप्त गुरवो द्व्यशीतिर्लघवस्तत्कमलं, यत्र षड् गुरवश्चतुरशीतिर्लघवः स इंदुः, यत्र पच गुरव. षडशीतिर्लघवस्तच्चामर यत्र त्रयो गुरवो नवतिर्लघवः स गणेश्वरः, यत्र गुरुद्वयं (द्वि) नवतिर्लघवः स सहस्राक्षः, यत्रैको गुरुश्चतुर्णवतिलंघवः स शेषनामा त्रयोदशतमो भेदः, इत्थं भेदानयनस्य ग्रन्थादनुपलब्धेः, यतः प्रतिचरण लघुद्वययुक्तैकादशगुरुषु चरणचतुष्टयसमुदितचतुश्चत्वारिंशद्गुरुषु वा एकैकगुरुह्रासेन लघुद्वयवृद्धया भेदानयनं ग्रन्थस्वारस्येन प्रतिपत्तेः, न तु त्रयोदशगुरुषु स्वेच्छया । इत्थ यथाकथंचित् षण्णवतिमात्रामवलम्ब्य भेदकरणे विंशतिर्गुरवः षट्पचाशल्लघवस्तेषु एकैकगुरुह्रासेन विंशतिर्भेदा आयाति । एव त्रिंशद्गुरवः (रुषु) षट्त्रिंशद्गुरुषु वा एकैकगुरुह्रासेन लघुद्वयवृद्धा भेदानयन ग्रन्थस्वारस्येन प्रतिपत्तेः न तु त्रयोदशगुरुर्त्रिशद्भेदा (?) भवति । एव यथाकथचित्तावन्मात्रामात्रपूरकतावत्तावद्गुरुलघ्वापादनेन यथारुचि तावत्तावद्भेदापत्तेर्दुर्वारत्वात्, त्वदुक्तरीत्या चतुर्दशतमभेदापत्तिरपि दुर्वारा, तस्मात्रैको गुरुरावश्यको येन गुरुराहित्येन गाथाया मिवात्राप्यनिष्टमापद्येत उदाहरणासगतिश्च स्पष्टैवेति विभावनीय वक्ष्यमाणकाव्यच्छन्दसश्चास्यायमेव भेदः यत्काव्ये लघुद्वय जगणान्तर्गत मध्ये पतति, अत्र तु यथेच्छमिति ॥

९४. अथ गधाननामकं वृत्त लक्षयति दहसत्त अणेति। हे सुअणा—सुजनाः पढमपअ—प्रथमपादे दहसत्त—सप्तदश अण—वर्णान् भणह—भणत, तह—तथा बीअंमि—द्वितीयेऽपि, जमअजुअचरणा—यमकयुते चरणे, अठारहइ—अष्टादशैव वर्णान्, भणतेति पूर्वेणान्वयः। एरिसिअ बीअ दल कुणहु—एतादृशमेव बीअ दल—द्वितीयं दलम् उत्तरार्द्धमिति यावत् कुणहु—कुरुत, तृतीयचरण सप्तदशवर्णयुक्त चतुर्थं चाष्टादशवर्णयुक्तमिति यावत्। इअ—इदं, पण्डिअजण चित्तहरो—पडितजनचित्तहर, गधाण णाम—गधाननामकं वृत्तं होइ—भवति इति पिंगलो—पिंगलः भणइ—भणति ॥

९५. अथ गधानकमेव दोहावृत्तेन स्पष्टयति दहसत्तक्खरेति। पढमचरण—प्रथमचरणे, गधाण—गंधानस्य, दहसत्तक्खर—सप्तदशाक्षराणि सठवहु—संस्थापयत, बिअ—द्वितीये चरणे, अक्खर—अक्षराणि पुनः, अठ्ठारहइ—अष्टादशैव, जमअ देइ—यमक दत्वा, बिआण—विजानीहि।

अत्र च वर्णनियम एव न तु मात्रानियम इति बोध्यम् ॥

९६. अथ गधानमुदाहरति कण्ण चलन्ते इति। चक्कवइ—चक्रवर्तिनि कण्ण—कर्णे चलन्ते—चलति सति, कुम्म चलइ—कूर्मश्चलति, कुम्म चलन्ते—कूर्मे चलति सति, असरणा—अशरणा कूर्मचलनादधिष्ठानरहितेति भावः, भुअण भअ कारणा—भुवनभयकर्त्री पुणवि—पुनरपि महि चलइ—मही चलति, महिअ चलन्ते—मह्या चलन्त्या, (महिहरु)—महीधरः मेरुः चलतीति पूर्वेणान्वयः। सामान्यवचनमपि महीधरपद विशेषपर बोध्यम्। तेहि—यस्मिन् महीधरे चलति सति, सुरअणा—सुरगणश्चलति, मेर्वधिष्ठानत्वात् सुरगणस्येति भावः एव जेह चक्क—यथा चक्रं तथा तिहुअणा—त्रिभुवनं चलति। अत्र जेह इति एकारो लघुर्वाच्यः (?) ॥

९७. अथ चतुःपादिका लक्षयति चउपइआ इति। पाएहि—पादे एकैकचरणे इत्यर्थः, चउमत्ता—चतुर्मात्रिकान्, (गणसत्ता)—गणान् सप्त, सगुरु करि—सगुरून् कृत्वा, गुरुयुक्तान् सप्तचतुर्मात्रिकान् गणान् विधायेत्यर्थः, एव तीस मत्ता धरि—त्रिंशन्मात्रा धृत्वा, चउपइआ छन्दा—चतुःपादिकाछन्दः, फणिंदा—फणींद्रः पिंगलः भणइ—भणति। तत्र विशेषमाह चउछन्देति इद वृत्त चतुश्छन्दांसि ले किज्जइ—गृहीत्वा क्रियते, एक्क—एक छन्दः गृहीत्वा ण किज्जइ—न क्रियते, वृत्तचतुष्टयेनैकं पद्य विधेयं, न त्वेकेनैव वृत्तेन। तथाच षोडशचरणैरिद कर्तव्य, न तु चतुर्भिश्चरणैरिति भावः। एवं चात्रेति शेषः, चउसअ असिअ—चतुश्शतमशीतिश्च मात्रा इति शेषः, णिरुत्ता—निरुक्ताः कथिता इत्यर्थः,

मिअणअणि—हे मृगनयने, एहु भेअ—एत भेदं, को जाणइ—कः पिंगलातिरिक्तः जानाति, एअ ( ठ )—एतच्छदः ( अमिअ )—अमृततुल्यमित्यर्थः, पआसइ—प्रकाशते इति कइ— ( कविः ) पिंगलो भाषते। अत्र चतुर्मात्रिकसार्द्धसप्तगणात्मकचरण चतुर्गुणीकृ ( त्वे )त्यर्थः एकश्चरणो विधेयः, एवं चत्वारश्चरणा विधेया इति फलितार्थः ॥

९८. चतुःपादिकामुदाहरति जसु सीसहि इति। जसु सीसहि गगा—यस्य शीर्षे गगा शोभितेति शेषः, यश्च गोरि अधगा—गौर्यर्द्धागः गौरी अर्द्धांगे यस्य तादृश इत्यर्थः, गिव पहिरिअ फणिहारा—ग्रीवापरिधृतफणिहारः ग्रीवाया परिधृताः फणिहारा येन तादृश इत्यर्थः, कठट्ठिअ वीसा—कठस्थितविषः, पिंधणदीसा—दिक्पिंधनः दिक् पिंधनमाच्छादन यस्य स इत्यर्थः, सतारिअ ससारा—सतारितः ससारः येन च, किरणावलिकदा—किरणावलिकदः, बदिअ—वंदितः चदा—चद्रः भाले धृत इत्यर्थः, यस्य च णअणहि—नयने तृतीये नेत्रे अणल फुरंता—अनलः स्फुरन्नस्तीति शेषः, सो—सः भवाणीकता—भवानीकातः शिवः, तुह्म—युष्मभ्य संपअ दिज्जउ—सपदं दद्यात्, बहु सुह किज्जउ—बहु सुख कुरुतात्। अत्र एक एव चरण उदाहृतः, एतादृशा अन्ये त्रयश्चरणाः सुधीभिः स्वयमुदाहरणीयाः ॥

९९. अथ घत्तानामकं वृत्त लक्षयति पिंगल कइ इति। वे वि पाअ—द्वयोरपि पादयोः, तिण्णि तिण्णि लहु—त्री( न् त्रीन् ) लघून्, अत धरि—अते पदात इति यावत् धरि—धृत्वा, चउमत्त सत्त गण—चतुर्मात्रिकान् सप्त गणान् भण—कथय, एव बासट्ठि मत्त—द्विषष्टिर्मात्राः करि—कृत्वा, छद उकिट्ठउ—छदस्सूत्कृष्टा, पिंगल कइ दिट्ठउ—( पिंगलकवि ) दृष्टा, घत्त—घत्ता जानीहीति शेषः। अयमर्थः—घत्ता द्विपदी, तत्र चतुर्मात्रिकसप्तगणानतरं लघुत्रय प्रत्येक विधेयमिति।

१००. अथ घत्तायां यतिनियममाह पढममिति। ( पढम )—प्रथम, दह वीसामो—दशसु मात्रासु विश्रामः, बीए—द्वितीये स्थाने अठ्ठाइ मत्ताइ—अष्टसु मात्रासु विश्राम इति पूर्वेणान्वयः, तीए—तृतीये तेरह—त्रयोदशसु मात्रासु, विरई—विरतिः, एवं घत्ता—घत्तायां मत्ताइ बासठ्ठि—मात्राः द्विषष्टिः भवंतीति शेषः। यतिकथ( न ) क्रमेणैकत्रिंशन्मात्रा लभ्यते, ताश्च द्वयोर्दलयोः प्रत्येकं देया इति सभूय द्विषष्टिमात्रिका घत्ता भवतीति भावः ॥

१०१. अथ घत्तामुदाहरति रणदक्खेति। येन रणदक्ख—रणदक्षः सग्रामकुशल इति यावत्, दक्ख—दक्षः, हनु ( णु ) —हतः, येन च कुसुमधणु—

कुसुमधन्वा कदर्पः जिएणु—जितः, यश्च अधश्र गध बिणासकरु—अघगध-विनाशकरः, गिरिणाअरि अद्धग धरु—गिरिनागर्यंद्धांगधरः गिरिनागरीं पार्वतीं अर्द्धांगे धरति यस्तादृश इत्यर्थः, असुरभअंकरु—असुरभयंकरः, स शंकरः रक्खउ—रक्षतु मामिति शेषः ।

१०२. अथ घत्तानद लक्षयति सो घत्तह कुलेति । यत्र प्रथम एआरह—बीसाम—एकादशसु मात्राष्विति शेषः, अग्रेऽपि योजनीयः, बीसाम—विश्रामः, पुणवि—पुनरपि द्वितीये तृतीये च स्थाने इत्यर्थः, सत्त तेरह—सप्तसु मात्रासु त्रयोदशसु मात्रासु च, बिरइ—विरतिर्भवतीति शेषः, ( सो— ) तत् घत्तहकुलसार ( रु )—घत्तानामकं यद्वृत्तं तज्जातिश्रेष्ठमित्यर्थः, णंदउ णाम—नंदनामक वृत्त विद्धि इति शेषः । इति किति अपार—अपार कीर्त्तिर्नागराजः पिंगलः कहइ—कथयति ।

१०३. अथ घत्तानंदगणनियममाह छक्कलु इति । आइहि—आदौ छक्कलु-षट्कल गण, सठवहु—संस्थापयत, ततश्च तिण्णि चउक्कल—त्रीन् चतुष्कलान् देहु—ददत, ततश्च पचक्कल—पंचकलं, चउकल जुअल—चतुष्कलयुगल च ददतेति पूर्वेणान्वयः, एवं घत्तानंदं मुणह—जानीध्वं । घत्ताघत्तानदयोश्च विश्राम-मात्रकृत एव भेद इति अत्रापि लघुत्रयमते देयमिति बोध्यम् ॥

१०४. अथ घत्तानदमुदाहरति, यो वंदिअ इति । जो—यः, सिरगग—शिरोगगया शिरःस्थितया गंगया इत्यर्थः, वंदिअ—वंदितः नमस्कृत इत्यर्थः । अथवा येन शिरसि गगा वदितेति । येन अणग—कामः हणिअ—हतः, यश्च अद्धगहि—अर्द्धांगे परिकर धरणु—परिकरं कलत्र धृतवान्, सो—सः, जोईजण मित्त—योगिजनमित्रं, सकाहरु—शंकाहरः, संकर चरणु शंकरचरणः, वो (दुरित्त—) दुरित हरउ—हरतु ॥

१०५. अथ षट्पदनामकवृत्त लक्षयति । छप्पअ छंद इति । हे छइल्ल—छइल्लाः विदग्धाः, अक्खरसजुत्तउ—अक्षरसयुक्तं वक्ष्यमाणप्रकारेण द्व्यशीत्यादि-वर्णयुक्तमिति यावत्, छप्पअ छद—षट्पद छदः सुणअ—शृणुत । तत्र यतिनि-यमपूर्वकं गणनियममाह, एआरहेत्यादिना । तत्र विरइ—विरतिः, एआरह—एकादशसु मात्रासु भवतीति शेषः, त पुणु—ततः पुनः णिम्भंतउ—निर्भ्रांत यथा स्यात्तथा तेरह—त्रयोदशसु मात्रासु विरतिर्भवतीति पूर्वेणान्वयः, तथा च चरणे चतुर्विंशतिर्मात्राः भवन्तीति भावः, पढम—प्रथमे च चरणे इद चोपलक्षण, द्वितीये तृतीये चतुर्थेऽपि बोध्य, वे मत्ता धरि—द्वे मात्रे धृत्वा संस्थाप्येत्यर्थः, मज्झट्ठिअ—मध्येस्थिता मध्ये प्रथमस्थमात्राद्वयांतस्थद्विलघ्वोरन्तराले स्थिता इत्यर्थः, पच चउ

चउकल—चतुश्चतुःकलाश्चतस्रः चतस्रः कला मात्रा येषु तादृशाश्चतुर्मात्रिका इति यावत् गण—गणाः किज्जइ—क्रियते, त पुणु—ततः पुनः हेट्ठ—अधस्तात्पादाते इति यावत्, बिएणवि लहु—लघुद्वयं दिज्जइ—दीयते, ततः पादचतुष्टयानंतरम्, उल्लाल—उल्लालः वक्ष्यमाणलक्षणं उल्लालनामक वृत्तं दीयते इति पूर्वेणान्वयः। तत्र च उल्लाल वे भिरइ—द्वे विरती यतिस्थानद्वयमित्यर्थः, प्रथमं पण****लघुद्वय स्थाप्यमेवमेकैकचरणे चतुर्विंशतिर्मात्रा विधाय चरणचतुष्टयं विधेयमनंतर च उल्लालपादद्वयं देयमिति षट्पदं छंदो भवतीति। अतो लघुद्वयमेव देयमिति न नियमः काव्यपादेषु तथाऽदर्शनादिति बोध्यम्।

१०६. अथ षट्पदमुदाहरति पिंधिअ दिढ सएणाह—दृढसंनाहं पिंधिअ—पिधाय, बाह उप्पर—बाहोपरि पक्खर देइ—वाणवारणं दत्वा, बधु समदि—बन्धून्सभाव्य, साहि हम्मीर बअण लेइ शाहहमी ( र ) वचन गृहीत्वा, रण धसिअ—रणे प्रविश्य, पक्ख ( र ) पक्खर—वाणवारणेन वाणवारणं, स्वकवचेन प्रतिपत्ताणा कवचमित्यर्थः, ठेल्लि—त्रोटयित्वा, पेल्लि—नोदयित्वा, उड्डुउ—उड्डीयमानः सन्, णहपह—नभःपथे भमउ—भ्रमामि, अरि सीसहि—अरिशिरसि, खग्ग—खड्ग डारउ—पातयामि, पव्वह अप्फालउ—पर्वतानह स्फालयामि (क्रोधानलमध्ये जलउ—ज्वलामि, हम्मीरकज्ज यामि ( ? ) उल्लंघयामीति यावत्। किं च सुरताणसीस करवाल देइ—खड्गेन तस्य शिरश्छित्वेति यावत्, मह—अह, कोहाणल मह—क्रोधानलमध्ये जलउ—ज्वलामि, हम्मीरकज्जं—( ह )मीरका( र्या )र्थाय, कलेवर तेज्जि—कलेवर शरीरं त्यक्त्वा, दिअ चलउ—दिव गच्छामि इति जज्जलः। ***हमीर***

१०७ अथ षट्पदमेव प्रकारातरेण लक्षयति। पअ पअ तलह इति। यत्र आइहि छक्कलु होइ—आदौ षट्कलो भवति, ततः चारि चउकल( उ )—चत्वारश्चतुःकला णिवुत्तउ—निरुक्ताः, अत—पादाते, दुक्कलु—द्विकलः निबद्धः, एव यत्र पअ पअ तलह णिबद्ध—पदपदतले प्रतिचरणतलमित्यर्थः निबद्धाः मत्त चउबीसहि—मात्राश्चतुर्विंशतिः किज्जइ—क्रियते, तत उल्लालहि सहिअ—उल्लालेन सहितम् अते उल्लालपादद्वययुक्तमित्यर्थः, सेस कइ वत्थु णिरुत्तउ—शेषकविना वस्तु निरुक्तम्। एतदेव वस्तु इति नामांतरेणोक्तमित्यर्थः। इति गुणहु—गुणयत जानीतेत्यर्थः। इअ छंद—इदं छंदः, अक्खर डंबर—सरिस—अक्षराडम्बरसदृश सुश्राव्यवर्णसमुल्लसितगौडीरीतिमदित्यर्थः, चेद्भवतीति शेष', तदा छ ( सु ) द्ध भणिज्जइ—शुद्ध भण्यते। अत्र च बावण सउ बि मत्तह—द्विपचाशत्शतमपि मात्राः काव्यपादचतुष्टयस्य षएणवतिरुल्लालपादद्वयस्य च षट्पंचाशदेवमुभयोर्मिलित्वा द्विपचाशदधिक शतं मात्रा इत्यर्थः, मुणहु—जानीत,

छप्पअ छंद—षट्पदच्छंदः, एरिसि बि होइ—एतादृशमपि भवति, काइ गंथ गथि—किमर्थं ग्रथग्रथि बिमरह—विमृशत । इद च पूर्वोक्तलक्षणेनैव गतार्थत्वाद् क्षेपकमिवाभातीति बोध्यम् ॥

१०८. अथैतदुदाहरति जहा सरअ ससि बिंबेति । यथा शरत्—शशिबिंब, यथा हरहारहसस्थितिः, हरः—कर्पूरगौरः, हारो—मौक्तिकदाम, हसाः—पक्षिविशेषास्तेषा स्थि(ति) रित्यर्थः, जहा फुल्ल सिअ कमल—यथा फुल्लमित-कमल पुण्डरीकमिति यावत्, जहा खड किअ—खडीकृतः, सिरि खड—श्रीखंडश्चदनमित्यर्थः, जहा गग कल्लोल—यथा गगाकल्लोला महोर्मय इत्यर्थः, जहा रोसाणिअ रुप्पइ—यथोज्ज्वलित रूप्य, जहा दुद्ध वर सुद्ध फेण फफाइ तलप्फइ —यथा दुग्धसाम्य कीर्त्तेः कविसंप्रदायविरुद्ध शीतत्वेनैव कीर्तिवर्णनस्योचितत्वात् तथापि श्वैत्यमात्रे तात्पर्य्यं न तदशेऽपीति भावः, तप्तीभूय भाडादुद्गतः, दुग्धफेनश्चातिश्वेतो भवतीति तथोक्तिः । पुणः ( न ) यथा पिअ पाअ पसाए दिट्ठि—प्रियप्राप्तप्रसाददृष्टिः प्रियस्य प्राप्ता प्रसाददृष्टिर्येन स तादृश इत्यर्थः, तरुणिजण—तरुणिजनः णिहुअ हसइ—निभृत हसति, तत्थ—तथा तव कित्ति—कीर्त्तिं देक्खि —प्रेक्ष्य, वरमत्ति—वरमते चडेश्वर महाराज, हरिर्ब्रह्मा भणति । ब्रह्मेति वदिनामुपनाम जातिविशेषो वा, तथा च ब्रह्मजातीयस्तदुपनामको वा हरिनामा भवतीत्यर्थः ।

१०८क. अथ पूर्वोक्तमेव दोहावृत्तेनोपसंहरति चारि पाअ इति। चारि पाअ—चत्वारः पादाः, कव्वके भण—काव्यस्य भण, बेबि पाअ उल्लाल—द्वावपि पादा', उल्लालस्य भणेति पूर्वेणान्वयः, इम—एव, बिहु लक्खण—द्वे लक्षणे एक्क कइ—एकं कृत्वा पढ, एष छप्पअ पत्थर—षट्पदप्रस्तारः ॥

१०९. अथ षट्पदोपयोगिकाव्यलक्षणमाह आइ अत इति । यत्र आदौ अते, दुइ छक्कलउ—द्वौ षट्कलौ भवतः इति शेषः, एक आदौ एकः अते इत्यर्थः, मज्झ्भ—मध्ये आद्यतस्थयोः षट्कलयोरतराले इत्यर्थः, तिण्णि तुरगम—त्रयस्तुरगमास्त्र(य) श्चतुःकलाः भवतीति शेषः, तत्र तीए—तृतीये स्थाने द्वितीय—चतुःकल इत्यर्थः जगणो मध्यगुरुर्गणः किंवा विप्रगणश्चतुर्लघुकोगणः कर्तव्यः, तत् कव्वह लक्खण—काव्यस्य लक्षण, बुज्झ्ह—बुध्यता ॥ अयमर्थः, प्रथम षट्कलस्ततस्त्रयश्चतुष्कलास्ततश्च षट्कलः एव प्रतिपाद पच गणाः कर्त्तव्यास्तेष्वेव च प्रथमषट्कला·········त्रये तृतीयो गणो जगणो विप्रो वा विधेयः, एव च तृतीये विप्रश्चेद्दीयते तदा सर्वलध्वात्मकोऽपि काव्यभेदो भवति, यदि च जगणो दीयते तदा तु न तृतीयस्थजगणांतर्गतस्य एकैकगुरोः प्रतिचरणमावश्यकत्वात्सर्वगुर्वात्मकस्तु न

भवति च, जगणपक्षे तृतीयस्य गणाद्यतस्थस्य लघुद्वयस्य प्रतिचरणमावश्यकत्वादिति, विप्रपक्षे च चतुर्लघूना प्रतिचरणमावश्यकत्वादिति सुधीभिर्विभावनीयम् ।

११०. अथ वक्ष्यमाणेषु काव्यभेदेषु शक्रनामक भेद लक्षयन् भेदान( यन )-प्रकारमाह चउ अग्गलेति । चउ अग्गल चालीस गुरु— चतुरधिकचत्वारिंशद्गुरु काव्यपादचतुष्टय चतुश्चत्वारिंशद्गुरु इति यावत्, एक्कक्के गुरु लेइ— एकैक गुरु गृहाण न्यून कुरु, एव कृते च जो गुरुहीणउ—यो गुरुहीनः एकैकगुरुह्रासेन द्विलघुवृद्ध्या क्रियमाणेषु भेदेषु यः सर्वलघुरित्यर्थः भवतीति शेषः, सो स ( क्क—स ) शक्रः । तत्र च एकैकगुरुवृद्ध्या लघुद्वयह्रासेनेति शेषः, णाम ग्गहण कुणेहु—नामग्रहण शभ्रादिभृगातमिति भावः कुरुष्व । अय भावः —तृतीये जगणदानपक्षे प्रथमपट्कलस्य गुरुत्रयं द्वितीयचतुष्कलस्य गुरुद्वयं, तृतीयचतुष्कलस्य जगणस्वरूपत्वात्तस्यैको गुरुः, चतुर्थचतुष्कलस्य गुरुद्वय पचमस्य पट्कलस्य गुरुत्रयमेकादश गुरवः, जगणाद्यतःस्थलघुद्वय च प्रतिचरण काव्ये आवश्यकं, चरणचतुष्टये च मिलित्वा चतुश्चत्वारिंशद्गुरवोऽष्टौ लघव आवश्यकाः, अतएव काव्ये सर्व्वेऽपि चरणा गुरुरूपा एवेति न सभवति जगणपक्षे अष्टलघूना विप्रपक्षे पोडशलघूनामावश्यकत्वात्, तेषु च ( चतुः )चत्वारिंशद्गुरुषु, क्रमेण एकैकगुरुह्रासेन लघुद्वयवृद्ध्या भेदेषु क्रियमाणेषु यः सर्वलघुर्भवति सः शक्रः, षण्णवतिलघ्वात्मके शक्रे च क्रमेण एकैकगुरुवृद्ध्या लघुद्वयह्रासेन यावच्चतुश्चत्वारिंशद्गुरवोऽष्टौ च लघवो भवति, तावति नामानि भवति । ताश्च भेदाननुपदमेव विवेचयिष्यामः । अत्र च प्रथम गुरूनादायैकगुरुह्रासलघुद्वयवृद्धिक्रमेण शक्रनिरुक्तिस्ततश्च लघूनादाय लघुद्वयह्रासैकगुरुवर्द्धनक्रमेणान्येषा निरुक्तिरुभयथापि भेदानयन सभवतीति प्रदर्शनायेति ध्येयम् ॥

१११. अथ शक्रमुदाहरति जसु करेति । जसु कर—यस्य करे, फणिवइ वलअ—फणिपतिवलय, तणुमह—तनुमध्ये तरुणिवर—तरुणिवरा युवतीश्रेष्ठा पार्वती बिलसइ—विलसति, यस्य णअण—नयने भालस्थतृतीयनेत्रे अणल—अनलः, गल गरल—गले कठे गरल विष, बिमल ससि जसु सिर— विमलः एककलात्मकतया कलकशून्यः शशी ( यस्य शिरसि ) णिवसइ—निवसति । इद च क्रियापद नयने—इत्यादिप्रत्येकान्वयि । यस्य सिरमह शिरोमध्ये, सुरसरि ( सुरसरित् ) रहइ—तिष्ठति, यश्च सअल जण दुरित दमण कर—सकलजनदुरितदमनकरः, सो—सः, ससहर—शशिधरो महादेवः, हसि—हसित्वा, तुअ दुरिअ—तव दुरित हरउ—हरतु, वितरउ अभअवर—वितरतु अभयवरम् ॥ अत्र चरणस्थाः चतुर्विंशतिरपि मात्रा लघुरूपाः स्पष्टाः । अत्र सो इत्योकारो लघुर्बोध्यः ।

११२. अथ स्पष्टतया सख्यानियतकाव्यभेदानयनप्रकारमाह जहेति । यथा यथा

वलआ वढ्ढिहइ—वलय गुरुर्वर्द्धते, तह तह—तथा तथा णाम कुणेहु—( ना )म कुरुष्व, सभुहि सउ—शभुना साद्धं भिंगगण—भृगगण भणि—भणित्वा, शभुमारभ्य भृगगणपर्यंतमित्यर्थः, चौ( चउ )आलीस—चतुश्चत्वारिंशत् , भेदानिति शेषः, मुणेहु—जानीहि । अय भावः—षण्णवतिलघ्वात्मक एको गुरुर्वर्द्धते, एव यः शक्रः उक्तः तत्र च यदि लघुद्वयमूनीकृत्य तन्मात्राक एको गुरुर्वर्द्धते एवमेको-गुरुश्चतुर्णवतिर्लघवश्च यत्र पतति, सशु ( शभु ) नामा द्वितीयो भेदः । एवमग्रेऽपि बोध्यम् । ते लिखित्वा प्रदर्श्यंते, तथा ।

११३. गु १ ल ९४ शम्भुः, गु २ ल ९२ सूर्य्यः, गु ३ ल ९० गडः, गु ४ ल ८८ स्कधः, गु ५ ल ८६ विजयः, गु ६ ल ८४ दर्पः, गु ७ ल ८२ तालाकः, गु ८ ल ८० समरः, गु ९ ल ७८ सिहः, गु १० ल ७६ शीर्ष, गु ११ ल ७४ उत्तेजाः, गु १२ ल ७२ प्रतिपक्षः, गु १३ ल ७० परिधर्मः, गु १४ ल ६८ मराचः, गु १५ ल ६६ मृगेन्द्रः, गु १६ ल ६४ दडः, गु १७ ल ६२ मर्कटः, गु १८ ल ६० कालः, ( ? ), गु १९ ल ५८ महाराष्ट्रः, गु २० ल ५६ वसतः, गु २१ ल ५४ कठ, गु २२ ल ५२ मयूरः, गु २३ ल ५० बधः, गु २४ ल ४८ भ्रमरः, गु २५ ल ४६ भिण ( न्न ) महाराष्ट्रः ॥

११४. गु २६ ल ४४ बज्रभद्रः, गु २७ ल ४२ राजा, गु २८ ल ४० बलितः, गु २९ ल ३८ मोक्षः, गु ३० ल ३६ मथानः, गु ३१ ल ३४ बलिः, गु ३२ ल ३२ मेघः, गु ३३ ल ३० सहस्राक्षः, गु ३४ ल २८ बालः, गु ३५ ल २६ दरिद्रः, गु ३६ ल २४ सरभः, गु ३७ ल २२ दभः, गु ३८ ल २० उद्भः, गु ३९ ल १८ अहः, गु ४० ल १६ पलिताकः, गु ४१ ल १४ तुरगः, गु ४२ ल १२ हरिणः, गु ४३ ल १० अधः, गु ४४ ल ८ भृगः । एवं पूर्वभेदापेक्षया लघुद्वयन्यूनक्रियया तत्समानमात्राकैकगुरुवर्द्धनेन च शक्रमारभ्य भृगपर्यन्त पचचत्वारिंशद्भेदा बोध्याः ॥

अथ शक्रात् क्रममारभ्य चत्वारो भेदास्तृतीये विप्रदानपक्ष एव सभवन्ति । पचममारभ्य एकचत्वारिंशत्पर्यंतं च तृतीये जगणदानपक्षेऽपि विप्रपक्षेऽपि संभवति । द्विचत्वारिंशत्तममारभ्य पचचत्वारिंशत्पर्यन्त च चत्वारो भेदास्तृतीये जगणमवलम्ब्यैव सभवन्ति । विप्रपक्षे पदचतुष्टये मिलित्वा षोडशलघूना जगणपक्षे चाष्टगुरुणा ( लघूना )मावश्यकत्वादिति बोध्यम् ॥

अथ प्राकृतसूत्रेण शम्भ्वादिभृगातानां पूर्वोक्तचतुश्चत्वारिंशद्भेदानां नामान्याह, ता सभो इति । शम्भुः १, सूर्यः २, गडः ३, स्कधः ४, विजयः ५, दर्पः ६, तालाकः ७, समरः ८, सिंहः ९, शीर्षः १०, उत्तेजाः ११, प्रतिपक्षः १२,

परिधर्मः १३, मरालः १४, मृगेन्द्रः १५, दण्डः १६, मर्कटः १७, कालः १८, महाराष्ट्रः १९, वसतः २०, कठ २१, मयूरः २२, बंधः, २३, भ्रमरः २४, भिन्नमहाराष्ट्रः २५, बलभद्रः २६, राजा २७, बलितः २८, मोक्षः २९, मथानः ३०, बलिः ३१, मेघः ३२, सहस्राक्षः ३३, बालः ३३, दरिद्रः ३५, सरभः ३६, दम्भः ३७, उद्दम्भः ३८, अङ्कः ३९, वलिताङ्कः ४०, तुरगः ४१, हरिणः ४२, अंधः ४३, तह—तथा, भृंगः ४४। हे मुद्धि—मुग्धे, ता एतानि चतुश्चत्वारिंशदिति शेषः, बत्थुआ णाम—वस्तुकनामान्येतानि वास्तु—ता सभो सूरो गडो खधो बिजओ दप्पो तालाको समरो सीहो सेसो उत्तेखो पडिव·····वोकापरनामकाव्यच्छदसः नामानीति यावत्, छदपबधो—छदःप्रबन्धः छदसा प्रकृष्टो बंधो यस्मात् स तादृश इत्यर्थः. पिंगलणाओ—पिंगलनागः जपइ—जल्पति ॥

११५. अथ शक्रमादाय सख्यान्तरं दोहावृत्तेनाह पचतालीसह इति। बत्थुआ छदे—वास्तुकच्छदसि वास्तुकापरनाम्नि काव्यच्छदसीति यावत्, पचतालीसह—पचचत्वारिंशत् छद—छदासि मेदा इति यावत्, विअभ—विजृभते इति अद्धाकइ—साक्षात्कृत्य, पिंगल कहइ—पिंगलः कथयति, अत्र हरिहरब्रह्मणोऽपि न चलति, तेऽप्येनमन्यथा न कुर्वंतीति भावः ॥

११६. अथ काव्ये वर्जनीयदोषानाह पअह इति। पअह असुद्धउ—पादैः अशुद्धः न्यून इत्यर्थः पगुः इत्युच्यते, पादचतुष्टयमध्ये एकेनापि चरणेन हीनश्चेत्तदा पंगुरित्यर्थः। यत्तु पदे अशुद्धः प्राकृतव्याकरणदुष्ट इत्यर्थ इति तन्न, तथा सति सस्कृतरचितकाव्यस्य दुष्टत्वात्। हीनः पूर्वोक्तेन केनापि गणेन हीनश्चेदित्यर्थः तदा स खोडउ—खजः पभणिज्जइ प्रभण्यते। यत्तु मात्रया हीनइत्यर्थ इति तन्न, शून्यकलेत्यनेन पौनरुक्त्यापत्तेः। मत्तग्गल—मात्रयाधिकः लक्षणोक्तमात्रापेक्षया एकया एकयापि मात्रया अधिक इत्यर्थः, बाउल—व्याकुलः। सुण्णकल—शून्यकलः एकयापि मात्रया न्यून इत्यर्थः कण्ण सुणिज्जइ—काणः श्रूयते। तथा झलवज्जिअ—झकारलकाराभ्या वर्जित इत्यर्थः बहिर—बधिरः। अलकारैः रहितः अधः। छदउट्टवण विणु—छंदसः यत् उट्टवनिका ता विनेत्यर्थः, उट्टवनिकाया क्रियमाणाया यदि आद्यतषट्कलस्थाने सप्तकलः पचकलो वा पतति, एवं मध्यस्थचतुष्कलेपु यदि कश्चित्पचकलस्त्रिकलो वा भवति, तृतीये च जगणविप्राभ्यामन्य एव गणः पततीत्यर्थः बूलउ—मूकः कथितः। अत्थ विणु—अर्थेन विना, दुब्बल कहिअउ—दुर्बलः कथितः। हढक्खरहि—हठाक्षरैर्हठाकृष्टैरक्षरैः परस्परमैत्रीरहितैरित्यर्थः (डेरउ)—डेरः केकरः होइ—भवति। गुण सब्बहि—सर्वगुणैः प्रसादप्रभृतिभिः रहितः काणा—काणः भवति। एते कब्बह दोस—काव्यस्य दोषाः, सव्वगसुद्ध समरूअगुण—सर्वांगशुद्धसमरूपगुणः

सर्वांगे शुद्धः, समौ रूपगुणौ यस्य सः समरूपगुणः, सर्वांगशुद्धश्चासौ समरूपगुणश्च तादृशेन पिंगलेन कथिताः। अत्र हिअ इत्यक्षरद्वयमेक बोध्यं 'वण्णो त्रि तुरित्रपढिओ' इत्युक्तेः अन्यथा मात्राधिक्यापत्तिः ॥

११७. अथ वर्णलघुभेदेन काव्यस्य जातिमेकैकचरणस्था चरणचतुष्टयसमुदिता च मात्रा कथयन् भूयोऽपि भेदसंख्यामनुवदन् उल्लालगुरुसंख्यामुपदिशन् काव्योल्लालाभ्यां षट्पदं वृत्तं भवति तस्य चैकसप्ततिर्भेदा भवन्तीति षट्पदेनैवाह विप्पेति। विप्प—विप्रे विप्रजातीये काव्ये वत्तीस—द्वात्रिंशत् लहु—लघवः होइ—भवति, खत्ति—क्षत्रिये क्षत्रियजातीये काव्य बेआल—द्विचत्वारिंशत् लघवः करिज्जसु—क्रियतां, वेस—वैश्यः अठतालिस—अष्टचत्वारिंशत् लघवः क्रियतामिति पूर्वेणैवान्वयः, सेस—शेषा उर्वरिता इति यावत् लघवः सुद्दहि (उ)—शूद्रजातीये काव्ये सलहिज्जसु—श्लाघ्यतां, पअ—पाद एकैकचरण इत्यर्थः काव्यस्येति भावः चउअग्गल—चतुरधिकाः वीस—विंशतिः चरणचतुष्टये च इति शेषः, छण्णवइ—षण्णवतिः मत्त—मात्राः ठविज्जसु—स्थाप्यतां, कव्वलक्खणहि (ह)—काव्यलक्षणे पञ्चतालीसइ णाम—पञ्चचत्वारिंशन्नामानि पूर्वोक्तानि शक्रादीनि भृगातानीति भावः करिज्जसु—क्रियतां, उल्लालहि—उल्लाले छहविस—षड्विंशतिं गुरून् जानीहीति शेषः, विण्णि पाअ—द्वयोः पादान् काव्योल्लालयोश्चरणान् एक्कइ—एकीकृत्य, समवण्ण—समा वर्णाः काव्योल्लालसमानाः वर्णा गुरुलघुरूपा यस्मिन्स्तादृशमित्यर्थः सरिससमदोसगुण—सदृशसर्वदोषगुणं सदृशाः काव्यसमानाः सर्वे दोषा गुणाश्च यस्य तत्तादृशमित्यर्थः छप्पअ—षट्पदं वृत्तं मुणहु—जानीत, तस्य चेति शेषः एहत्तरि णाम—एकसप्ततिनामानि परिमुणहु—परिजानीतेति योजना। एहत्तरीत्येकारो लघुर्बोध्यः। अयमर्थः—काव्यचरणचतुष्टयस्थाश्चतुश्चत्वारिंशत् गुरवस्तृतीयजगणदानपक्षे चाष्टौ लघवः, उल्लालचरणद्वयस्थाश्च षड्विंशतिर्गुरवः, पादद्वयस्थत्रिकलचतुष्टयांतर्गताश्च चत्वारो लघ(व) एव मिलित्वा सप्ततिर्गुरवो द्वादश लघवश्च षट्पदे पतति, तत्र चैकैकगुरुह्रासेन क्रमेण तत्समानसंख्याकलघुद्वयवृद्ध्या एकसप्ततिर्भेदा भवति। तांश्च भेदाननुपदमेव प्रपञ्चयिष्याम इति सुधीभिर्ध्येयम् ॥

११८. अथ षट्पदोपोद्घातेनोल्लालं लक्षयति तिण्णि तुरगमेति। प्रथमं तिण्णि (—त्रयः) तुरगमाश्चतुष्कला गणाः, तह—ततः, तिअल—त्रिकलः गणः, तेहि अंत—तस्य त्रिकलस्याते छह चउ तिअपट् चतस्रः तिस्रः मात्रा इति शेषः प्रत्येक योजनीयः, एम—एव, बिहु दल छप्पण मत्त—द्विदलषट्पञ्चाशन्मात्राक द्वयोर्दलयोर्मिलित्वा षट्पञ्चाशन्मात्रा यस्य तत्तादृशमित्यर्थः—उल्लाल—उल्लाल उल्लालनामक वृत्त, उट्टवहु—उट्टवयत उट्टवनिकाविषय कुरुतेति यावत्। अथवा

षट्पंचाशन्मात्राकमुल्लालं भिहु दल—द्वयोर्दलयोरुट्टवयत, एम—( ए ) वं दलद्वयेऽपि गणान् विभजत। इदमत्रावधेयम्। त्रिचतुष्कलाना षट् गुरवस्तदनंतर-पतितस्य त्रिकलस्य च एको गुरुस्तदनंतरपतितस्य षट्कलस्य च त्रयोगुरवस्तद-नंतरपतितस्य चतुष्कलस्य च गुरुद्वय तदनतरपतितस्य त्रिकलस्य चैको गुरुरेवं प्रतिचरण त्रयोदशगुरवो लघुद्वय चैवमष्टाविंशतिर्मात्राः एके दले पतति, दलद्वये च मिलित्वा षड्विंशतिर्मात्राः एके दले पतंति, दलद्वये च मिलित्वा षड्-विंशतिर्गुरवश्चत्वारश्च लघवः एवं षट्पंचाशन्मात्राः पतति। एव च काव्यव-दुल्लालेऽपि सर्वे वर्णा गुरुरूपा न सभवंति। तथा हि यदि त्रिकलो गुर्वादिस्त-दतो वा दीयते, तदा एकैकपादे त्रिकलद्वयातर्गत लघुद्वयमावश्यक, द्वयोर्दलयोश्च लघुचतुष्टय, यदि च त्रिकलस्य मात्रात्रयमपि लघुरूपमेव क्रियते, तदा तु त्रिकल-द्वयस्य षट् लघ( व ) एकैकचरणे, द्वयोर्दलयोश्च द्वादश लघवः आवश्यका इति कथमपि उल्लाले सर्वे वर्णा गुरुरूपा न सभवत्येव, त्रिकलानामपि सर्वलघु-रूपाणा संभवादत एव क्वचित्सर्वगुर्वात्मकवर्णसमय ( ? ) मुदाहरणमपि दृश्यते तल्लेखकप्रमादात्पतितमिति बोध्यम्। अत्राप्येकैकगुरुह्रासेन क्रमेण लघुद्वयवृद्ध्या सर्वलघ्वन्ताः सप्तविंशतिर्भेदाः सभवति, ते च ग्रथकृता न प्रदर्शिताः, अप्रदर्शिता अपि स्वयमूहनीयाः, मया तु ग्रथविस्तरभयान्न प्रदर्शिता इति सुधीभिर्विभावनीयम्॥

११६. अथ काव्योल्लालयोः सर्वगुर्वात्मककाव्यभेदमुदाहरति जाआ जा अद्धगेति। जा अद्ध ग—यदर्द्धगे जाआ—जाया पार्वतीति यावत् शोभते इति शेषः अग्रेऽपि योजनीयः, सीस—शीर्षे सव्वासा पूरति—सर्वाशाः पूरयती सव्वदुक्खा तोलंती—सर्वदुःखानि त्रोटयंती एतादृशी गगा लोलता—लोलाय-माना। अत्र गगाविशेषणद्वय पार्वत्या अपि योजनीयम्। यश्च णाआ राआ हार—नागराजहारः नागराजस्य वासुकेर्हारो यस्य तादृश इत्यर्थः यश्च दीसवासा वासता—दिग्वासो वसानः। जा संग—यत्सगे णट्ठा णासता—नष्टदुष्टान् नाशयतः, अत्र नष्टशब्दो धूर्त्तवाची, तथाच धूर्त्ता ये दुष्टा वैरिणस्तान् नाशयत इत्यर्थः, उच्छ्छवे—उत्सवे काता—यथा स्यात्तथा णाचता—नृत्यतः, ताले भूमी कंपले—तालकपितभूमयः, अथवा येषा तालेन भूमिः कपिता, तादृशा वेआला—वेताला-स्तिष्ठतीति शेषः। जा दिट्ठे—यस्मिन्दृष्टे मोक्खा पाविज्जे—मोक्षः प्राप्यते, सो तुम्हाण—स युष्मभ्य सुक्ख दो—सुख ददातु। अत्र जाआ जा अद्धगेत्यारभ्य णट्ट उट्टा णासता एतावत्पर्यंत पादचतुष्टय काव्यस्योदाहरणमेतदग्रे च चरणद्वयमुल्ला-स्येति बोध्यम्॥

१२०. अथ पट्( पद ) भेदानयनप्रकारमाह चउआलिसेति। चउआलिस

गुरु कव्वके—( चतुः ) चत्वारिंशद्गुरवः काव्यस्य, छव्वीसह—षड्विंशतिर्गुरवः इत्यनुप्रगः, उल्लाल—उल्लालस्य। जं गुरु टुट्टइ—यः गुरुस्त्रुटति, लहु वढइ—लघुर्वर्द्धते, अतः एहत्तरि—एकसप्ततिः पत्थार—( प्रस्तार ) भेदेषणा भवतीति शेषः। भावस्तु पूर्वमेवोक्तः।

१२१. अथैनमेवार्थं प्रकारांतरेणाह, अजअ इति। गुरुसत्तरि—गुरवः सप्ततिः, रवि रेह—रविरेखाः रविसंख्याका रेखाः द्वादश लघव इति यावत्, एव बयासी ( बेआसी ) अक्खरहि—द्व्यशीत्यक्षरैः अजग्र—अजयनामा षट्पदस्य प्रथमो भेद इत्यर्थः। तत्र गुरु घटइ—एकैकगुरुर्ह्रसति, दुद्दुइ लहुआ लेइ ( इ )—द्वौ द्वौ लघुकौ ग्राह्यौ वर्द्धनीयाविति यावत्। एव सति एक्कक्खर वढ—एकैकमक्षर वर्द्धते। ........अयमर्थः। तृतीय-जगणपक्षे काव्यस्य ( चतुः ) चत्वारिंशद्गुरवः अष्टौ लघव उल्लालस्य षड्विंशतिर्गुरवश्चत्वारो लघव एवमुभयोर्मिलित्वा सप्ततिर्गुरवो द्वादश लघवो यत्र पतति स अजयः, तत्र च यदि एकैको गुरुर्ह्रसति तत्समानसंख्याकमात्राकं च लघुद्वयं वर्द्धते, एव च पूर्वपूर्वभेदापेक्षयोत्तर ( रोत्तर ) भेद एकैकमक्षरं वर्द्धते तदा ते ते भेदा भवति। एतस्यैव प्रस्तारस्य शाल्मलीप्रस्तारसंज्ञा।

११२. अथैकसप्ततिभेदाना नामान्याह अजअ इत्यादिना। अजयः १, विजयः २, बलिः ३, कर्णः ४, वीरः ५, वेतालः ६, बृहन्नटः ७, मर्कटः ८, हरिः ९, हरः १०, ब्रह्मा ११, इदुः १२, चदन १३, सुशुभकरः १४, श्वा १५, सिंहः १६, शार्दूलः १७, कूर्मः १८, कोकिलः १९, खरः २०, कुजरः २१, मदनः २२, मत्स्यः २३, ताडकः २४, शेषः २५, सारगः २६, पयोधरः २७, कुदः २८, कमल २९, वारणः ३०, शरभः ३१, भसलो—भ्रमरः भास्वरश्च ३२, जागलः ३३, शरः ३४, सुसरः ३५, समरं ३६, सारसः ३७, सरसः ३८, इअ—इति छप्पअ णाम—षट्पदनामानि ठवि—स्थापयित्वा लेहइ—लभ्यंत इति पिंगल कहइ—पिंगलः कथयति॥

१२३. मेरुः ३९, मकरः ४०, मदः ४१, सिद्धिः ४२, बुद्धिः ४३, करतलं ४४, कमलाकरः ४५, धवलः ४६, मदनः ४७, ध्रुवः ४८, कनकं ३९, कृष्णः ५०, रजनः ५१, मेधाकरः ५२, ग्रीष्मः ५३, गरुडः ५४, शशी ५५, शूरः ५६, शल्य ५७, नवरगः ५८, मनोहरः ५९, गगनं ६०, रत्नं ६१, नरः ६२, हीरः ६३, भ्रमरः ६४, सेखरः ६५, कुसुमाकरः ६६, द्विपः ६७, शखः ६८, वसुः ६९, शब्दः ७०, मुनिः ७१, इति एहत्तरिहि—एकसप्ततिः षट्पदनामानि छदआर—छदकारकः पत्थरि—प्रस्तार्य्य लेहइ—लभते, इति पिंगलः कहइ—कथयति॥

१२४. अथैतेषा प्रकारातरेण सख्यामाह जत्ते इति। यावतः सव्वें लघवो भवति अर्द्धं विसृज्यतां तन्मध्ये। तत्रापि विसृज एक शर पचक, शर इति पच सज्ञा, एतत्प्रमाणेन नामानि विद्धीति शेषः। अयमर्थः, द्विपंचाशदुत्तर शत लघवः अतिमभेदे ये, तन्मध्ये अर्द्धत्यागे षट्सततिरवशिष्यते, तत्र पंचत्यागे एकसततिरवशिष्यते, तत्प्रमाणेन एकसततिप्रमाणानि नामानि भवतीत्यर्थः ॥

अथैते भेदाः स्वरूपतो लिखित्वा प्रदर्श्यंते। गुरु ७०, लघु १२ अजयः, गुरु ६९ लघु १४ विजयः, गु ६८ ल १६ बलिः, गु ६७ ल १८ कर्णः, गु ६६ ल २० वीरः, गु ६५ ल २२ वेतालः, गु ६४ ल २४ बृहन्नटः, गु ६३ ल २६ मर्कटः, गु ६२ ल २८ हरिः, गु ६१ ल ३० हरः, गु ६० ल ३२ ब्रह्मा, गु ५९ ल ३४ इंदुः, गु ५८ ल ४२ सिंहः, गु ५४ ल ४४ शार्दूलः, गु ५३ ल ४६ कूर्मः, गु ५२ ल ४८ कोकिलः, गु ५१ ल ५० खरः, गु ५० ल ५२ कुंजरः, गु ४९ ल ५४ मदनः, गु ४८ ल ५६ मत्स्यः, गु ४७ ल ५८ ताडकः, गु ४६ ल ६० शेषः, गु ४५ ल ६२ सारंगः, गु ४४ ल ६४ पयोधरः गु ४३ ल ६६ कुदः, गु ४२ ल ६८ कमलं, गु ४१ ल ७० वारणः, गु ४० ल ७२ शरभः, गु ३९ ल ७४ भसलः, गु ३८ ल ७६ जागलः, गु ३७ ल ७८ शरः, गु ३६ ल ८० सुसरः, गु ३५ ल ८२ समरं, गु ३४ ल ८४ सारसः, गु ३३ ल ८६ सरसः, गु ३२ ल ८८ मेरुः, गु ३१ ल ९० मकरः, गु ३० ल ९२ मदः, गु २९ ल ९४ सिद्धिः, गु २८ ल ९६ बुद्धिः, गु २७ ल ९८ करतल, गु २६ ल १०० ककलाकरः, गु ( २५ ल ) १०२ धवलः, गु २४ ल १०४ मदनः, गु २३ ल १०६ ध्रुवः, गु २२ ल १०८ कव ( न ) कं, गु २१ ल ११० कृष्णः, गु २० ल ११२ रजनः, गु १९ ल ११४ मेधाकरः, गु १८ ११६ ग्रीष्मः, गु १७ ल ११८ गरुडः, गु १६ ल १२० शशी, गु १५ ल १२२ शूरः, गु १४ ख १२४ शल्यं, गु १३ ल १२६ नवरगः ( गु १२ ल ) १२८ मनोहरः, गु ११ ल १३० गगन, गु १० ल १३२ रत्न, गु ९ ल १३४ नरः, गु ८ ल १३६ हीरः, गु ७ ल १३८ भ्रमरः, गु ६ ल १४० शेखरः, गु ५ ल १४२ कुसुमाकरः, गु ४ ल १४४ द्विपः, गु ३ ल १४५ शखः, गु २ ल १४८ वसुः, गु १ ल १५० शब्दः, ल १५२ मुनिः ॥

१२५. अथ पज्झटिकावृत्त लक्षयति चउमत्तेति। अत—अते, पओहर—पयोधर मध्यगुरुं जगणमिति यावत् ठइ—स्थापयित्वा, अतस्थं चतुर्मात्रिक जगणस्वरुपमेव विधायेत्यर्थः, पाइ पाइ—पादे पादे प्रतिचरणमिति यावत् चारि ठाइ—चतुःसख्यान् चउमत्त—चतुर्मात्रिकान् गणान् करहि—कुरुष्व। एम—एवं, चारि पाअ—चतुःपादे चउसट्ठि मत्त—चतुःषष्टिमात्राक पज्झटिअ

छंद— पज्झटिकाच्छदः भवति, एतत् श्रुत्वेति शेषः इदुः पज्झरइ—प्रलब्रति ॥ प्रथम त्रयश्चतुष्कलास्तदनतरमेकोजगण एव षोडश मात्राः प्रतिचरण यत्र पतति, तत्पज्झटिकावृत्तमिति फलितार्थः ।

१२६. अथ( प )ज्झटिकामुदाहरति जे इति । येन पराक्रमेण गोलाहिवइ-गौडाधिपतिः राउ—राजा गजिअ—गजितः, हत इति यावत्, जसु भअ—यस्य पराक्रमस्य भयेन उद्दड—समरदुर्द्धर्पः ओड—उत्कलदेशाधिपतिः पलाउ—पलायितः । येन च जुज्झ—युद्धे, इदं सर्वत्र चेति, गुरुव्किकम— गुरुविक्रमः गुरुरन्यैरनतिक्रमणीयः विक्रमः पराक्रमो यस्य स तादृश इत्यर्थः, विक्कम—विक्रमः विक्रमनामा कश्चित् प्रसिद्धः राजा, जिणिअ—जितः, ताकण परक्कम—तत्कर्णपराक्रम कोऽपि बुज्झ—जानाति, अपि तु न को पीत्यर्थः ॥

१२७. अथ अलिल्लहवृत्त लक्षयति सोलह मत्तेति । जहा, सोलह मत्ता—षोडशमात्रिकाः षोडश मात्रा यस्या सा तादृशीत्यर्थः, पाउअलि—पादावली, लह— लभ्यते, वेवि—द्वयोरिति शेषः, जमक्का—ज ( य ) मकौ भउ—भवत इति, अलिल्लह कथयत्यर्थः । किंपि कुत्रापि चरणे इत्यर्थः, अलीहलह ( १ ) अप्रयोजक—इत्यर्थः । अय च देशीशब्दः । पओहर—पयोधरः मध्यगुरुर्जगण इति यावत्, ण हो— न भवति, अत्र जगणो न देय इति भावः, अते पादाते सुपिअ—सुप्रियः द्विलघुर्गण इत्यर्थः पततीति शेषः । क्रियमाणासु षोडशमात्रासु अतिम ( मा ) त्राद्वय यत्र लघुरूपमेव पतति, न तु षोडशमात्रातिरिक्तः सुप्रियो देय इति भावः, तत् अलिल्लह छदु—अलिल्लहनामक छदः भण—कथय इत्यर्थः ॥

१२८. अथ अलिल्लहमुदाहरति जिहि इति । जिहि—येन आसावरिनामको देशः, दिएहउ—दत्तः, सुत्थिर—सुस्थिर, वैरिकृतास्कदनाभावादव्याकुलजनमिति भावः, डाहर रज्जा—डहारराज्य डहारः पर्वतविशेषस्तस्य राज्यमित्यर्थः, लिहउ—गृहीत । कालिंजरे येन कीर्तिः स्थापिता, धणु आवज्जि—धनम् आवर्ज्य दशदिग्भ्य एकीकृत्येत्यर्थः, धम्मके—धर्माय अप्पिअ—अर्पितम् । अत्र दिह्लउ लिह्लउ, थप्पिअ अप्पिअ इति दलद्वये यमकवत्व स्फुटमेव । अत्र जिह्लीति सयुक्तपरोऽपि जकारः लघुर्बोध्यः, 'कत्थवि संजुत्तपरो वण्णो लहु होइ', इति पूर्वमुक्तत्वात् । धम्मके इति एकारोऽपि लघुर्बोध्यः, ऐओ शु ( सु ) द्धाअ वण मिलिआ चेति पूर्वमुक्तत्वात् । अन्यथा तत्तच्चरणे मात्राधिक्य स्यादिति बोध्यम् ॥

१२९. अथ पादाकुलक वृत्त लक्षयति लहु गुरु, एक्क णि ( अ )—मेति । जेहायत्र, लह गुरु एक्क णि ( यो ) म्म—लघु गुरुवैकनियमः णहि—नास्ति, यत्र

षोडशापि मात्रा अष्टगुरुरूपेणैव पतति, अथवा षोडशलघुरूपेणैव पततीति नियमो नास्तीत्यर्थः, किंतु पअ पअ—पादे पादे प्रतिचरणमिति यावत् उत्तम रेहा—उत्तमा रेखा मात्रा लघुगुर्वंतरिता इति भावः लेक्खिए—लिख्यते स्थाप्यते इत्यर्थः। सुकविफणींद्रकठवलय( मि )ति पिंगलकठाभरणतुल्यमित्यर्थः, कठाभरणं यथा सस्नेह कठे स्थाप्यते, तथैदमपि सस्नेहं पिंगलेन कंठे धृतमित्यर्थः, सोलहमत्तं—षोडशमात्राकं, प्रतिचरणं षोडश मात्रा यस्मिस्तत्तादृशमित्यर्थः, पादाकुलकनामकं वृत्त भवतीति शेषः। पादे मात्राः लिख्यते इत्युक्तं, तत्र कियत्यो मात्रा इत्यपेक्षायां षोडशमात्राकमिति हेतुगर्भं विशेषणम् ॥

१३०. अथ पादाकुलमुदाहरति सेर एक्केति। सेर एक्क जौ ( जइ ) पावउ घित्ता—सेरकैक यदि प्राप्नुया ( द् ) घृतं, मडा बीस पकावउ णित्ता—तदा विंशतिं मडकान् पचामि नित्य। तत्र च जइ—यदि टक्कु एक्क सेंधउ पाआ—टक एकः सैंघवः प्राप्तः, तदा जो हउ रक सोइ हउ राआ—योऽहं रंकः स एव अह राजा ॥

१३१. चौ( चउ )बोला लक्षयति सोलह मत्तेति। सोलह मत्तह—षोडशमात्राभिः वेवि—द्वावपि द्वितीयचतुर्थयोरग्रे उपादानात्प्रथमतृतीयावित्यर्थः चरणाविति शेषः ( पमाणह ) प्रमाणयत, बीअ चउत्थह—द्वितीयचतुर्थयो-श्चरणयोः चारिदहा—चतुर्दश मात्रा इति शेषः प्रमाणयतेति पूर्वेणान्वयः, मत्तह सट्ठि—षष्टिर्मात्राः समग्गल जाणह—समग्राः जानीत, चारि पआ—चतुष्पाद चौ( चउ )बोल कहा—चौबोलं कथय ॥ तत्र प्रथमचरणे षोडश, द्वितीये चतुर्दश, तृतीयेऽपि षोडश, चतुर्थे च चतुर्दश मात्राः पतति, ततः चौबोलानामकं वृत्तमिति फलितार्थः ॥

१३२. अथ चौबोलामुदाहरति रे धणीति। रे धणि—धन्ये, मत्त मअंगज गामिणि—मत्तमतगजगमने खजनलोचने चंद्रमुखि चचलं गच्छद्यौवन ण जाणहि—न जा( ना )सि, अतः तत् छइल्लम्यः विदग्धेभ्यः काइ णही—कुतो न समप्पहि—समर्पयसि। अथवा यतः चञ्चल अतएव गच्छद्यौवन छइल्लेभ्योन समर्पयसि, अतः त्व काइ णही—किमपि न जानासि, यदि तु समर्पयसि तदा अभिज्ञा भवसीति भावः ॥

१३३. अथ रड्डा लक्षयति पढमेति। भो शिष्याः पढम—प्रथम-चरण इत्यर्थः दहपच मत्त—पञ्चदशसु मात्रासु विरमइ—विरमति विरामं समाप्तिं प्राप्नोतीत्यर्थः, प्रथमचरणे पञ्चदश मात्राः कर्त्तव्या इति भावः। बीअ-द्वितीये पअ—पदे बारह—द्वादश मात्रा इति शेषः, सर्वत्र यथा यथा योजनीयः, ठवहु—स्थापयत। तीअ ठाइ—तृतीये स्थाने तृतीयचरणे इत्यर्थः दहपच मात्राः

जाणहु—जानीत । चारिम—चतुर्थे चरणे इति शेषः, इद च यथापेक्षमन्यत्रापि योज्यं, एग्गारहहि—एकादश मात्राः जानीतेति पूर्वेणान्वयः। पचमे उ—पचमेऽपि चरणे दहपच—पंचदश मात्राः आणहु—आनयत । एवप्रकारेण अठ्ठासट्ठी—अष्टषष्टिर्मात्राः पूरवहु—पूरयत, अग्रे अष्टषष्टिमात्राते दोहा—द्विपदिका तेरह मत्तेत्यादिना पूर्वमुक्ता देहु—ददत। एह—एषा रड्डा, (इअ) इय सुरसिद्ध—सुप्रसिद्ध यथा स्यात्तथा राअसेण—राजसेना इत्यपि भणिज्जइ—भण्यते ॥ एतस्या राजसेना इति नामातरमपि कथ्यत इत्यर्थः ॥

१३४. अथ रडाया तावत्तावन्मात्रा तत्तच्चरणे देया इत्युक्तं, तत्र विप्रा(न्या)सप्रकारमाह विसमेति । विसम—विषमे पादे प्रथमे तृतीये पचमे चेत्यर्थः, आदौ तिकल सठवहु—त्रिकलं स्थापय, ततश्च त्रिकलानतरमित्यर्थः तिण्णि पाइक्क—त्रीन् पदातीन् चतुष्कलानित्यर्थः करहु—कुरुत, पढम—प्रथमे पाद अत—अन प्रथमपादांत इत्यर्थः णरिंद कि विप्प—नरेन्द्र मध्यगुरुं जगण किंवा विप्र चतुर्लघ्वात्मक गण कुरुतेति पूर्वेणान्वयः, तथाच प्रथमे चरणे त्रिकलानंतर कर्त्तव्येषु त्रिषु चतुष्कलेषु तृतीयश्चतुष्कलो जगणस्वरूपो विप्ररूपो वाते कर्त्तव्यः न तु पृथगिति हृदय। अवर पअ—अपरपादे विषमचरणगणविचारस्यैव प्रक्रांतत्वात्प्रथमादपरस्मिन् विषमे तृतीये पंचमे च पादे इत्यर्थः बे मत्त—द्वे मात्रे द्वौ लघू इत्यर्थ', उदाहरणानुरोधादत्र मात्राशब्दो लघुवाची, अते देये इत्यर्थः, तथाच तृतीयपचमकानंतरदेयेषु चतुष्कलेषु तृतीयो गणः भगणो देय इति भावः तस्यैव द्विलघ्वतत्वात् ।

अथ विषमचरणव्यवस्था विधाय समचरणव्यवस्थामाह सम पअ इति। सम पअ—समे पादे द्वितीये चतुर्थे चेत्यर्थः आदौ बिअ पाइक्कद्वौ पदाती चतुष्कलावित्यर्थः, अत—अते चतुष्कलद्वयाते पादाते चेत्यर्थः सव्वलहु—सर्वलघु विसज्जहु—विसृजत, चौ (चउ) त्था चरण—चतुर्थचरणे अते इति पूर्वतनमनुव्रजनीय, विचार्य सावधनतया एकलहु—एक लघु कड्ढिअ लिज्ज—निष्कास्य गृह्यता द्वितीयचरणातिमगणापेक्षया चतुर्थ—चरणातिमगणे एको लघुर्न्यूनः कर्त्तव्यः तत्र एका मात्रा न देयेति हृदय॥ तथा च समे पदे चतुष्कलद्वयाते सर्व लघ्वात्मकगणदानमुक्त, तत्र चतुर्थचरणे चतुष्कलद्वयानतर सर्वलघु', त्रिकलो देयः, द्वितीये च सर्वलघुश्चतुष्कलो देय इति व्यवस्था ।

इम पच पाअ उट्टवण कइ—एव पचपादोट्टवनं कृत्वा, उट्टवनं विन्यासः, तथाच एवं पचपादविन्यास कृत्वेत्यर्थः, दोसहीण दोहाचरण—दोषहीनदोहाचरणान् जससत्यादिना पूर्वोक्तप्रथमतृतीयजगणत्त्वरूपदोषरहितान् दोहाचतुश्चरणानित्यर्थः, ठवि—स्थापयित्वा पूर्वोक्तचरणपंचकानतरं दोहां दत्वेत्यर्थः, पिंगलः

वत्थुणाम—वस्तुनामक वृत्तं वहेइ—कथयति, एतदेव राअसेण रड्डुउ—राजसेनरड्डा एतस्यैव राजसेना रंडेति च नामातर भणइ—भणति ॥

१३५. रड्डामुदाहरति भमईति । महुअर—मधुकराः भमइ—भ्रमति, फुल्लु अरविंद—पुष्पितान्यरविदानि, काणण—काननानि ( णवकेसु— ) नवकिंशुकैः जुलिअ—ज्वलितानीव भाती ( ति ) शेषः सव्वदेस—सर्वदेशः पिकराव चुल्लिअ—पिकरावैश्चुलुवितः निपीत इति यावत्, कोकिलालापानाकर्ण्य सजात-कदर्पबाधया सर्वोऽपि देणि ( शो ) निःपीत इव भातीति भावः, मलअ कुहर णव वल्लि पेल्लिअ—मलयकुहरनववल्लीः प्रेषयित्वा ताः कपयित्वेत्यर्थः, सिअल पवण—शीतलः पवनः लहु—लघु मद यथा स्यात्तथा वहइ—वहति । चित्त मणोभव सर हणइ—चित्त मनोभवः शरैर्हंति, कत—कातः दूरे दिगन्तरे एव, दुरंतः दुष्टः अतो यस्य ( स ) तादृशः समय इति शेषः परिपलिअ—परिपतितः, अप्पउ—आत्मानं किम परि—कया परिपाट्या वारिहउ—रक्षिष्यामि ॥

१३६. अथैतस्यैव भेदाना ससंख्य नामान्याह करहीति । अपि—हे प्रिये करभी नदा मोहिनी चारुसेना तथा भद्रः राजसेनः तालकिनी इति सत्त—सप्त वत्थु णिप्फद—वस्तुनिस्पदाः—वस्तुनामकस्य पूर्वोक्तवृत्तस्य निस्पंदा भेदा इत्यर्थः ॥ रड्डाया एव वस्तु राजसेन इति च नामातरम् ॥

१३७. तेषु प्रथमं करभीं लक्षयति । पढमेति । जासु—यस्याः प्रथमतृतीय-पचमपादेषु तेरह मत्ता—त्रयोदश मात्राः । बीअ चउत्थ—द्वितीयचतुर्थयोश्चरणयो-रिति शेषः, एआरहहि—एकादशैव मात्रा भवतीत्यर्थः, तासु—तस्याः करहि—करभीति नामेति शेषः भणिज्जइ—भण्यते ॥ अयमभिप्रायः, पूर्ववस्तुच्छदसि प्रथमे चरणे पचदशमात्राः द्वितीये द्वादश तृतीये पंचदश चतुर्थे एकादश पचमे पंचदश देया इति फलित, तत्रैव प्रथमतृतीयपंचमचरणेषु प्रथमोपात्तत्रिकल मात्राद्वय दूरीकृत्य द्वितीयचरणे चातोपात्तसर्वलघुचतुर्मात्रिके एका मात्रा दूरीकृत्य चतुर्थं च पूर्वं( व )देव संस्थाप्याग्रे दोहा दत्वा करभी वाच्या, न तु ( ? ) विषमपादेषु प्रथमोपात्तत्रिकले मात्राद्वय न्यून कर्तव्यम् । अतोपात्तजगणभगणेषु चेत्यत्र किं विनिगमकमिति चेत्, सत्यं, सामान्यानालिं( गि )तविशेषाभावात् पूर्वोक्तरड्डानियमानामुत्तरत्राप्यावश्यकतया करभ्यामपि प्रथमचरणाते जगणविप्रान्य-तरस्य, तृतीयपचमयोश्च भगणस्यावश्य स्थापनीयत्वात्प्रथमपरित्यागे मानाभावश्च प्रथमोपात्तत्रिकलमध्यत एव मात्राद्वयं न्यूनं विधेयं, द्वितीये च समचरणे अते सर्वलघुर्देय इति नियमस्य पूर्वमुक्तत्वात् अते सर्वलघुस्थापनमावश्यकमिति चतुर्थचरणसाम्यतया द्वितीयचरणस्थापने बाधकाभावादंतिमसर्वलघ्वात्मकगणमध्यत एव इ( ए )का मात्रा न्यूना विधेयेति न कश्चिद्दोष इत्यसत्तातचरणोपदिष्टः

पंथाः सुधीभिर्विभावनीयः। यत्तु विषम आद्युपात्तत्रिकलमध्ये मात्राद्वय न त्याज्यमेककल (ग)णाभावादिति, तत्र आर्यायामुत्तरार्द्धे षष्ठस्यैवात्रापि प्रथमस्यैककलस्य स्थापने बाधकाभावात् ॥

१३८. अथ नदा लक्षयति पढमेति। यत्र प्रथमतृतीयपञ्चमपादेषु दहचारि—चतुर्दश मत्त होइ—मात्रा भवति। बीअ चउत्थ एआरहहि—द्वितीयचतुर्थयोरेकादशैव मात्रा भवतीति पूर्वतनानुषंगः, त विआरि—विचार्य णद भणिज्ज—नदा भण। अत्रापि पूर्वोक्तरीत्या विषमपादेषु प्रथमोपात्तत्रिकलमध्यत एव एका मात्रा दूरीकृत्य द्वितीयपादे चातस्थचतुर्लघ्वात्मकगणमध्यत एका मात्रा त्यक्त्वा चतुर्थं पूर्ववदेव स्थापयित्वाग्रे दोहा दत्त्वा नदा वाच्या इति निष्कर्षः ॥

१३९. अथ मोहिनीं लक्षयति पढमेति। यस्या प्रथमतृतीयपञ्चमपादेषु णवदह मत्ता—एकोनविंशतिर्मात्राः। बीअ चउत्थ एआरहहि—द्वितीयचतुर्थयोरेकादशैव मात्रा भवति, त—ता आसु—एना मोहिणी—मोहिनीं मुणि—जानीहि ॥ अत्र विषमेषु त्रिकलानंतर चत्वारश्चतुर्मात्रिका विधेयास्तेष्वेव प्रथमपादांते जगणो विप्रो वा विधेयस्तृतीयपंचमयोश्चाति( म )भगण एव विधेयो द्वितीये चातिममध्यत एव एका मात्रा निष्कास्य चतुर्थे च पूर्ववदेव सस्थाप्याग्रे दोहा दत्वा मोहिनी वाच्येति व्यवस्था ॥

१४०. अथ चारुसेना लक्षयति। जासु—यस्याः प्रथमतृतीयपञ्चमपादेषु पण्णरह—पंचदश मत्त—मात्राः। बीअ चउत्थ—द्वितीयचतुर्थयोः पादयोः एकादशैव मात्रा भवतीति शेषः, आसु—एना चारुसेना भण—कथय ॥ अत्र विषमचरणान् वस्तुन इव सस्थाप्य द्वितीयचतुर्थौ चरणौ करभ्या इव विधायाग्रे दोहा दत्वा चारुसेना वाच्येति निष्कर्षः।

१४१. अथ भद्रं लक्षयति पढमेति। प्रथमतृतीयपंचमपादेषु मात्राः पञ्चदश, द्वितीयचतुर्थयोर्द्वादश मात्राः भवति, आइ—एतस्य भद्रेति नाम कथितम्। अत्र चतुर्थे त्रयश्चतुर्मात्रिका अन्ये वस्तुन इवेति निष्कर्षः ॥

१४२. अथ पूर्वं विसम तिकलेत्यनेन लक्षितमपि राजसेनापरनामक वस्तु वृत्तं करही नदेत्यत्र तदन्य एव राजसेनः कथित इति भ्रमनिरासार्थं पुनस्तमेव लक्षयति पढमे त। प्रथकतृतीयपंचमपादेषु मात्राः पञ्चदश यत्र। समे चरणे द्वादश अरु—अथच एक्कदह—एकादश राजसेन भणत च ॥ एतन्निष्कर्षश्च पूर्वमेव कृतः ॥

१४३. अथ ताड( ल )किनीं लक्षयति पढमेति। यस्याः प्रथमतृतीयपञ्चमपादेषु सोलह—षोडश मात्रा भवतीति शेषः, समे द्वितीये चतुर्थे च द्वादश अथच

एक्कदह—एकादश मात्रा भवतीति शेषः, यथायथ योजनीयः। द्वितीये द्वादश मात्रा भवतीत्यर्थः। तासु ताड( ल )किनी भण ॥ अत्र विषमपादेषु ( ज )गणाता विप्राता वा चत्वारश्चतुष्कलाः कार्य्याः, समौ च पूर्ववत्, अग्रे दोहा दत्वा ताड( ल )किनि( नी ) वाच्येति निष्कर्षः। इति श्रीपिंगलप्रकाशे रड्डाप्रकरणम् ॥

१४४. अथ पद्मावतीं लक्षयति भणु पोमावत्तीति। यत्र कर्णः गुरुद्वयात्मको गण इत्यर्थः, करअल—करतल गुर्वंतः सगण इत्यर्थः, विप्पो—विप्रश्चतुर्लघुको गण इत्यर्थः, चरणः गुर्वादिर्भगण एत एवेति शेषः चउमत्ता—चतुर्मात्रिकाः अट्ठाआ—अष्टौ गणाः पाए पाअ—( पादे पादे ) देयाः प्रतिचरणमित्यर्थः ठाण ठाणं—स्थले स्थले, उक्किट्ठाआ—उत्कृष्टाः अधिका बहुश इति यावत् पतति। यत्र प्रतिचरण स्थापनीया अष्टौ गणाः कर्णसगणविप्रभगणस्वरूपा एव पतति नान्या अत एव पौर्वापर्येण पुनःपुनःवाराष्टक पततीति यावदित्यर्थः, तां पोमावत्ती—पद्मावती भण पद्मावतीनामक तद्वृत कथयेत्यर्थः। अत्र जइ यदि पओहर—पयोधरः मध्यगुरुर्जगण इत्यर्थः पलइ—पतति, तह—तदा किमपि मनोहरं सम्यक् न भवतीति शेषः, किंतु चंडालचरित्रः इअ—अयं जगणाख्यो गणः णाअक्कगुणो—नायकगुण पीडयति, पिअरहि—पितरं सन्त्रासयति, अतएव कइ उव्वासइ—कविमुद्वासयति ॥ अत्र जगणे पतिते यस्य कवित्वमेतच्छंदसा भवेत्स राजा नश्येत, नष्टे च तस्मिन्नेतादृशकवित्वनिर्माणकर्त्रा कविनापि वधनताडनादिव्यथा प्राप्तव्येति, अत्र जगणः सर्वथा न देय इति भावः ॥

१४५. अथ पद्मावतीमुदाहरति भअ भज्जिअ इति। यदा कासीसर राणा—काशीश्वरेण दिवोदासेन राज्ञा, पआणा—प्रयाण किएउ—कृत, तदा वगा—वगदेशीया राजानः भअ भज्जिअ—भयेन भग्नाः कृताः, भग्ग कलिंगा—पलायिताः कलिंगाः, तेलगा रण मुक्कि चले—तैलगाः रणं मुक्त्वा चलिताः, धिट्ठा—धृष्टा रणनिर्भीका इत्यर्थः मरहट्ठ—महाराष्ट्राः कट्ठा—काष्ठासु दिक्षु लगिअ—लग्नाः पलाय्य दिगत गता इत्यर्थः, सोरष्ट्रा भयेन पादपतिताः, पव्वअ झपा—पर्वतझपाः कपा—कपाः कंपनशीला इत्यर्थः चपारणा ओत्था ओत्थी उत्थायोत्थायेत्यर्थः जीव हरे—जीव स्वप्राणान् हरति त्यजति इति, विद्याधरः मन्त्रिश्रेष्ठो भणति ॥ अत्र प्रथमचरणे तृतीयः पचमः षष्ठो गणः कर्णस्वरूपः, प्रथमो द्वितीयश्चतुर्थः सप्तमोऽष्टमश्च सगणस्वरूपः, द्वितीयचरणे च द्वितीयतृतीयपचमषष्ठसप्तमगणाः कर्णस्वरूपा अन्ये च सगणरूपाः, चतुर्थे च प्रथमपचमौ गणौ कर्णरूपौ षष्ठतृतीयौ भगणरूपौ अन्ये च सगणरूपाः,

इत्थ गणाः पतिताः, विप्रस्तु न क्वचिदपि पतितस्तथापि सोऽपि यदि पतति तदापि बाधकं नास्तीति ॥

१४६. अथ कुंडलिकां लक्षयति दोहा लक्खणेति। बुहअण—बुधजनाः यस्याः पढम—प्रथमम् अद्ध—अर्द्धं, तथा च पूर्वार्द्धमित्यर्थः, दोहा लक्खण-द्विपदिकालक्षण पढि—पठित्वा, णिरुत्त—निरुक्त, द्विपदिकास्वरूपमेव यस्याः पूर्वार्द्धमित्यर्थः, द्वितीयं चेति शेषः अर्द्धमिति पूर्वानुषगः, तथाच द्वितीयम् अर्द्धम् उत्तरार्द्धमित्यर्थः कव्वह—काव्येन निरुक्तं—काव्यस्वरूपं यस्या उत्तरार्द्धमित्यर्थः उल्लाले सजुत्त—उल्लालेन सयुक्ताम्। उल्ललनम् उल्लालः कतिपयवर्णाना परावृत्य पठनमित्यर्थः कव्व—(काव्येन) तेन सहितामित्यर्थः, ता कुडलिआ—कुण्डलिकां मुणहु—जानीत, इय च उल्लालेन सयुक्तानि यमकानि सौसादृश्यवत्यक्षराणि यस्या तादृशीत्यर्थः, सुद्धउ—शुद्धा, सलहिज्जइ—श्लाघ्यते, तथा च न केवलमुल्लालयुक्तैवेयं विधेया किंतु यमकान्यपि देयानीति भावः। चौ(चउ)आलह सउ मत्त सुकिअ दिढ वधु—चतुश्चत्वारिंशदधिकशतमात्रासुकृतदृढबंधा चतुश्चत्वारिंशदधिकशतमात्राभिः सुतरा कृतः दृढः वधो योजनं यस्या सा तादृशीत्यर्थः कहिज्जइ—कथ्यते। क्वचित् सुकइ दिढ वधु इति पाठस्तत्र सुकविदृढबंधु नाम—कविपरममित्रेण पिंगलेनेति यावत्। चतुश्चत्वारिंशदधिकं शत मात्राः अत्र कथ्यत इति भिन्न भिन्नमेव योजनीय, चउआलह सउ मत्त—चतुश्चत्वारिंशदधिक शतं मात्राः जासु—यस्या, तणु भूसण सोहा—तनुभूषणाना शोभा इत्यर्थः, जनयतीति शेषः। एम कुडलिआ मुणहु—एवं कुडलिका जानीत, पढम पढि जह दोहा—प्रथम पठ्यते यत्र दोहा इति योजना॥ भावार्थस्तु—पूर्वार्द्धं पूर्वोक्तदोहावृत्तेन विधेयमुत्तरार्द्धं च पूर्वोक्तकाव्यवृत्तेन विधेयमित्युक्त। तत्र यद्यपि दोहाया काव्ये च उल्लालकयोर्नियमो नोक्तस्तथाप्यत्र उल्लालो यमक चेति द्वयमवश्य विधेयमिति विशेषः। एव च दोहाचरणचतुष्टयस्या अष्टचत्वारिंशन्मात्राः काव्यचरणचतुष्टयस्याश्च षण्णवतिमात्रा एकीकृत्य चतुश्चत्वारिंशदधिकशत मात्राश्चरणाष्टकस्या इहावसेया इति विभावनीयम्॥

१४७. अथ कुंडलिकामुदाहरति ढोल्लेति। पुर जज्जला मंतिवर—पुरोजज्जल्लमन्त्रिवरः पुरोऽग्रे जज्जल्लनामा मन्त्रिवरो यस्य स तादृश इत्यर्थः वीरहमीरः चलित इति यदा दिल्ली मह—डिल्लीमध्ये ढोल्ला—आनकः डिंडीरवार्थमिति भावः मारिअ—मारितस्ताडित इत्यर्थः, तदा मेच्छ सरीर—म्लेच्छशरीराणि मुच्छिअ—मूर्च्छितानि। अग्रेसरजज्जल्लाख्यमन्त्रिवरो हमीरनामा स्वनगराच्चलित इति पुत्कृत्य सर्वजनानां सावधानतासपादनाय डिल्लीमध्ये यदा डिंडीरवार्थे

पटहस्ताडितः तदा तच्छ्रुत्वा हमीरागमनत्रस्ता म्लेच्छा मूर्च्छिता इति भावः ॥ चलिअ वीर हमीर पाअभर—***पादभरेण मेदिनी पृथ्वी कम्पइ—कंपते, धूलि—धूलिभिः सैन्यपादाघातोत्थरजोभिरित्यर्थः सूरज—सूर्यस्य ( रह— ) रथः झपइ—आच्छाद्यते, ततश्च दिग मग णह—दिङ्नभोमार्गे अधार—अंधकारः जात इति शेषः । दिग मग णह—दिङ्नभो मार्गे अंधार—अंधकारे सति खुरसाण*—खुरासानस्य देशस्य ओल्ला—दडप्रतिनिधिभूताः पुरुषा आण—आनीता इति यद्यपि, तथापि हे वीर सुरत्राणेति सम्बोधनमभ्याहर्त्तव्य, त्वं दरमरि—चरणतलैर्विमर्द्य विपक्ख—विपक्षान् ( दमसि— ) दमयसि, अतः ढिल्ली मह—दिल्या मध्ये ढोल्ला—पटह मारु—ताडय । यद्यपि हमीरश्चलित इति श्रुत्वा अन्ये म्लेच्छा मूर्च्छिताः खुरासानदेशीयैश्च दडप्रतिनिधिभूता मनुष्याः समर्पिताः, तथापि त्वया न भेतव्यं किन्तु योद्धृणा रणसज्जीभावाय पुनर्द्वितीयो डिंडीरवः त्वया कारणीय इति किंचिदायस्तधैर्यं सुरत्राण प्रति कस्यचिन्मंत्रिण उक्तिः ॥

१४८. अथ दोहावृत्तेन पुनः स्पष्टीकृत्य कुंडलिकालक्षणमाह पढमहि इति । पढमहि—प्रथमे अर्द्धे इति भावः दोहा चारि पअ—दोहायाश्चत्वारि पदानि ततो द्वितीयार्द्धे कव्वह—काव्यस्य चउपअ—चत्वारि पदानि देहि, एवं कुंडलिका अट्ठपदी, तत्र पादे पादे यमकानि क्रियन्ता ॥ यमकानिति उल्लालाना-मप्युपलक्षकम् । इदं चोदाहरणानंतर लक्षणकथनमनौचित्यमावहतीति क्षेपकमिवा-भाति इति बोध्यम् ॥

१४९. अथ गगनागनामकवृत्त लक्षयति पअ पअ इति । हे पिअ—प्रियाः शिष्याः यत्र पढमहि—प्रथमपादादाविति यावत् चारि मत्त गण—चतुर्मात्राकः गणः किज्जइ—क्रियते, ततो यथेच्छ चतुष्कलैर्वेत्यध्याहारः, गणह—गणैः, यत् पआसिओ—प्रकाशित, यत्र च गुरु अत पआसिओ—अंतप्रकाशितगुरूणि अंते समाप्तौ प्रकाशितो गुरुर्येषु तादृशानित्यर्थः, तथाच कर्त्तव्येषु विंशतितममक्षरं गुरुरूपमेव कार्यमिति भावः, वीसक्खर—विंशत्यक्षराणि, सम पअह—सर्वेषु पादेषु प्रत्येक पतन्तीति शेषः, तत् पअ पअ—पादे पादे प्रतिचरणमित्यर्थः, मत्त विहूसिणा—मात्राविभूषित गअणगउ—गगनाग गगनागनामक वृत्त जाणि—ज्ञात्वा ठवहु—स्थापयत । कियतीभिर्मात्राभिर्विभूषितमित्यपेक्षा ( या )माह भावउ इति । अब लहु गुरु सेसिणा—लघुगुरुशेषिता लघुगुरुभ्या समाप्ति नीतो इत्यर्थः, सर अग्ग—शराधिकाः शराः पंच तथाच पंचाधिका इत्यर्थः, वीसइ कल—विंशतिरेव कलाः भावउ—भावयत, तथाच पंचविंशतिर्मात्रा अत्र प्रतिचरण पतति, तास्वेव चातिम मात्रात्रय लघुगुरुरूप कार्यमित्यर्थः । अत्र च चतुर्ष्वपि चरणेषु पादादौ चतुष्कल एव गणः कार्यः, अनंतर च चतुष्कलैः पंचकलैर्वा,

यथा चरणे विंशत्यक्षराणि पञ्चविंशतिर्मात्राश्च पतति, पादान्ते चावश्य क्रमेण लघुर्गुरुश्चायाति तथैव गणा देया इति तात्पर्यार्थः ॥

१५०. अथैनमेवार्थं द्विपदिकया स्पष्टीकृत्याह पढम इति। यत्र पढमहि। प्रथमं पादादौ चक्कलु गण—चतुष्कलो गणः होइ—भवति, अतहि—अते पादात दिज्जइ हार—दीयते हारः गुरु, तत् गअणग—गगनाग भण—कथय, अत्र च चौसक्खर—विंशत्यक्षराणि, पचास मत्त—पञ्चविंशतिर्मात्राः, विआरु—विचारय ॥

१५१. अथ गगनागमुदाहरति भञ्जिअ इति। अहिअ लघिअ साअरा—लघित—सागराहिते लघितः सागरो यैस्तादृशा अहिता यस्य तादृशे इत्यर्थः हंमार चलिअ—हमीरे चलिते सति, मलअ चोलवइ—मलयाधिपश्चोलदेशाधिपश्चेति द्वावित्यर्थः भजिअ—भग्नौ, गुज्जरा—गुर्जराः गुर्जरदेशीयाः राजानः णिवलिअ—निर्वलीकृत्य गजिअ—गजिताः, मालवराअ—मालवराजः परिहरि कुजरा—परिहृत्य कुंजरान् मलअगिरिमलयगिरौ लुक्किअ—निलीनः, खुरसाण—खुरसानः—खुरसानदेशीयः राजा रण मुहि—रणे मुग्धीभूय खुहिअ—क्षुभितः, काअरा—कातरे पलायितुमप्यसमर्थे तस्मिन्नित्यर्थः रिउगण—रिपुगणे हारवः पतितः ॥

१५२-१५३. अथ (द्विव) पदीनामक वृत्त लक्षयति आइगेति। हे बुहअणा—बुधजनाः, जत्थ—यत्र पढम(हि)—(प्रथमे) चरणे, इद न्तोपलक्षणं द्वितीयेऽपि बोध्यम्, आइग—आदिगः आदिस्थः पादाद्य इति यावत् इंदुः—षट्कलो भवति, ततश्च वेवि धणुहर—द्वौ धनुर्द्धरौ चतुष्कलाविति यावत् दिज्जइ—दीयेते, तथा पाइक्क जुअल—पदातियुगल पुरपि चतुष्कलयुगलमेवेत्यर्थः परिठवहु—परिस्थापयत, अत—अते पादाते महुअरचरण—मधुकरचरणः षट्कल इत्यर्थः दिज्जइ—दीयते, एव दोवइ—द्विपदीं भणत, तहि—तथा हे कइअणा—कविजनाः, सरसइ ले(लु)इ पसाअ(उ)—सरस्वत्याः सकाशादगृहीत्वा प्रसादं पुहविहि—पृथिव्या विविह चित्त सुदर—विविधचित्तसुदर विविधानि अनेकप्रकाराणि यानि चित्तानि तेषा रमणीय सर्वलोकमनोहरमित्यर्थः कइत्त—कवि(वि)त्व अनेन च वृत्तेनेति शेषः करहु—कुरुत, अनेन छदसा निर्मित कवित्वं सर्वजनमनोहर भवतीति भाव इति योजना।

अत्र यद्यपि इदुशब्दः लघुद्वयोत्तरगुरुद्वयात्मक षट्कलवाची, तथाप्यत्र षट्कलसामान्यपरोऽवसेयः, उदाहरणे तथैव दर्शनात्। मधुकरचरणशब्दश्च यद्यपि षट्कलनामसु पूर्वं नोपात्तस्तथापि मधुकरचरणाना षट्त्वसख्यासत्त्वादत्रापि तत्पुरस्कारेणैव षट्कलपरो बोध्यः। क्वचित्तु दिज्जइ तिण्णि धणुहरमिति पाठः,

सः प्रामादिकः, एवं सति पादाते पट्कलगणालाभेन महुअर चरण अंत लेइ दिज्जसु इत्यग्रेतनेन विरोधात्। एतत्पाठानुसारेणैव कैश्चिदग्रे महुर चरणेति पाठ प्रकल्प्य तस्य च मुग्धशब्दस्य गुरुनामसूपात्तत्वात्तत्पर्यायत्वान्मधुरोगुरुस्तथाच मधुरो गुरुः अत—चरणाते दीयतामित्यर्थः कृतस्तदपि भ्रमविलसित, लक्षणस्यापि लक्ष्यताया महुर चरणेति पाठे कल्प्यमाने एकमात्रान्यूनतया लक्षणासगतेः।

१५४. अथ उट्टवनिकातरं मनसि विधाय दोहावृत्तेन पुनर्द्विपदीं लक्षयति छक्कलु इति। छक्कलु— षट्कल मुह सठाविकइ—मुखे आदौ सस्थाप्य, पच चक्कलु—चतुष्कलान् करेह—कुरुत, अतहि—पादाते एक्कहि—एकमेव हार गुरु देह—दत्वा, दोवइ छद कहेहु—द्विपदीच्छदः कथयत। पूर्वं पट्कलानतर चत्वारश्चतुष्कलास्तदनतर च पुनः षट्कल इ युक्तम्, इदानीं तु पादातस्थपट्कला-तर्गत चतुष्कल चित्ते कृत्वा षट्कलानतर पच चतुष्कला उक्तास्तदनतर च पट्कलातर्गतस्य मात्रायुगस्योर्वरित्वात्तस्यैवेको गुरुर्देय इत्युक्तमित्युट्टवनिकाकृतः एवं पूर्वापरयोर्भेदः। इद च वृत्त द्विपादमेव, न ( च )तुष्पाद, उदाहरणानुरोधादिति केचित्। अन्ये तु यदीद द्विपादमेत्र, तर्हि लक्षण पादचतुष्टयेन कथं कृतमिति इद चतुष्पादमेव, न चोदाहरणविरोधस्तस्य चरणद्वयेनापि सभवात्, न चैतादृशमन्यत्र न दृष्टमिति वाच्य, षोडशचरणायाश्चतुःपादिकाया एकस्यैव चरणस्योदाहृतत्वादित्याहः। परे तु लक्षण वृत्तद्वयेन कृतमितीदमुदाहरणानुरोधाद्विपादमित्याहुः॥

१५५. अथ द्विपदीमुदाहरति दा*****।

१५६. अथ झुल्लणानामक वृत्त लक्षयति पढम दहेति। जह—यत्र, विरइ-विरतिः पढम—प्रथमम् आदौ दह—दशसु मात्रास्विति शेषोऽत्रापि योजनीयः, दिज्जिआ—दत्वा पुणवि—पुनरपि तह—तथा तेनैव प्रकारेण दशस्वेत्र मात्रास्वित्यर्थः किज्जिआ—कृता, पुणवि—पुनरपि दहसत्त—सप्तदशसु मात्रासु जाआ—जाता, एम परि—एव परिपाट्या विविह दल—द्वयोर्दलयोः प्रत्येकमिति शेषः, सततीस—सप्तत्रिंशत् मत्त—मात्राः पल—पतति, एह—एना ( णाअ-राआः—नागराजः झुल्लणा कह—कथयति।

१५७. अथ झुल्लणामुदाहरति सहसेति। सहस मअमत्त गअ—सहस्रं मदोन्मत्तगजान् लक्ख लक्ख—लक्ष लक्षम् अश्वाश्चेति शेषः पक्खरिअ—वारवाणेनावगुण्ठ्य साजि—सज्जीभूय साहि दुइ—सार्वभौमद्वय गिंदू—कदुक खेलत—क्रीडतः, हे प्रिय, तहि—तत्र कोप्पि—प्रकुप्य जाहि—गच्छ, विमल जसु—यशः महि—मग्ना ( द्या ) थप्पु—स्थापय। तुअ—त्वा कोइ—को पि तुलुक—तुरुष्कः हिंदू— ( हिन्दु ) को वा णहि जिणइ—नहि जेष्यति॥

१५८. अथ खजानामक वृत्त लक्षयति धुअ धरिअ इति । हे कमलणअणि— हे कमलनयने, यत्र चिहु पअ—पादद्वये प्रत्येकमिति शेषः टिअवर णवगण— द्विजवरनवगणान् षट्त्रिंशल्लघूनित्यर्थः धरिअ—धृत्वा अवलम्ब्येति यावत् विरइ—विरतिर्भवतीति शेषः, पुणविअ—पुनरपि च तदनन्तर चेत्यर्थः रअण— रगणः मध्यलघुर्गण इत्यर्थः बुहअण मोहए—बुधजनं मोहयतीति भावः, जु— यतः बुहअण मण सुहइ—बुधजनमनः सुखयति, यथा रजन्यां शशी सोहए— शोभते, तत् खंजावृत्तमिति शेषः, हे गजवरगमने त्व सुमरु—स्मर पौनः- पुन्येन भावयेत्यर्थः, इति वर फणिवइ—वरः फणिपतिः पिंगलः भणइ—भणति इति योजना ॥ यत्र षट्त्रिंशल्लघ्वनन्तर रगणः प्रतिचरण पतति । तत् खजानामकं वृत्तमिति फलितोर्थः । इव च द्विपदमेवेति ध्येयम् ॥

१५९. अथ दोहावृत्तेन स्पष्टीकृत्य खजा लक्षयति विहु दलेति । विहु— द्वयोर्दलयोः प्रत्येकमिति शेषः णव विप्पगण—(नव) विप्रगणान् पल- प्रकटयत, अत—पादाते जोहलु—योद्धार मध्यलघु रगणमित्यर्थः ठवेहु—स्थापयत, एव खज पअ—खजापादे खजानामकस्य वृत्तस्य चरणे इत्यर्थः एआलिस मत्त—एकचत्वारिंशन्मात्राः, दहगण—दश गणान् तत्थ—तत्र मुणेहि— जानीत ॥

१६०. अथ खजामुदाहरति अहीति । अहि ललइ—अहिः शेषः लल (य) ति स्थानच्युतो भवतीत्यर्थः, योद्धृणा पादाघातेनेति भावः । अतएव महि—मही पृथ्वी चलइ—चलति, अतएव मह्याश्रितः गिरिः कैलासः खसइ- पतति, ततश्च तदाश्रितो हरः खलइ—स्खलति, ततश्च तद्भालस्थः शशी घुमइ—घू(घू)र्णते, अतएव अमिअ वमइ—अमृत वमति, ततश्चामृतसम्पर्कात् मुअल—मृताः जिविअ—जीवित्वा उट्ठए—उत्तिष्ठतिः ततश्च जीवितातान्तेषा चरणाघातेन पुणु धसइ—पुनरधो गच्छति मही, पुणु खसइ— पुनः स्खलित कैलासः, पुणु ललइ—पुनर्लल (य) ति स्थानच्युतो भवति शिवः, ततश्च पुण घुमइ—पुनर्घूर्णते शशी, पुण वमइ—पुनर्वमत्यमृतं, पुनश्च जिविअ—जीवित्वा उत्थिता मृताः इति समरे विविधकौतुक परिदिट्ठए—परिदृश्यते ।

१६१. अथ शिखा लक्षयति ससिवअणीति । हे शशिवदने गजगमने पअ पअ—पदे पदे प्रतिचरणमित्यर्थः पअहरह ससिक्ख—सपयोधरशिखान् पयोधरो यत्र्यगुरुर्जगणस्तथा च सपयोधरा सजगणा शिखा अग्रभागो येषां तादृशान् अतस्थितजगणानित्यर्थः दिअगण छ—द्विजगणान् चतुर्लघ्वात्मकगणान् षट् पढ—

पठ द्वयोरपि दलयोः षड्द्विजगणानतर जगण स्थापयेत्यर्थः । परन्तु जुअइ दज्ञ—द्वितीयदल पढम—प्रथमम् आदौ वि वि लहु—द्वौ द्विलघू द्वौ द्विलघ्वात्मक-गणावित्यर्थः पअलि—प्रकटीकृत्य अपरमेक द्विजगण प्रकटीकृत्येत्यर्थः, दिअगण सहिअ—जगणसहित द्विजगणैः पूर्वोक्तप्रकारेणाग्रस्थितजगणैः षड्भिर्युक्तमिति भावः, पठ इत्यनुपगः । प्रथम लघुद्वयात्मकगणद्वय सस्थाप्य अनतरमतस्थितजगणैः षड्द्विजगणैः सहित द्वितीय पठेत्यर्थः, तथा च प्रथमदले अतस्थजगणाः षडेव द्विजगणाः पतति, द्वितीयदले तु अत्यजगणाः सप्त द्विजगणाः पततीति भावः, सिक्ख—शिखा विद्धि इति शेषः, इति स प्रसिद्धः पिंगलः भणइ—भणति ॥

१६२. अथ गाहूच्छदसा प्रकटीकृत्य पुनः शिखा लक्षयति मत्त अठाइसेति । यत्र पढम ( हि )—प्रथमे पअ—पदे मत्त अठाइस—मात्रा अष्टाविंशतिः पततीति शेषः, बीए—द्वितीये पअ—पदे बत्तीस—द्वात्रिशत् मत्ताइ—मात्राः पतति, अंते—पादाते लहुआ—लघुः जगणस्येति भावः नियमेन पतति, ता शुद्धा शिखा विजानीत । अत्र अते लहुआ इति दलद्वयेऽत्यते जगणोऽवश्यं देय इति सूचनीय, षडद्विजगणाना चतुर्विंशतिर्मात्रा अत्यजगणस्य च मात्राचतुष्ट-यमेवमष्टाविंशतिर्मात्राः प्रथमचरणे, सप्तद्विजगणानामष्टाविंशतिर्मात्रा अत्यजगणस्य च मात्रा चतुष्टमेव द्वात्रिंशन्मात्रा द्वितीयचरणे पतति यत्र, तत् शिखानामक वृत्तमिति फलितार्थः ।

१६३. अथ शिखामुदाहरति फुलिअ इति । भमरु वहु—बहुभ्रमराः मह-मधूका मधूकवृक्षाः फुलिअ—पुष्पिताः, रअणिपहु—रजनीप्रभुश्चद्रः किरण लहु—लघुकिरण', वसतः अवअरु—अवतीर्णः । मलयगिरिगह्वर धृत्वा स्पृष्ट्वेति यावत् पवण वह— ( पवनः ) वहति, सहब कह—सहिष्ये कथ शृणु सखि निकटे नास्ति कातः ॥

१६४. अथ मालावृत्तं लक्षयति पढमेति । हे शशिवदने मृगनयने यत्र पढम चरणप्रथमचरणे णव दिअगण—नवद्विजगणाः नव चतुर्लघ्वा( ध्वा )त्मका गणाः पअज्ञ—पतति, पुणवि—पुनरपि नवद्विजगणानतरमित्यर्थः तह तथा रअण ठव—रगण मध्यलघुगण स्थापय, अंतए—अते रगणाते पादाते वा कण्णो—कर्णो गुरुद्वयात्मको गणः पतति इति शेषः, ततः गाहस्स—गाथायाः सेसम्मि—शेषः उत्तरार्द्धमिति यावत् पततीत्यनुपगः, सा माला हि—तन्मालानामक वृत्तमिति पिंगल णाअ—पिंगलनागः भणता भणति ॥

१६५. अथ दोहावृत्तेन स्पष्टीकृत्य पुनर्माला लक्षयति पढमेति । पढम—प्रथमे चरणे णव विप्पगण—नव विप्रगणाश्चतुर्लघ्वात्मककगणाः होइ—भवति, ततश्च

जोहलु कण्ण—योद्‌धृकर्णौ रगणगुरुद्वयात्मकगणौ ठवेहु—स्थापयत ॥ ततः गाहा—गाथायाः अत—अन्त्यम् अद्धा—अर्द्धम् उत्तरार्द्धमित्यर्थः देइ—दत्वा, मालाच्छदः कहेहु—कथयत ॥ अत्र देइ इत्येकारो ह्रस्वो ज्ञेयः । यत्र प्रथमचरणे नवचतुर्लध्वात्मकगण—रगण—गुरुद्वयात्मकगणाः पतति द्वितीयदलं च गाथोत्तरार्द्धस्वरूप भवति, तन्मालानामक वृत्तमिति फलितार्थः ॥

१६६. मालामुदाहरति वरिसेति । घण—घनः मेघः गअण—गगने भमइ—भ्रमति, जल—जलं वरिस—वर्षति, मणहरण—मनोहरः सिअल—शीतलः पवण—पवनः वातः वातीति शेषः कणअ पिअरि—कनकपीता विजुरि—विद्युत् णचइ—नृत्यति, णीवा—नीपाः कदम्बाः फुल्लिआ—पुष्पिताः । पत्थर वित्थर हिअणा—प्रस्तरविस्तीर्णहृदयः पिअणा—प्रियः णिअल—निकटे ण आवइ—नायाति ॥

१६७. अथ चुलिआलानामक वृत्त लक्षयति, चुलिआलेति । दोहा उप्पर-दोहोपरि दोहायामिति यावत् मत्तहि पंचइ—मात्राः पंच यदि देइ—दीयते, तदा चुलिआला कह (?) चुलिआला कथय । नच(नु) दोहाया कि प्रतिचरणे उत प्रतिदले वा देयाः पचमात्रा इत्यत आह पअ पअ उप्परेति, पदपदोपरि, अत्र पदशब्दो दलवाची उदाहरणानुरोधात् तथा च एकैकदले इत्यर्थः, संठवहु—सस्थापयत पचमात्रा इत्युनुषगः ॥ ननु सर्वलघुरूपा उत गुरुलघुरूपा चेति कीदृश्य एकैकदलेंऽते आदौ वा स्थाप्या इत्यत आह, सुद्धेति,—शुद्धः कुसुमगण आदौ एको लघुस्तत एको गुरुस्ततो लघुद्वयमेतादृशो गण इत्यर्थः । अतह—अते दिज्जइ—दीयते ॥ एव च दोहाया एकदलाते यदि पचमात्राः कुसुमगणस्वरूपा दीयते, तदा चुलिआलानामकं वृत्त भवतीति फलितार्थः ॥

१६८. अथैनमेवार्थं दोहावृत्तेन पुनराह, दोहालक्खणेति । आदौ दोहा-लक्खण—दोहालक्षणम् उप्परि—उपरि तदनतरमित्यर्थः पंचइ मत्त—पचैव मात्राः सठवहु—(स) स्थापयत एव अट्ठदहुप्परि वीसदुइ—अष्टादशोपरि विंशतिद्वयेन मात्राणामिति शेषः, अष्टपचाशन्मात्राभिरित्यर्थः, चुलिआला उक्खित—उक्ता । क्वचिद्दोहासखा सठवहु इति पाठस्तत्र आदौ दोहासखा—दोहासख्या दोहामात्रासंख्याकमात्रामिति यावत् इति व्याख्येयम् ॥

१६९. चुलिआलामुदाहरति राआ लुद्धेति । राजा लुब्धः, समाजः खलः, वधूः कलहकारिणी, सेवको धूर्त्तः । अतः जइ—यदि बहुगुणजुत्तउ—बहुगुणयुक्तमपि बहुभिः कीर्त्तिप्रतिष्ठाप्रमुखैर्गुणः सहितमपीत्यर्थः जीवंतः(वन) अथ च सुख चाहसि—वाञ्छसि, तइ—तदा घर—गृह परिहरु—त्यजेत्यर्थः ॥

१७०. अथ सौराष्ट्रनामकं वृत्त लक्षयति सो सोरट्ठउ इति। जं—यत् दोहा विवरीअ ठिअ—दोहाविपरीतस्थितिः दोहातो विपरीता स्थितिश्चरणानां स्थापनं यस्य तादृशमित्यर्थः, सो—तत् सोरट्ठउ—सौराष्ट्रं सौराष्ट्रनामक वृत्त जाणु—जानीहि, तत्र च पअ पअ—पादे पादे प्रतिचरणमित्यर्थः जमक वखाण—यमक श्लाघय इति णाअराअ पिंगल—नागराजपिंगलः भणइ—भणति। अय भावः—दोहायाः प्रथमतृतीयचरणयोस्त्रयोदशमात्राः द्वितीयचतुर्थ-चरणयोस्त्रयोदशमात्राः प्रथमतृतीययोश्चैकादशमात्रा देया इति।

१७१. अथ सौराष्ट्रमुदाहरति सो माणिअ इति। स मान्यः पुण्यः गुण-वत—गुणवान् यस्य भक्तः पंडित( स्त )नयः, यस्य गृहिणी गुणवती, से वि—अस्यापि पुहवि—पृथ्वी सग्गह णिलअ—स्वर्गनिलयः स्वर्गवास इत्यर्थः॥

१७२. अथ हाकलीनामक वृत्त लक्षयति सगणेति। जहा—यत्र सगणा—सगणो गुर्वंतश्चतुष्कल इत्यर्थः, भगणा—भगणो गुर्वादिश्चतुष्कल इत्यर्थः, दिअगण—द्विजगणश्चतुर्लघ्वात्मको गण इत्यर्थः, ई—एते गणा इत्यर्थः, अथ च मत्त चउद्दह—मात्राश्चतुर्दश पअ पलई—पादे पतति पातयते चेति शेषः, बंको—वक्रमेक गुरु सटइ—सस्थाप्य, विरइ—विरतिर्भवति, अंतिमगुरोः प्रागेव विरतिरित्यर्थः। एहु—एतत् हाकलिरूअह—हाकलीरूप हाकलिनामकवृत्तस्य स्वरूपमित्यर्थः कहा—कथितम्। अत्र सगण—भगण—द्विजगणातिरिक्तो गणो ( न ) भवतीति, एते एव च स( म )स्ता व्यस्ता वा पततीति नियमस्त-थाच यदि सगणत्रयानतर भगणत्रयानतर द्विजगणत्रयानतरं वा एको गुरुः स्थाप्यते प्रतिचरणं, तथापि हाकलीवृत्त भवति। अथ एकस्मिश्चरणे सगणत्रया-नतरमेक गुरुं ( सं )स्थाप्य तदितरचरणेषु भगणत्रयानतर द्विजगणत्रयानतरं परस्परसंसृष्टैतद्द्वयानतर द्विजगणत्रयानतर वा एक गुरु सस्थाप्य तदितरेषु परस्पर ससृष्टैतत्त्रयानंतर गुरुः स्थाप्यते तत्राप्येतद्वृत भवतीति न विभावनीयम्॥

१७३. अथ नियमातरमगीकृत्य पुनर्हाकलीवृत्त लक्षयति, मत्त चउद्दहेति। पढम दल—प्रथमदले पूर्वार्द्धं इति यावत् प्रतिचरणमिति शेषः, क्वचित्तु पअह पअ इति पाठस्तत्र पादे पादे अर्थात्पूर्वार्द्धस्य, उत्तरदले इत्यग्रे उक्तत्वादिति वोध्यम्, एग्गारह वण्णेहि—एकादशवर्णैः कृत्वा मत्त चउद्दह—मात्राश्चतुर्दश, उत्तर दलहि—उत्तरदले उत्तरार्द्धे इत्यर्थः प्रतिचरणम् इत्यनुपगः, दह अक्खर—दशाक्षरैश्चतुर्दशमात्राः इत्यनुपगः यत्र पततीति शेषः, तत् हाकलि छद कहेहि—हाकलीनामक छदः कथय॥ अत्र च प्रथमद्वितीयचरणयोर्द्विज-गणैर्देय एव, अन्यथा एकादशाक्षरोक्त्यसंभवापत्तिः। तृतीयचतुर्थयोश्च द्विजगणे-नैव देयः अन्यथा दशाक्षरोक्त्यसभवापत्तिः, इति नियमे तात्पर्यमुन्नीयते। तथाहि

क्रमेण विपर्ययेण वा सगणभगणौ अथवा सगणद्वयमेव भगणद्वयमेव वा (स) स्थाप्य यदि द्विजगणो दीयते अन्ते च गुरुर्दीयते, तदैवाक्षरषट्क सगणभगणयोरक्षरचतुष्टय च द्विजग(ण)स्य एकमक्षर च गुरोरेवमेकादशाक्षराणि पूर्वार्द्धे प्रतिचरण पतति, उत्तरार्द्धेऽपि चेदेव द्विजगणः स्थाप्यते तत्राप्येकादशाक्षराणि स्युः, तस्मादुत्तरार्द्धे सगणत्रयोत्तर भगणत्रयानतर वा परस्परससृष्टैतत्त्रयानंतरं वा गुरुः प्रतिचरण स्थाप्यते तदैवोत्तरार्द्धे दशाक्षराणि पतंति, एवं च प्रथमद्वितीयचरणयोर्द्विजगणदानमंगीकृतपूर्वं लक्षणकृता,**** तदनगीकारेण चैतल्लक्षणमित्यस्मत्तातचरणोपदिष्टः पथाः सुधीभिर्विभाव्यः ॥

१७४. अथोत्तरलक्षणाभिप्रायेण हाकलीमुदाहरति उच्चेति। यस्य उत्तमाच्छादित विमल गृह, तरुणी विनयपरा गृहिणी काता, वित्तपूर्ण मुद्रागृह के(को) शभाडमित्यर्थः, तस्य वर्षासमयः सुखकरः ॥

१७५. अथ मधुभारनामक वृत्त लक्षयति जसु पलईति। जसु—यस्य चरणे इति शेषः चउमत्त वेवि—चतुर्मात्रिकौ द्वौ पततः, सेख—शेषे पादाते इत्यर्थः एक्क—एकः चतुर्मात्रिकइत्यर्थः (पल)इ—पतति, कर्त्तव्ययोर्द्वयोश्चतुर्मात्रिकयोश्चातिमश्चतुर्मात्रिको जगणस्वरूप एव पततीत्यर्थः, एवि—एतत्, मधुभारनामकमेतद्वृत्तमित्यर्थः ॥

१७६. मधुभारमुदाहरति। जस्सिति। यस्य शीर्षे चद्रः पिंधन दिक्। स देवः शम्भुः मह्य सुख ददातु ॥

१७७. अथाभीरनामक वृत्तं लक्षयति गारहेति। यत्र गारह मत्त—एकादशमात्राः क्रियते, पयोधरः दीयते कर्त्तव्यास्वेकादशमात्रासु अतिममात्राचतुष्टय जगणस्वरूपमेव स्थाप्यते इत्यर्थः, (एह)—एतत् आभीर सुछदु—आभीरः सुच्छदः इति पिंगलधीरः जल्पति ॥

१७८. आभीरमुदाहरति। यस्याः पीनपयोधरभारे मौक्तिकः हारः लोटइ—लुटति, दीर्घविशाललोचना सा सुदरी गुर्ज(री) नारी ॥

१७९. अथ दंडकल लक्षयति कुतद्धरु इति। कुतधरः धनुर्धरः हयवरः गजवरः एतच्चतुष्कलचतुष्टय, ततः छक्कलु—षट्कलः, ततश्च गुरुसजुत्तउ—गुरुसयुक्तम् अतस्थितैकगुरुकमित्यर्थः, विवि पाइक्क—पदातिद्वय चतुष्कलद्वयमित्यर्थः, एव दले—पूर्वार्द्धे उत्तरार्द्धे चेत्यर्थः, बत्तीस मत्तह—द्वात्रिंशन्मात्राः पअ—पादे पतंति प्रत्येकमिति शेषः, सपुण्ण(उ) चरणचतुष्टयस्य इत्यर्थः, बीसअठग्गलु(ल)—अष्टाविंशत्याधिकाः स३ कल—शत कला भवति, तत् सुपसिद्धउ—सुप्रसिद्ध फणि भासिअ रूअउ—फणिभाषितरूप, भुअणे—भुवने दडकल णिरुत्तउ—दडकलः

निरुक्तः इति पैंगलिका मनसि जल्पति हे बुधजनाः यूयं हिअतले—हृदयतले जाणहु—जानीत । यत्र प्रथमं चतुष्कलचतुष्टयं तत एकः षट्कलः ततश्च पुनश्चतुष्कलद्वय तत एको गुरुः प्रतिचरणं पतति, तद् डकलनामकं वृत्तमिति फलितार्थः ॥

१८०. दंडक्लमुदाहरति राअह इति । हअ गअ घर घरिणी—हयगज(गृह) गृहिणीः परिहरि—परित्यज्य भग्गता—पलायमानाः केचन राअह—राजानः दिअ लग्गता—दिक्षु लग्नाः दिगन्तं गता इत्यर्थः, तेषा चेति शेषः लोरहि—अश्रुभिः भरु सरवरु—भृताः सरोवराः, कश्चिच्च पअ परु परिकरु—पादपतितनिगडः धरणी—धरण्यां लोट्टइ—विचेष्टते, तनु शरीरं च पिट्टइ—ताडयति, कर दतगुलि—कृतदतागुलिः सन् पुण उट्ठइ सभलि—पुनरुत्तिष्ठते सावधानीभूय, बाल तणअ कर जमलकरे—बालतनयकरेण नमस्कार कारयति । इद च जातिवर्णन । तथावस्थ च दृष्ट्वा त सोहलु काआ—स्नेहकायः कासीसर राआ—काशीश्वरराजः माआ—माया दया करि—कृत्वा पुनः थप्पि धरे—संस्थाप्य धृतवान् स्वराज्ये रक्षितवानित्यर्थः ॥

१८१. अथ दीपकनामकं वृत्तं लक्षयति सिर देहेति । सिर—शिरसि आदावित्यर्थः चउ मत्त—चतुर्मात्रिकं गण देह—स्थापय, अत—अत पादाते लहु एक—लघुमेक करु—कुरु, तसु—तयोः चतुर्मात्रिकैकलघुकगणयोरित्यर्थः मज्झ—मध्ये कुतेक्क—कुंतमेकं पंचकलमेकमित्यर्थः कुरु इति पश्चात्तनेनान्वयः, दीपक्क सोउ बुज्झ—दीपकनामक ( तत् ) वृत्तं जानीहीत्यर्थः । यत्र प्रथम चतुष्कलस्ततः पंचकलस्तत एको लघुः प्रतिचरण पतति, तद्दीपकनामकं वृत्तमिति फलितार्थः । क्वचित् कु तत्ति तसु मज्झेति पाठस्तत्र अते दलाते एक लघुं कुरु, कुंतति—कुतत्रय तसु—तयोश्चतुर्मात्रिकैकलघुकगणयोः मज्झ—मध्ये कुरु इत्यर्थः । इदं च एकैकदलाभिप्रायेण, अन्यथैकैकपादे चतुष्कलत्रयस्याभावादसभवापत्तिरिति दृष्टव्यं । प्रथम यत्र चतुर्मात्रिकस्ततः पचकलत्रय ततो लघुः प्रतिदल पतति, तदा ( दी )पकं वाछ इति द्वितीयपाठे निर्गलितार्थः ॥

१८२. अथ दीपकमुदाहरति जसु हत्थ इति । विपक्ख कुलकाल—विपक्षकुलकालः करवालः खड्गः जसु हत्थ—यस्य हस्ते, सोह—शोभते, यस्य सिर—( शिर ) सि वर छत्त—वरच्छत्र, सपूर्णशशिवत्, अथवा संपूर्णशशिमात्रं पौर्णिमचद्रमडलप्रमाणमित्यर्थः शोभते इति पूर्वेणैवान्वयः ॥

१८३. अथ सिंहावलोकनामकं वृत्त लक्षयति गण विप्पेति । पअह पअं—पादे पादे गण विप्प सगण—विप्रगणसगणौ धरि—धृत्वा, छदवरं—छदः श्रेष्ठं

सिहअ लोअइ—सिंहावलोक भण, तसु—तस्मिन्, न जगणः न भगणः न कर्णगणः। जगणो मध्यगुरुर्गणः, भगणो गुर्वादिर्गणः, कर्णो गुरुद्वयात्मको गणः, एते तत्र न पततीत्यर्थः, इति णाअ भणा—नागः भणति। हे गुणि अण—गुणिजनाः यूयमिति (शेषः) भण बुभ्झह—मनसि बुध्यध्वम्॥ अत्र विप्रस-गणयोः क्रमिकयोः समुदितयोर्वा स्थापने न नियमः, किंतु एताभ्यामेव व्यस्तसम-स्ताभ्या पादे षोडशकलाः पूरणीयाः, एताभ्यामतिरिक्तश्च गणो न देयः। अतए-वोदाहरणे प्रथमपादे न (स)गणचतुष्टयेनैव षोडशमात्राः पूरिताः, द्वितीयचरणे च प्रथमविप्रद्वयमनतर सगणद्वयमित्युभाभ्यामेव षोडशकलाः पूरिताः, तृतीये च पुनः सगणद्वयचतुष्टयेनैव पूरिताः, * * * न त्वन्यो गणो दत्तः, न त्वेतावेव क्रमिकसमुदिताविति द्रष्टव्यम्॥

१८४. अथैनमेवार्थं विशदीकृत्य द्विपदिकयाह विप्प सगणेति। विप्प सगण पअ बेवि गण—विप्रसगणौ पादे द्वावेव गणौ अत—अत पादाते हार—हारं गुरु विसज्जहि—विसर्जय, पादात सगणान्तः पतित गुरु विसर्जय न त्वन्यमित्यर्थः, तथा च पादाते सगण एव देय इति नियमो लभ्यते इति। हेरि—निरीक्ष्य विभाव्य, पच्छा—पश्चात् सोलह कल पत्थार षोडशकलप्रस्तार षोडशकलाः प्रस्तार्यन्ते अस्मिन्नेतादृशमित्यर्थः कइत्त—कवित्व कुरु, एतल्लक्षण विभाव्य पश्चादेतच्छदसा कवित्वं कुरु इत्यर्थः॥

१८५. अथ सिंहावलोकमुदाहरति हणु इति। हतोज्ज्वलगुर्जरराजदलः, दरदलितचालितमहाराष्ट्रबलः, बलमोटितमालवराजकुलः, एतादृशः कुल उज्जल—उज्ज्वलकुलः, करचुलि (कण)—करचुलिवंशोद्भवः कर्णः फुरा—स्फुरति॥

१८६ अथ प्लवंगमना(म)क वृत्त लक्षयति जत्थेति। जत्थ—यत्र पढम—प्रथम पादादावित्यर्थः छअ मत्त—षण्मात्राकः पअप्पअ—पादे पा(दे) दिज्जए—दीयते, ततश्च चउमत्त गणा—चतुर्मात्राका गणा दिज्जए—दीयंते इति पूर्वेणैवान्वयः, पचमत्त—पचमात्राकगणः णहि किज्जए—न क्रियते। षट्कलानतर चतुर्मात्राकगणेनैव पादपूरण कर्त्तव्य न तु पचमात्राकगणेनेत्यर्थः। अते—पादात इत्यर्थः संभलि—सस्मृत्य एक्कक—एकैकः लहु गुरु—लघुर्गुरुः चाहए—अपेक्ष्यते पादाते लघुगुरू अवश्यक्रमेण स्थापनीयावित्यर्थः, हे मुद्धि—मुग्धे, तत् प्लवगमच्छदो विलक्षणं शोभते॥ अत्र षट्कलोत्तरं यथासंभव पतितैश्चतुर्मात्राकैः न तु पचमात्राकैः पादाते अवश्यापेक्षणीयाभ्या च लघुगुरुभ्या प्रतिचरणमेकविंशतिः कलाः पूरणीया इति सप्रदायः॥ तथाच प्रथममेकः

षट्कलस्ततश्चतुष्कलत्रय ततो लघ्वादिस्त्रिकलः यत्र प्रतिचरण पतति, तत् प्लवंग (म)नामक वृत्तमिति फलितार्थः ॥

१८७. * * * * * * * *

१८८. अथ प्लवंगममुदाहरति, हे सहि—सखि, यत् चचल विज्जुलिश्रा—चचला विद्युत् णच्चइ—नृत्यति, एत (अतो) मम्मह—मन्मथः जलहर साणए—जलधरशाणके मेघस्वरूपशस्त्रोल्लेखने यत्रे इत्यर्थः खग्ग किणीसइ—प्र (ख) ड्ग तीक्ष्णयति इति जाणए—ज्ञायते । फुल्ल कदबश्र—पुष्पिताः कदम्बकाः, अम्बराडम्बरः दृश्यते, घनाघनः वरीसए—वर्षति, अतः हे सुमुखि पाउस पाउ—प्रावृट् प्राप्ता न तु कात इति भावः ॥

१८९. अथ लीलावतीनामक वृत्तं लक्षयति गुरु लहु इति । जहि—यत्र गुरु लहु णहि णिम्म—गुरोर्लघोर्नास्ति नियमः एतावतो गुरव एतावतो लघवश्च यत्र पतंतीति नियमो नास्तीत्यर्थः, श्रक्खर—अक्षरेऽपि णिम्म णहि—नियमो नास्ति, एतावत्यक्षराणि पततीत्यपि यत्र न नियम इत्यर्थः, विसम सम—विषमे ( समे ) पयोधरः जगणः पलइ—पतति इत्यपि कहु णहि णिम्म—कुत्रापि चरणे नास्ति नियमः, किन्तु गण पच चउक्कल—गणाः पच चतुष्कलाः चतुष्कलभेदात्मकाः पंचगणा इत्यर्थः, प्रस्तारक्रियया चतुष्कलस्य पच भेदाः ये भवती ते सर्वेऽपि व्यस्ताः समस्ता विपर्यस्ता इति हृदय । ते कियतः पतति इत्यत्र हेतुः कल बत्तीसेति, तथा च द्वात्रिंशन्मात्राः पूरका अष्टौ चतुष्कलभेदा इति भावः, निरतरमितरगणांतराव्यवहितमित्यर्थः पलइ पतति, श्रत—अते पादाते इत्यर्थः, कंत गण कातगण सगण इत्यर्थः, ध्रुव निश्चितं पत( ती )ति पूर्वेणान्वयः, यच्च छदः जेम यथा तरल तुरश्र—तरलतुरगः, तथा विदिशि दिशि अगम गम—अगम्ये गम्ये पसरइ—प्रसरति सुपरि—पादे ( ? ) परिलील—परितः लीलया, परिचलइ—परिचलति, सा लीलावती तत् लीलावतीनामकं वृत्त, कल बत्तीस—कलासु द्वात्रिंशत्सु विसाम करे—विश्रामं करोति इति योजना ॥ यत्र सप्तचतुष्कलानतर सगणः प्रतिचरण पतति, सा लीलावतीति फलितार्थः ॥

१९०. अथ लीलावतीमुदाहरति, सव अरि घरेति । जलण वीर हमीर चले—यस्मिन् क्षणे वीरहम्मीरश्चलितः, तस्मिन् क्षणे इति शेपः सर्व( व ) श्ररि घर—सर्वारिगृहेषु अग्गि—श्रग्निः धह धहेत्यज(नु)करणं ( कइ— ) कृत्वा जलइ—ज्वलति, दिग मग णह पह—दिङ्मार्गः नभःपथः अणलभरे—श्रनलभृतः अग्निना परिपूर्ण इत्यर्थः जात इति शेपः, घण थण हर जघग देश्राव करे—घनिस्तनभरजघनदत्तकरः घनिनीनाम् अरिविदग्धाना स्तनभरे जघणे च दत्तः करो येन स तादृश इत्यर्थः पाइक्क—पदातिः सव दीस पसरि—सर्वदिक्षु प्रसृत्य

लुरइ—चलति, भेरव भेरिअ सद्द पले—भैरवभेरीशब्दः पतति, भअ लुक्किअ—भयनिलीनस्थगितः वेरि तरुणि अण—वैरितरुणीजनः महि लुट्टइ—मह्या विचेष्टते, पिट्टइ—ताडयति खेदयतीति भावः, रिउ सिर टुट्टिअ—रिपुशिरासि त्रुटति ॥

१९१. अथ हरिगीतनामक वृत्त लक्षयति, गण चारि ( री ) ति । पअ पअहि ( ह )—पादे पादे प्रतिचरणमित्यर्थः प्रथम गण चारि—गणाश्चतुरः पचकलान् ठविज्जसु—स्थापयत, बीअ ठामहि—द्वितीये स्थाने प्रथमपचकलगणानंतरमिति यावत् छक्कलो—पट्कलान् स्थापयतेति पूर्वेणान्वयः, तथाच कर्त्तव्येपु चतुःपचकलेपु प्रथमपचकलानतरमेक पट्कल सस्थाप्य अनतरमुर्वरितास्त्रयः पचकला गणाः कार्या इति पर्यवसितोर्थः । अतहि अते पदाते इत्यर्थः गुरु करिज्जसु—गुरुमेक कुरुत, दह चारि दुइ दह दुइ—दश चतस्रः द्वे दश द्वे एव मत्त अट्ठाईसओ—मात्रा अष्टाविंशतिः पमाणह—प्रमाणयत पिंगलेन पआसिओ—पिंगलेन प्रकाशित, वण्णणेण सुसब्बलो—वर्णनेन सुसबलं सुतरा सबल समीचीनमित्यर्थः पसिद्ध—प्रसिद्ध हरिगीअ छद—हरिगीत छदः जाणहु—जानीत । प्रथममेकः पचकलस्तत एकः पट्कलस्ततस्त्रयः पचकलास्तत एको गुरुः यत्र पतंति, तदष्टाविंशतिमात्राकचरण हरिगीतनामक वृत्तमिति फलितार्थः ।

१९२. अथैनमेवार्थं दोहावृत्तेनाह, बीए छक्कलु इति । अत्र हरिगीतच्छदसीत्यध्याहरणीय, चारि पंचकल—चतुरः पचकलान् देहु—दत्त । बीए—द्वितीये स्थाने प्रथमपचकलानतरमित्यर्थः छक्कलु एक्क कहु—पट्कलमेक कथयत, अते—पादाते माणस—मानसमेक गुरुमित्यर्थः ठवेहु—स्थापयत, बारह उत्तर—द्वादशोत्तराः मत्त सउ—मात्राः शत चतुश्चरणसमुदिता जानीतेति शेषः ॥

१९३. अथ हरिगीतमुदाहरति गअ गअहीति । गजा गजैः सह ढुक्किअ—ढौकिता युद्धार्थं मिलिता इत्यर्थः, तुरअ तुरअहि—तुरगास्तुरगैः सह जुज्झिआ—अयुध्यन्( न्त ), रह रहहि—रथा रथैः सह मीलिअ—सयुक्ताः युद्धाय मिलिता इत्यर्थः धरणि पीलिअ—धरणिः पीडिता, तरणि—तरणिः सूर्यः लुक्किअ—आच्छन्नः हयगजपादोद्धतधूलिभिरिति भावः, अतएव अप्प पर—आत्मीयाः परकीया इति न वि( वे )क आसीदित्यर्थः, बल—बलानि सैन्यानि मिलिअ—एकीभूय आएउ—आगतानि, पत्ति—पत्तव( य ) धाएउ—धाविताः, गिरिवर सीहरो गिरिवरशिखराणि कंप—कंपितानि, साअर—सागराः उच्छलिअ—उच्छलिताः, काअर—कातराः रणभीरवो वा इत्यर्थः दीण—दीना जाता इति शेषः, दैन्यमाश्रिता इत्यर्थः, दीहरा—दीर्घं वैर वड्ढिअ—वैर वर्द्धित, कर्णे युध्यमाने सती( ति ) शेषः ॥

१९४. अथ त्रिभंगीनामक वृत्तं लक्षयति पढममिति। पढमं—प्रथममादौ दह—दशसु मात्रास्विितिशेषः, अग्रेऽपि यथायोग्यं योजनोयं, रहणं—विश्रामः, ततः अट्ठह—अष्टसु मात्रास्वित्यर्थः विश्रामः, ततः रसरहणं—रसेषु षट्सु तथाच रससंख्योपलक्षितासु षट्सु मात्रासु इत्यर्थः रहण—विश्रामः, एव द्वात्रिंशन्मात्राः प्रतिचरण पतती( ति ) शेषः, अंते—पदान्ते गुरुः सोहइ—शोभते, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अंतिममात्राद्वयमेकगुरुस्वरूप कार्यमित्यर्थः, तत् तिभ्भगीछद—त्रिभगीच्छदः तिहुवण मोहइ—त्रिभुवनं मोहयति, महिअल इति पाठे महीतलमित्यर्थः, अस्मै सिद्धः वरतरुण—तरुणवरः लोकश्चेत्यर्थः सराहइ—श्लाघते। अत्र यदि पओहरु—पयोधरः मध्यगुरुर्जगणइत्यर्थः पलइ—पतति, तदा किमइ मणोहरु—किमपि मनोहर न भवतीति शेषः, किंतु येन तच्छदसा कवित्वं क्रियते तासु कई—तस्य कवेः कलेवर शरीर हणइ—हति, इति विमलमई—विमलमतिः, जणिआणदं—जनितानदः, क्वचित्सुक्खाणद इति पाठः सुखी आनदीत्यर्थः, फणिंदो—फणींद्रः पिंगलः भणइ—भणति। अत्र चतुर्मात्रका अष्टौ गणाः प्रतिचरण देयाः, तेष्वेवातिमो गणो गुर्वतः कर्त्तव्यः, पूर्वोक्तमात्रासु विश्रामः कर्त्तव्य इति फलितार्थः।

१९५. अथ त्रिभगीमुदाहरति सिर किज्जिअ इति। शिरःकृतगग गौर्यर्द्धांग हतानग त्रि( ? )पुर) द )हन कृतफणिपतिहारं त्रिभुवनसारं वदितभस्मानं रिपुप्र( ? )मथन। सुरसेवितचरणं मुनिगणशरणं भवभयहर त्रिभु ( शू )लधर, सानदितवदन सुंदरनयन गिरिवरशयनं नमत हरम् ॥

१९६. अथ दुर्मिलां लक्षयति, तीस दुइ मत्त इति। हे नराः एतत् तीस दुइ मत्ते—द्वात्रिंशन्मात्राभिः परिसजुते—परिसंयुक्ते यत्र च एरिस भाअहि—एतादशभागैः एतादशैः अनुपदमे( व ) वक्ष्यमाणैः भागैः कलाशैरित्यर्थः, तिअ ठामहि—त्रिषु स्थानेषु विसम—विश्रामः दीसइ—दृश्यते, यत्र च पअ पअ—पादे पादे कण्ण धरा—कर्णग्रहं कर्णो द्विगुरुको गणस्तस्य ग्रह स्थापनमित्यर्थः, दृश्यते इति पूर्वेणान्वयः। कुत्र स्थानत्रये विश्रामो दृश्यते इत्यत आह पढममिति। यत्र च पढम—प्रथमं दह—दशसु मात्रास्वित्यर्थः णिलओ—निलयः विश्रामः इति यावत् किअ—कुरुत इद चाग्रेऽपि योज्य, बे—द्वितीयः अट्ठ ट्ठाअ—अष्टमस्थाने अष्टसु मात्रास्वित्यर्थः निलयः कृत इति पूर्वानुषगः, तीअं—तृतीयः चउदह—चतुर्दशसु मात्रास्वित्यर्थः निलयः कृतः, जो एरिसं छदे—यत् एतादशं छदस्त्रिभुवनवद्य तत् न जनाः जा(नी)त दुम्मिलकम् इति बुधजनराजः पिंगलः भणति—भणति ॥

१९७. अथैनमेवार्थं दोहावृत्तेन स्पष्टयति दहेति। दशसु वसु—अष्टसु चतुर्दशसु मात्रास्विति शेषः विरइ करु—विरतिं करु विसम—विषमे स्थाने कण्ण गण देहु—कर्णंगणं देहि। पदमध्ये विषमे स्थान यथाशक्य द्विगुरुक गण देहीत्यर्थः। अतर—मध्ये विप्प पइक्क—विप्र चतुर्लघुक गणं पदातिं सामान्यचतुष्कल भण दुर्मिलाच्छदः कथय॥ अत्र प्रतिचरण विषमस्थाने यथाशक्य प्राचुर्येण कर्णो देयः समे चेत्तत्पतति तदा न बाधकमिति द्रष्टव्यम्॥

१९८. अथ दुर्मिलामुदाहरति जे किज्जिअ इति। येन कृता धाटी पाविअ कित्ती—प्राप्ता कीर्त्तिः स काशीश्वरराजः ज खण—यस्मिन् क्षणे, जितः नेपालः भोटाताः स्वदेह ताडयन्तश्चलिताः दर्पहीनाः चीनाः भग्नीकृताः लोहावलेहाश्चक्रन्दुः पतिताः। ओड्डावितः अतरिक्ष प्रापितः ओड्डः, मोटितं मालवराजकुल तैलगाः पलायिताः परावृत्य नागताः॥

१९९. अथ हीरनामकवृत्त लक्षयति, णाउ पभणेति। हे सुप्रिय शिष्य आदौ तिण्णि छगण—त्रीन् छगणान् षट्कलगणानित्यर्थः जपु—जल्प कथयेत्यर्थः, अते—षट्कलत्रयाते जोहल—योद्धारं गणमिति यावत् करहि—कुरुष्व, तिण्णि धरहि वे वि करहि—त्रीन् स्थापय द्वौ कुरुष्व, एव पअहि—पादेषु मत्त—मात्राः लेक्खए—लेखय, अकाना वामतो गत्या त्रीन् द्वौ मिलित्वा त्रयोविंशतिर्मात्राः प्रति चरण स्थापयेत्यर्थः,। एतः (?) हार ठविअ विप्प ग(ण)हि सब्बल—हार गुरु सस्थाप्य विप्रगणैश्चतुर्लघुकगणैः सबल प्रचुर हीर—हीर पेक्खए—प्रेक्षस्व, एव तत् सुकविः दर्पेण (भण) ति, एतत् कमण जणइ—कः जानाति न कोऽपीत्यर्थः, इति नागः प्रभणति। अत्र त्रीन् षट्कलान् देहीत्युक्त्या षट्कलस्य त्रयोदशापि भेदाः प्राप्ताः, तत्र द्वादशतम एव भेदो वारत्रयं देशो (यो) नान्य इति ज्ञापयितु हारं सस्थाप्य, विप्रगणैः सबलमिति छदोविशेषणमिति द्रष्टव्यम्। उक्तविधषट्कलानतर च यत्र रगणः प्रतिचरण पतति तत् हीरनामकं वृत्तमिति फलितार्थः।

२००. अथैनमेवार्थं दोहावृत्तेन प्रकटयति हारेति। हे सुप्रिय शिष्य पूर्वं हार गुरु ततः विप्पगण—विप्रगण चतुर्लघुक गण भण कथय, एव तिअ विध—वारत्रयविधानेनेत्यर्थः भिण्ण सरीर—भिन्नशरीरं भिन्नम् अन्यच्छन्दोभ्यो विलक्षणं शरीर यस्य तदित्यर्थः अते पादाते जोहल—रगण संठवहु—स्थापय एव तेइस मत्त—त्रयोविंशतिमात्राकं हीर हीरनामक वृत्त भवतीति शेषः॥

२०१. अथ हीरमुदाहरति धिक्क दलणेति। इद चतुरगगतिविशेषानुकरण, तथा च धिक्क दलण थोग दलणेत्यनुकृत्य रग—रगे सग्रामे चलति,

रिंगओ—खुरलीं कुर्वंतः, तुरंगाः। धूलि धवलाः सबलशब्दाः प्रबलाः पत्तयः प्रेद्यते, यदा कर्णश्चलित तदा कूर्मः लल(य)ति भूमिर्भरति कीर्त्या ॥

२०२. अथ जलहरणनामक वृत्तं लक्षयति किअ पढमे ते। जहि—यत्र सव पअ—सर्वपादेषु पढम—प्रथमादौ किअ—कृताः मुणि दिअगण—मुनिद्विजगणाः मुनयः सप्त तत्संख्याताः चतुर्लघुकगणा इत्यर्थः पलइ—पतति, परहि—अनतर सप्तद्विजगणोत्तरमिति यावत् दिअ सगण—देहि सगण, एव दह वसु पुण रस—दशसु मात्रासु वसुषु अष्टसु मात्रासु पुनः रसेषु षट्सु मात्रासु इत्यर्थः पुनर्वसुषु इति शेषः, अन्यथा द्वात्रिंशन्मात्रानुपलब्धिः, विरइ करे—विरतिं कुरु। दह तिगुण—दश त्रिगुणिताः त्रिंशदित्यर्थः कल—कलाः करहि—कुरुष्व, पुणवि—पुनरपि ठव जुअल—स्थापय युगलं कलाया इति शेषः तथाच द्वात्रिंशन्मात्राः स्थापयेत्यर्थः। एम परि—एव परि एव परिपाटया ठवहु चउ चरणा—स्थापय चतुश्चरणान्, अत्र च जइ—यदि, पलइ कबहु गुरु—पतति कदापि गुरुः यदि सगणातर्गतगुर्वतिरिक्तोऽपि गुरुः पतति, सगणाति(रि)क्तोऽपि गुर्वादिर्मध्यगुरुर्वा गणः पततीति यावत्, त (दा) कबहु ण परिहरु—कदाचिदपि मा परिहर, तदा तमपि दत्वा द्वात्रिंशन्मात्राः प्रतिचरण देयाइत्यर्थः। एवं च द्विजगणषट्का( ट्कस्या )दौ मध्ये अते वा गुर्वादि मध्यगुरु वा एक गणं दत्वा अंते च सगण दत्वा द्वात्रिंशन्मात्राः प्रतिचरण देया इत्यर्थः। इतीदानीमुक्त भवति पूर्वं च सप्तद्विजगणानतर सगणमिति लक्षणद्वय बोध्यं। हे कमलमुखि (वि)बुधजनमनोहरणं मुणहि—जानीहि इति श्रीफणिपतिः सुकविवरः भणति इति योजना। सप्तद्विजगणानतर सगणः यत्र प्रतिचरण पतति, अथवा षट् द्विजगणाः एकः कश्चित् मध्यगुरुर्गुर्वादिर्वा गणः पतति अते च सगण एव यत्र पतति (त) त् मनो (जल) हरणमिति फलितार्थः ॥

२०३ अथैनमेवार्थं गाहूच्छदसा स्पष्टयति बत्तीसेति। मनो(जल)हरणच्छंदसात्यध्याहारः। बत्तीस होइ मत्ता—द्वात्रिंशद्भवति मात्राः, अते सगणाइ ठावेइ (हि)—अते सगण स्थापय, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अतिम मात्राचतुष्टयं सगणस्वरूप कार्यमित्यर्थः, पाएहि—पादेषु आदौ सब्ब लहु—सर्वे लघवो भवति यदि चेदेकः गुरु वेवि—द्वौ वा गुरू भवतस्तदा न दोष इत्यर्थः, तथाच सप्तद्विजगणानतर यगणः कार्यः, अथवा षट् द्विजगणाः, तेषामादौ अते मध्ये वा एकः गुर्वादिर्मध्यगुरुर्वा गणः कार्यः, सर्वेषामते च सगणो देय इति फलितार्थः! अतएव उदाहरणे चतुर्थचरणे रवीरेति षष्ठो जगणो दत्त इति द्रष्टव्यम्।

२०४. अथ मनो (जल)हरणमुदाहरति खुर इति। खुर—खुरैः महि—महीं खुदि—क्षोभयित्वा, खुलुकि ण ण ण ग्रदि इत्यनुकृत्य, घघरु रव कलहि—

१९७. अथैनमेवार्थं दोहावृत्तेन स्पष्टयति दहेति । दशसु वसु—अष्टसु चतुर्दशसु मात्रास्विति शेषः विरइ करु—विरतिं करु विसम—विषमे स्थाने कण्ण गण देहु—कर्णगणं देहि । पदमध्ये विषमे स्थान यथाशक्य द्विगुरुक गण देहीत्यर्थः । अतर—मध्ये विप्प पइक्क—विप्र चतुर्लघुक गण पदातिं सामान्यचतुष्कलं भण दुर्मिलाच्छदः कथय ॥ अत्र प्रतिचरण विषमस्थाने यथाशक्य प्राचुर्येण कर्णो देयः समे चेत्तत्पतति तदा न बाधकमिति द्रष्टव्यम् ॥

१९८. अथ दुर्मिलामुदाहरति जे किज्जिअ इति । येन कृता धाटी पाविअ कित्ती—प्राप्ता कीर्त्तिः स काशीश्वरराजः ज खण—यस्मिन् क्षणे, जितः नेपालः भोटाताः स्वदेह ताडयन्तश्चलिताः दर्पहीनाः चीनाः भग्नीकृताः लोहावलेहाश्चक्रन्दुः पतिताः । ओड्डावितः अतरिक्ष प्रापितः ओड्डः, मोटितं मालवराजकुल तैलगाः पलायिताः परावृत्य नागताः ॥

१९९. अथ हीरनामकवृत्तं लक्षयति, णाउ पभणेति । हे सुप्रिय शिष्य आदौ तिण्णि छगण—त्रीन् छगणान् पट्कलगणानित्यर्थः जपु—जल्प कथयेत्यर्थः, अते—पट्कलत्रयाते जोहल—योद्धारं गणमिति यावत् करहि—कुरुष्व, तिण्णि धरहि वे वि करहि—त्रीन् स्थापय द्वौ कुरुष्व, एव पअहि—पादेषु मत्त—मात्राः लेक्खए—लेखय, अंकाना वामतो गत्या त्रीन् द्वौ मिलित्वा त्रयोविंशतिर्मात्राः प्रति चरण स्थापयेत्यर्थः, । एतः (?) हार ठविअ विप्प ग(ण)हि सब्बल—हार गुरु सस्थाप्य विप्रगणैश्चतुर्लघुकगणैः सबल प्रचुर हीर—हीर पेक्खए—प्रेक्षस्व, एव तत् सुकविः दर्पेण (भण) ति, एतत् कमण जणइ—कः जानाति न कोऽपीत्यर्थः, इति नागः प्रभणति । अत्र त्रीन् पट्कलान् देहीत्युक्त्या पट्कलस्य त्रयोदशापि भेदाः प्राप्ताः, तत्र द्वादशतम एव भेदो वारत्रय देशो (यो) नान्य इति ज्ञापयितुं हारं सस्थाप्य, विप्रगणैः सबलमिति छदोविशेषणमिति द्रष्टव्यम् । उक्तविधपट्कलानतर च यत्र रगणः प्रतिचरण पतति तत् हीरनामकं वृत्तमिति फलितार्थः ।

२००. अथैनमेवार्थं दोहावृत्तेन प्रकटयति हारेति । हे सुप्रिय शिष्य पूर्वे हार गुरु ततः विप्पगण —विप्रगण चतुर्लघुक गण भण कथय, एव तिअ विध—वारत्रयविधानेनेत्यर्थः भिण्ण सरीर—भिन्नशरीरं भिन्नम् अन्यच्छन्दोभ्यो विलक्षण शरीर यस्य तदित्यर्थः अते पादाते जोहल—रगण संठवहु—स्थापय एव तेइस मत्त—त्रयोविंशतिमात्राक हीर हीरनामक वृत्तं भवतीति शेषः ॥

२०१. अथ हीरमुदाहरति धिक्क दलणेति । इद चतुरगगतिविशेषानुकरण, तथा च धिक्क दलण थोग दलणेत्यनुकृत्य रग—रगे सग्रामे चलति,

रिंगओ—खुरली कुर्वंतः, तुरंगाः। धूलि धवलाः सबलशब्दाः प्रबलाः पत्तयः प्रेर्यते, यदा कर्णश्चलित तदा कूर्मः लल(य)ति भूमिर्भरति कीर्त्या ॥

२०२. अथ जलहरणनामक वृत्तं लक्षयति किअ पढमे ति। जहि—यत्र सत्र पअ—सर्वपादेषु पढम—प्रथमादौ किअ—कृताः मुणि दिअगण—मुनिद्विजगणाः मुनयः सप्त तत्संख्याताः चतुर्लघुकगणा इत्यर्थः पलइ—पतति, परहि—अनतर सप्तद्विजगणोत्तरमिति यावत् दिअ सगण—देहि सगण, एव दह वसु पुणु रस—दशसु मात्रासु वसुपु अष्टसु मात्रासु पुनः रसेषु षट्सु मात्रासु इत्यर्थः पुनर्वसुषु इति शेषः, अन्यथा द्वात्रिंशन्मात्रानुपलब्धिः, विरइ करे—विरतिं कुरु। दह तिगुण—दश त्रिगुणिताः त्रिंशदित्यर्थः कल—कलाः करहि—कुरुष्व, पुणवि—पुनरपि ठव जुअल—स्थापय युगलं कलाया इति शेषः तथाच द्वात्रिंशन्मात्राः स्थापयेत्यर्थः। एम परि—एव परि एव परिपाट्या ठवहु चउ चरणा—स्थापय चतुश्चरणान्, अत्र च जइ—यदि, पलइ कबहु गुरु—पतति कदापि गुरुः यदि सगणातर्गतगुर्वतिरिक्तोऽपि गुरुः पतति, सगणाति(रि)क्तोऽपि गुर्वादिर्मध्यगुरुर्वा गणः पततीति यावत्, त (दा) कबहु ण परिहरु—कदाचिदपि मा परिहर, तदा तमपि दत्वा द्वात्रिंशन्मात्राः प्रतिचरण देयाइत्यर्थः। एवं च द्विजगणषट्का( ट्कस्या )दौ मध्ये अते वा गुर्वादिं मध्यगुरु वा एक गणं दत्वा अंते च सगण दत्वा द्वात्रिंशन्मात्राः प्रतिचरणं देया इत्यर्थः। इतीदानीमुक्तं भवति पूर्वं च सप्तद्विजगणानतर सगणमिति लक्षणद्वय बोध्यं। हे कमलमुखि (वि)बुधजनमनोहरणं मुणहि—जानीहि इति श्रीफणिपतिः सुकविवरः भणति इति योजना। सप्तद्विजगणानतर सगणः यत्र प्रतिचरण पतति, अथवा षट् द्विजगणाः एकः कश्चित् मध्यगुरुर्गुर्वादिर्वा गणः पतति अंते च सगण एव यत्र पतति (त) त् मनो (जल) हरणमिति फलितार्थः ॥

२०३ अथैनमेवार्थं गाहूच्छदसा स्पष्टयति बत्तीसेति। मनो(जल)हरणच्छंदसात्यध्याहारः। बत्तीस होइ मत्ता—द्वात्रिंशद्भवति मात्राः, अते सगणाइ ठावेइ (हि)—अते सगण स्थापय, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अंतिमं मात्राचतुष्टयं सगणस्वरूप कार्यमित्यर्थः, पाएहि—पादेषु आदौ सव्व लहु—सर्वे लघवो भवंति यदि चेदेकः गुरु वेवि—द्वौ वा गुरू भवतस्तदा न दोष इत्यर्थः, तथाच सप्तद्विजगणानतर यगणः कार्यः, अथवा षट् द्विजगणाः, तेषामादौ अते मध्ये वा एकः गुर्वादिर्मध्यगुरुर्वा गणः कार्यः, सर्वेषामते च सगणो देय इति फलितार्थः! अतएव उदाहरणे चतुर्थचरणे रवीरेति षष्ठो जगणो दत्त इति द्रष्टव्यम्।

२०४. अथ मनो (जल)हरणमुदाहरति खुर इति। खुर—खुरैः महि—महीं खुदि—क्षोभयित्वा, खुलुकि ण ण ण गदि इत्यनुकृत्य, घघरु रव कलहि—

घर्घरेति रवं कृत्वा हेषा विधायेत्यर्थः रणहि—रणे संग्रामे तुरअ चले—तुरंगाश्चलिताः, ठठग्गदीत्यनुकृत्य टपु—टापः अश्वपादाघातादित्यर्थः पलइ—पतति, तेन च धरणिवपु धरणीधसु(वपु)—पृथ्वीशरीरं धसइ—प्रचलति, बहु दिसि—चतुर्दिक्षु चमले—चामराणि चकमक करु—कुर्वंति चाकचिक्यशोभामुत्पादयंतीत्यर्थः। दलु—दल सैन्यं दमकि दमकि—अहमहमिकया चलु—चलित, चलति पदातिबल, धुलु( की )त्यनुकृत्य करिवराश्चलिताः, वर मनुसवर—सत्पुरुष वरः करइ विपख हिअअ सल—करोति विपक्षहृदयेषु शल्य, हमिरवीर—हम्मीरवीरः यदा च रणे चलितः ॥

२०५. अथ मदनगृहनामकं वृत्त लक्षयति पिअ भणईति। हे सुहअ सुहाव—सुभगस्वभाव पिअ—प्रिय शिष्य, जइ—यदि राअ—रागः पठितु वा इच्छा विवत्तिउ—विवर्त्तते विशेषेण वर्त्तत इत्यर्थः, तथा खत्तिअ—क्षत्रिय प्रस्तारम् अणुसरि—अनुसृत्य, क्षत्रिय इति प्रस्तारशाखी पूर्वाचार्याणा, पओहरु—पयोधरं मध्यगुरुं जगणं पेल्लि—प्रेरयित्वा प्रस्तारानुधारेण जगणमेतच्छदसो दूरीकृत्येत्यर्थः, अत्र जगणो न देय इति भावः। छंद—इदं छंदः कट्टिकए वहि—निष्काशयित्वा वहिः अर्थात् प्रस्तारादिद छदः पृथक्कृत्वेत्यर्थः, खणद्ध खणो—क्षणमर्द्धंक्षण वा मणो मनः स्थिरं कुरु, जइ—यदा बि बि सल्ल—द्वौ शल्यौ द्वे मात्रे ते च लघुद्वयरूपे एकगुरुरूपे वात्र नाग्रहः, यद्यपि शल्यशब्दः लघुवाची तथाप्यत्र सामान्यमात्रापरो वोध्यः उदाहरणे प्रथमद्वितीयचरणयोर्लघोस्तृतीयचतुर्थयोश्च गुरोर्दर्शनात्, अनुपदं दोहाकृते लक्षणे वे बि मत्तेति वक्ष्यमाणत्वाच्चेति ध्येयं, पहिल्लिअ—प्रथमं गृहीत्वा पादादौ द्वौ लघू स्थापयित्वेत्यर्थः सज्जिकरा—सज्जीकृतं गुरु—गुरुं वहिल्लिअ—वहिर्गृहीत्वा वहिः पादाते, तथा चरणाते गुरु स्थापयित्वेत्यर्थः तुरगः गजः रथः एते दह गण—दश गणाः पअ—पादे धरा—धृताः पसरत—प्रेर( य )ति। तुरगादयश्चतुष्कलदशगणदानबोधनार्थमुपनिबद्धाः। एवं च दीयमानेषु दशचतुष्कलेषु आदौ मात्राद्वयं लघुद्वयरूपमेकगुरुरूप वा, अते चैकगुरुरूप देयं, न तु दशगणातिरिक्तमिति भावः। एव च चालिस—चत्वारिंशन्मात्रा इति शेषः धरा—घटिताः वुत्तेउ—उच्यते, दशचतुष्कलाना प्रतिचरणं चत्वारिंशन्मात्राः पततीत्यर्थः, तइ—तदा जग्गि णिरुत्तउ—जागरण कृत्वा निरुक्तं, जागरणमत्र सावधनतोपलक्षणार्थं, तथा च सावधानतया पिंगलेन निरुक्तमित्यर्थः, मअणहरा—मदनगृहनामकं वृत्तं भणु—पठ एवमेतच्च नेम—यथा खलिअ रिणो—स्खलद्दण तथा मणोहरु—मनोहरं मुणो—जानीहि, यथोपचितमृण( मु )द्धरीभवच्चित्ताह्लादक भवति तथा श्रूयमाणमेतच्छद इत्यर्थः, इति भणइ—भणति, अर्थात् पिंगल इति भावयोजना ॥

२०६. अथैनमेवार्थं निःकृष्य दोहावृत्तेनाह बेवि मत्तेति। द्वे अपि मात्रे शिरसि आदौ ठावि कइ—स्थापयित्वा, अते वलआ—वलयं गुरुं कुरुत। मभम—मध्ये द्विमात्रागुर्वोरंतराले इत्यर्थः नव चतुष्कलगणान् धरि स्थापयित्वा मदनगृह कथयत ॥

२०७. अथ मदनगृहमुदाहरति, जिणीत। येन कंसो विनाशितः कीर्त्तिः प्रकाशिता रिष्टकमुष्टिकयोः दैत्ययोः विनाशः कृतः गिरिर्गोवर्द्धनो हस्ते धृतः यमलार्जुनौ वृत्तौ( द्वौ ) भग्नौ पादभरगजितकालियकुलस्य संहारः कृतः, यस्य यशसा भुवन भृतं। चाणूरो नाम दैत्यः विपादितः, निजकुल मंडितं, राधामुख-मधुपान कृत यथा भ्रमरवरः। भ्रमरो यथा कमलमकरदपानं करोतीत्यर्थः॥ स नारायणः विप्रपरायणः भवभीतिहरः चित्तचिंतितं वरं ददातु ॥

२०८. अथ महाराष्ट्रनामक वृत्तं लक्षयति, एहु छदेति। यत्र आदौ दह अक्खरदशाक्षरेषु, अत्राक्षरशब्देन मात्रा उच्यते, तथाच दशसु मात्रास्वित्यर्थः विसमइ—विश्राम्यति यतिं प्राप्नोतीत्यर्थः, पुणु अट्ठक्खर—पुनः अष्टाक्षरेषु अष्टसु मात्रास्वित्यर्थ, पुणुवि एआरह ठाउ—पुनरपि एकादशस्थाने एकादशसु मात्रास्वित्यर्थः विश्राम्यतीति पूर्वेणान्वयः। यत्र च सोलह अग्गल—षोडशाधिकाः सउ—शत मत्त—मात्राः, समात्राः ( ? ) समग्गल—स( म )ग्राश्चरणचतुष्टयस्या इत्यर्थः, यत्र च आइहि—आदौ छक्कलु—षट्कल गण, ततः पंच चतुष्कलान्, अते—पादाते गुरुलहु—गुरुलघुक्रमेणेत्यर्थः देहु—ददत एहु छंद—एतत् छदः सुलक्खण—सुलक्षण सर्वेषु वृत्तेषु समीचीनमित्यर्थः मरहट्ठा—महाराष्ट्रं भणहि—कथय, एहु—एतत् विचक्षणः पिंगलनागः जल्पति ॥

२०९. अथ महाराष्ट्रमुदाहरति जइति। यद्यपि मित्रं धनेश्वरः श्वशुरो गिरीशः, तथापि यस्य खलु पिंधन दिशः, यद्यपि अमृतकदः निकटे चद्रः, तथापि यस्य भाजन विष। यद्यपि कनकसुरगा गौरी अर्द्धांगे, तथापि यस्य डाकिन्यः सगे, यः यशः दापयति यश्च देवस्त्रभावस्तस्य भगः कदापि न भवति ॥

इति लि( ली )लावति( ती ) प्रकरणम् ॥

अस्ति श्रीखेलसीति त्रिभुवनवलयख्यातनाम्नी पुरी या
तस्याश्चद्राकराख्यः समभवदधिपः क्षोणिदेवाग्रगण्यः।
तद्वंशे कृष्णदेवः समजनि तनयस्तस्य वशीधराख्यो
जातस्तन्निर्मितेय जगति सुविमला टिप्पनी पिंगलस्य ॥

इति श्री.पिंगलप्रकाशे मात्रावृत्तप्रकरणम् ॥

---

# द्वितीयः परिच्छेदः

अभ्यन्तर्वर्त्तिनीलद्युतिमणिनिकरप्रस्फुरद्रश्मिजाला-
भिव्याप्तक्षीरसिंधुद्युतिसदृशमहाकान्तकायप्रभोर्म्मिम् ।
नित्येच्छाज्ञानयत्नत्रिभुवनजनकं निर्विकारस्वरूपं
नित्यानंदं भजेऽहं निजहृदयगतं ब्रह्म रामाभिधानम् ॥१॥

वंशीधरेण कविना रघुवीरमतं
ध्यात्वादरात् पवनजाङ्घ्रियुगं च नत्वा ।
व्याख्यायते गणपतिं बहुशः प्रणम्य
श्रीशेषपिंगलविनिर्म्मितवर्णवृत्तम् ॥२॥

१—२. अथैकाक्षरचरणवृत्तमारभ्य षड्विंशत्यक्षरपर्यंतं यथाशक्यं लक्षणीयेषु वृत्तेषु प्रस्तारक्रियाप्राप्तभेदद्वयस्यैकाक्षरचरणवृत्तस्य प्रथमभेदं श्रीनामकं वृत्तं ल(क्ष)यति सी सविति । जं—यत्र एकाक्षरपादे वृत्ते गो—गुरुः प्रतिचरणं भवतीति शेषः, एवमग्रेऽपि अध्याहारो बोध्यः, सा श्रीः—तत् श्रीनामकं वृत्तमित्यर्थः ॥ श्रियमुदाहरति । जहा—यथा उदाह्रियते इत्यर्थः, एवमग्रेऽपि बोध्यम् । गोरीति । गौरी पार्वती, रक्खो—रक्षतु मामिति शेषः । आद्योऽयं भेदः उक्तः । द्वितीयस्तु शिवं जयेति द्रष्टव्यः । श्रीर्निवृत्ता ।

३—४. अथ द्व्यक्षरचरणस्य वृत्तस्य चत्वारो भेदाः प्रस्तारक्रियया भवंति, तत्राद्यं भेदं कामाख्यं वृत्तं लक्षयति, दीहेति । दीहा—द्वौ दीहा—दीर्घौ यत्र द्व्यक्षरचरणे वृत्ते भवतः स रामः सुन्दरः (कामः) कामाख्यं वृत्तमित्यर्थः ॥ अत्र रामपदं पादपूरणार्थमेवेति मन्तव्यम् कामसुदाहरति जुमझे इति । जुमझे—युद्धे तुभ्यं शुभं देऊ—ददतु ॥ श्रीरामचन्द्र इति शेषः ॥

५—६. द्व्यक्षरचरणस्य वृत्तस्यान्तिमं भेदं मधुनामकं वृत्तं लक्षयति, लहिति । लहु जुअ—लघुयुगं यत्र द्व्यक्षरचरणे वृत्ते पतति । तत् महु—मधु हुअ—भवति । मधुनामकं तद्वृत्तमित्यर्थः । मधूदाहरति, हरेति । हे हर मम मलु—मलं पापं हर क्षपय ॥ मधु निवृत्तम् ॥

७—८. द्व्यक्षरपादस्य वृत्तस्य द्वितीयं भेदं महीनामकं वृत्तं लक्षयति, लगाविति । जही—यत्र द्व्यक्षरचरणे वृत्ते लगौ (गो)—लघुगुरू क्रमेण भवतः । सा मही कही—कथिता ॥ तन्महीनामकं वृत्तमित्यर्थः । जहा (यथा) सईति ।

सई—सती पतिव्रतेति यावत् उमा पार्वती। तुमा—त्वा रक्खो—रक्षतु ॥ मही निवृता ॥

९-१०. द्व्यक्षरपादवृत्तस्य तृतीयं भेदं सारुनामक वृत्त लक्षयति, सार्विति। यत्र द्व्यक्षरचरणे वृत्ते पूर्वे गो—गुरुस्तदनन्तर रेह—रेखा लघुरित्यर्थः पतति, एह—एतत्सारु सारुनामक वृत्तमित्यर्थः ॥ विशब्दोऽप्यर्थकोऽत्र पादपूरणार्थमेव। अथवा गो—गुरुः रेह—रेखा एव प्रकारेण यत्र त्रि—अक्षरद्वयात्मकं पद भवति इह—एतत्सारुनामक वृत्तमिति व्याख्येयम्। सारूदाहरति, सम्भिति। एउ—देवः सभु—शभुः शिवः। सुम्भ—शुभं देउ—ददातु इति शेषः ॥ सारु निवृत्तम्। द्व्यक्षरवृत्त गतम् ॥

११-१२. अथ त्र्यक्षरचरणस्य वृत्तस्य प्रस्तारक्रियया अष्टौ भेदा भवति, तत्राद्यं भेद तालीनामक वृत्त लक्षयति, तालीति। यत्र त्र्यक्षरपादे वृत्ते पूर्वं गो—गुरुस्तदनन्तरं कण्णो—कर्णः गुरुद्वयात्मको गणो भवति, सा ए—इयं ताली जाणीए—ज्ञायते, तत्तालीनामकं वृत्तमित्यर्थः। कीदृशो ती वण्णो—त्रिवर्णे-त्यर्थः। यद्वा गो—गुरुः कण्णो—गुरुद्वयात्मको गण एवं प्रकारेण यत्र प्रति-चरण ती वण्णो—त्रयो वर्णा भवन्ति, ए—इय ताली जाणीए—ज्ञायते ॥ अथवा ती वण्णो—त्रिवर्णैः गो कण्णो—गुरुवर्णरूपैः तालीए—तालीय जाणीए—ज्ञायत इति व्याख्येयम्। तालीमुदाहरति, त्विति। सो—सः चडेसो—चडीशः तुम्हाण—युस्मान् अम्हाण—अस्मान् रक्खे—रक्षत्वित्यर्थः ॥ ताली निवृत्ता ॥

१३-१४. अथ त्र्यक्षरपादस्य वृत्तस्य तृतीयं भेद प्रियानामक वृत्तं लक्षयति, हे पिए इति। तिण्णि—त्रीणि रे—राणि मध्यलघुरगणात्मकानि अक्खरे—अक्ष-राणि यत्र त्र्यक्षरचरणे वृत्ते लेक्खिए—लिख्यते, हे—इय पिए—प्रिया प्रियानामैतद्वृत्तमित्यर्थः ॥ केचित्तु हे पिए इति प्रियासबोधनपरतया व्याकुर्वते। प्रियामुदाहरति, सकरविति। पाउणो—पावनः सकरो—शिवकरः सकरो—महादेवः णो—नः अस्मानिति यावत् पाउ—पातु रक्षत्वित्यर्थः ॥ प्रिया निवृत्ता ॥

१५-१६. अथ त्र्यक्षरचरणवृत्तस्य द्वितीय भेद शशिनामकं वृत्त लक्षयति, ससीति। यत्र त्र्यक्षरपादे वृत्ते च य—आदिलघुर्यगणः जणीओ—जनितः कृत इति यावत् सः फणिंदे—फणीन्द्रेण शेषेण—शशी भ( णी )ओ—भणितस्तत् शशिनामक वृत्तमित्यर्थः ॥ अथवा भवतीत्यध्याहृत्य शशी जणीओ—ज्ञातव्यमि( इ )त्यर्थः इति योजनीय। शशिनमुदाहरति, भवाणीति। दुरित—दुरितं हरन्ती हसती—हसमाना ( १ ) भवानी मा पात्विति शेषः ॥ शशी निवृत्तः ॥

१७-१८. अथ त्र्यक्षरप्रस्तारस्य चतुर्थभेद रमणनामकं वृत्तं लक्षयति, सगणेति। सगणः गुर्वंतगणो यत्र त्र्यक्षरचरणे वृत्ते सहिओ—साधितः निर्दिष्ट

इति यावत्, स रमणः कहिओ—कथितस्तद्रमणनामकं वृत्तं कथितमित्यर्थः। केचित्तु सगण इत्यनन्तरं भवतीत्यध्याहृत्य सहिओ इद सखीसम्बोधनपरतया व्याकुर्वते। परे तु सगणेन सहिओ—सहितः रमणः कथित इत्याहुः। रमणमुदाहरति, सेति। शशिना चन्द्रेण रअणी—रजनी। पइणा—पत्या भर्तृभूतेनेति यावत् तरुणी शोभाढ्येत्यर्थः॥ केचित्तु शोभत इत्यध्याहृत्य शशिना पत्या तरुणीति पृथग्व्याकुर्वते। र(म)णो निवृत्तः॥

१९–२०. अथ त्र्यक्षरचरणस्य वृत्तस्य पचम भेदं पंचालनामक वृत्त लक्ष(य)ति, तक्केति। ज—यत्र त्र्यक्षरचरणे वृत्ते प्रतिचरण तकारो तलघुस्तगण इत्यर्थः। दिट्ठ—दृष्टः, स उक्किट्ठ—उत्कृष्टः पचालः कथि(त) इति शेषः॥ तत् पचालनामकं वृत्तमित्यर्थः। अत्र उत्कृष्ट इति विशेषणं छंदःपूरणार्थमेव। पचालमुदाहरति, सविति। सो—सः श्रीरामचन्द्र इति शेषः दुक्खाइ—दुःखानि सघारि—संहृत्य, सुखानि देउ—ददातु॥ पचालो निवृत्तः॥

२१–२२. अथ त्र्यक्षरचरणस्य वृत्तस्य षष्ठं भेद मृगेन्द्रनामकं वृत्त लक्षयति, णरेंदेति। भो बुधा त्र्यक्षरचरणे वृत्ते प्रतिचरणमिति शेषः नरेन्द्र गुरुमध्यं जगण ठवेहु—स्थापयत। मइद—मृगेन्द्रं कहेहु—कथयत॥ मृगेन्द्रमुदाहरति, दुरतेति। दुरतो वसतः। दिगंतरे कांतः॥ अतो हे सखि कश्चिद्युवानमत्रानयेति गूढाभिप्रायायाः प्रोषितभर्तृकाया इद वचनम्। मृगेन्द्रो निवृत्तः॥

२३–२४. अथ त्र्यक्षरचरणस्य छन्दसः सप्तम भेदं मंदरनामक वृत्तं लक्षयति; भविति। हे सहि—सखि (ज)हि—यत्र त्र्यक्षर-चरणे वृत्ते भो—आदिगुरुर्भगणो भवति, सो—स सुन्दरः मंदरः तन्मदरनामक वृत्तमित्यर्थः॥ अत्र सुन्दरेति पादपूरणार्थमेव। मंदरमुदाहरति, सविति। सो—सः हरः शिवः तोहर—युष्माकं सकट दुःखं सहर क्षपयतु। मन्दरो निवृत्तः॥

२५–२६. अथ त्र्यक्षरवृत्तस्यात्यभूतमष्टम भेद कमलनामकं वृत्त लक्षयति, कमलेति हे सुमुखि णगण—यत्र त्र्यक्षरचरणे वृत्ते नगणः सर्वलघुः पतति, तत्कमल कमलनामकं वृत्तं पभण—प्रभणेत्यर्थः॥ कमलमुदाहरति, रमणेति। रमण गमण—रमणस्य गमनं रमणगमनं तस्मिन्। कमण—कुत्र गमण—गमनं क्रियते इति शेषः इत्याह कमलं निवृत्तम्॥

२७–२८. अथ चतुरक्षरस्य प्रस्तारक्रियया षोडश भेदा भवति, तेषु प्रथमं भेद तीर्णानामक वृत्त लक्षयति, चारीति। यत्र चतुरक्षरचरणे वृत्ते बिण्णे—द्वौ कण्णा—कर्णौ गुरुद्वयात्मकौ गणाविति यावत्, एव प्रकारेण चारी हारा—चत्वारो हारा गुरवः पतन्ति, ता तिण्णा—तीर्णा जाणे—जानीहि तीर्णानामक तद्वृत्तं

विद्धीत्यर्थः कीदृशाः हाराः अट्ठा काला—अष्टौ कला येषा ते अष्टकला इत्यर्थः। अत्र चारी हारा अट्ठा कालेति वृत्तपूरणार्थमेव। यत्र प्रतिचरण कर्णौ गुरुद्वयात्मकौ गणौ भवतः सा तीर्णेति निष्कर्षः। क्वचित्तु इट्ठाकारा इति पाठस्तत्र इष्टः पादपूरणार्थमपेक्षित इति यावत् आकारः स्थापन येषां ते तादृशा इत्यर्थः। तीर्णामुदाहरति, जाआ इति। जाया वधूः। ( माआ )—माया मायावतीत्यर्थः, पुत्तो धुत्तो—पुत्रो धूर्त्तः। इणो—एतत् जाणी—ज्ञात्वा जुत्तो—युक्तं किज्जे—क्रियताम्॥ कस्यचिदुपदेष्टुः संसारासक्त प्रतिवचनमिदम्॥

२९–३०. अथ चतुरक्षरचरणवृत्तस्यैकादश भेदं धारीनामकं वृत्तं लक्षयति, वण्ण चारीति। अवहट्टभा( षा )या पूर्वनिपातानियमादन्यथानुपपत्या स-शब्दस्य हार—शब्दस्य च पूर्वनि( पा )त विधाय योजनीय, तथाच यत्र चतुर-क्षरचरणे वृत्ते स दो सारि—सद्विस ( श )र हारि त्रिण्णि—हारद्वयम्। हारो गुरुः तद्द्वयमित्यर्थः। एवं प्रकारेण वण्ण चारि—वर्णचतुष्टय भवति, हे मुद्धि—हे मुग्धे सा धारि—तद्धारीनामक वृत्तमित्यर्थः। अयमर्थः शरशब्दो लघुवाची हारशब्दश्च गुरुवाची, तथा च शरद्वयसहित हारद्वय यत्र भवत्येतस्याय भावः—प्रथम गुरुस्तदनंतरं लघुः पुनः गुरुः पुनस्तदनतर लघुः कर्त्तव्य एवंप्रकारेण चत्वार्य्यक्षराणि धारीच्छन्दसि प्रतिचरण कर्त्तव्यानि, रगणान्तर लघुः कर्त्तव्य इति तु परमार्थ इत्यस्मत्तातचरणोपदिष्टः पन्थाः। धारीमुदाहरति, देविति। जासु—यस्य सीस—शीर्षे चद—चद्रः दीस—दृश्यते देउ ( देउ )—देवदेवः शंभुरिति शेषः सुम्भ—शुभ देउ—ददातु मह्यमिति शेषः। धारी निवृत्ता॥

३१–३२. अथ चतुरक्षरप्रस्ता( र )स्य षष्ठभेदं नगाणिकानामकं वृत्तं लक्षयति, पओहरेति। गुरुत्तरो—गुरूत्तरः गुरुः उत्तरः अग्रे स्थितो यस्यैतादृशः पयोधरो मध्यगुरुर्जगणः यत्र चतुरक्षरचरणे वृत्ते पतति। स—सा णगा-णिआ—नगाणिका जाणिआ—ज्ञातव्या॥ तत् नगाणिकानामकं वृत्त ज्ञातव्य-मित्यर्थः। नगाणिकामुदाहरति, सरस्सईति। सरस्सई—स( र )स्वती पसण्ण हो—प्रसन्ना यदि भवति। कइत्तआ—कवित्वानि फुरं—स्फुरति तआ—तदा॥ नगाणिका निवृत्ता॥

३३–३४ अथ पचाक्षरस्य प्रस्तारक्रियया द्वात्रिंशद्भेदा भवति, तत्राद्यं भेदं समोहानामक वृत्तं लक्षयति, समोहेति। बे कण्ण हारा—द्विकर्णहारौ यत्र पचा-क्षरचरणे वृत्ते पततः, कर्णौ गुरुद्वयात्मको गणः, हारो गुरुस्तथा पचगुरवो यत्र भवतीति भावः, भूअता सारा—भुवनसार, तो—तत् भूअ—भूमौ समो(हा)—रुअं—सम्मोहास्वरूप दिट्ठो—दृष्ट॥ सत्समोहानामक वृत्तमित्यर्थः॥ सम्मोहामुदा-

हरति, उद्दडेति। दूरित्ता खंडी—दुरितखडिनी उद्दडा—उद्भटा महिषासुरादिवधेनेति भावः चडी—चण्डिका। तेधो(लो) क्क सोख—त्रैलोक्यसुख मोक्ख—मोक्ष त्रैलोक्यसुखरूपमोक्षमित्यर्थः मे—मह्य देऊ ददातु॥ केचित्तु तेलोक्केति षष्ठयन्त पदं कृत्वा त्रैलोक्यस्य सुख च पुनः मे मह्यं ददात्विति व्याकुर्वते। संमोहा निवृत्ता॥

३५-३६. अथ पंचाक्षरस्य पचम भेदं हारीतनामक वृत्तं लक्षयति, आईति। आईहि—आदौ अंते—चरणसमाप्तौ च कण्ण सजुत्ते—कर्णसयुक्ते गुरुद्वययुक्तमित्यर्थः। मभभेक्क गधो—मध्यैकगधं मध्ये कर्णद्वयमध्ये एकः गन्धो लघुर्यत्र तादृशमित्यर्थः, तत् हारीअ छदो—हारीतच्छन्दः पिंगलेन कथितमिति शेषः। यत्र प्रतिचरण प्रथमतो गुरुद्वयं तत एको लघुस्ततश्च गुरुद्वय भवति, तत् हारी(त) नामकं वृत्तमिति निष्कृष्टार्थः। कुत्रचित् हारे सजुत्ते इति पाटस्तत्र हाराभ्या संयुक्तमिति व्याख्येयम्। हारीतमुदाहरति, जा भत्तीति। जा भत्ति भत्ताया भर्तृभक्ता धम्मेक्क चित्ता—धर्मैकचित्ता—सा नारी स्त्री धण्ण पिआरी—धन्यप्रिया धन्यपुरुषस्य प्रिया गृहिणीत्यर्थः होइ भवति॥ केचितु धण्णति भिन्न पदं कृत्वा ता नारी धन्या प्रिया च भर्तुरिति शेषः भवतीति योजयति। हारीत निवृत्तम्।

३७-३८. अथ पचाक्षरस्य प्रस्तारस्य सप्तम भेद हसनामक वृत्त लक्षयति, पिंगलेति। भ—आदिगुरुर्भगण इति यावत् कण्ण वि—कर्णोऽपि गुरुद्वयात्मको गणोऽपि यत्र पञ्चाक्षरचरणे वृत्ते दिज्जे—दीयते, पिंगल दिट्ठो—पिंगलदृष्टः सिट्ठो—सृष्टः पिंगलेनेति भाव', सः हस—हसः मुणिज्जे—ज्ञायते॥ यदीयचरणे भगणोत्तरं गुरुद्वय भवति तत् हंसनामकं वृत्तमिति निष्कृष्टोर्थः। अत्र देइ इति देकारस्य ऐ ओ शुद्धा अ वण्ण मिलिआ वि लहू पूर्वमुक्तत्वाद् ह्रस्वत्वम् पिंगल दिट्ठो सिट्ठो इति पदद्वय पादपूरणार्थमिति द्रष्टव्यम्॥ हसमुदाहरति, सो महेति। सो—सः मह—मम कंता—कांतः धव इत्यर्थः दूर (दिगंता) दूरे (दिगन्ते) गतोऽस्तीति शेषः। अतः पाउस—प्रावृट् आवे—आयाति, चेउ—चेतः चलावे—चालयति व्याकुलयतीत्यर्थः॥ अतः किमाचरणीयं त्वं मे शिक्षयेति गूढाभिप्रायायाः प्रोषितभर्तृकयायाः प्रियसहचरीं प्रति वाक्यमिदम्। हंसो निवृत्तः॥

३९-४०. अथ पचाक्षरप्रस्तारस्यातिम भेद यमकनामक वृत्त लक्षयति, सुपीति। हे सुगुण शोभनगुणविशिष्ट शिष्य यत्र पचाक्षरचरणे वृत्ते सरह गण—श्लाघ्यगणौ अन्यगणेभ्यः श्लाघ्यावित्यर्थः सुपिअ गण—सुप्रियगणौ द्विलघुकौ गणावित्यर्थः, ततश्च सर—शरः लघ्वात्मको गणः पतति, तत् यमकं भण

पठेत्यर्थः ॥ पंच लघवो यत्र प्रतिचरणं भवति तत् यमकमिति पिंडार्थः, सरह गणेति तु पदं पद्यपूरणार्थमेव । यमकमुदाहरति, पवणेति । पवण—पवनः वह—वाति, अत इति शेषः सरिर—शरीरं डह—दह्यते । मअण—मदनः हण—हंति, अत इति शेषः मण—मनः तवइ—तपति । सर्वे भेदा वक्तुमशक्या अतः कियतो भेदाः प्रदर्शिताः शेषभेदास्तु सुधीतिः( भिः ) एवमूहनीयाः ॥

४१–४२. अथ षडक्षरचरणस्य पद्यस्य प्रस्तारक्रियया चतुःषष्टि भेदा भवति, तत्राद्य भेदं शेषराजनामक वृत्त लक्षयति, बाराहेति । बाराहामत्ता—द्वादशमात्रकाः द्वादश मात्रा येषामेतादृशा इत्यर्थः, तिण्ण—त्रयः कण्णा—कर्णाः गुरुद्वयात्मकागणाः ज—यत्र षडक्ष( र )चरणे वृत्ते होत्तं—भवति । हारा छक्का बंधो—हारषट्कबद्ध गुरुषट्कयुक्तमित्यर्थः, तत् सेसा राआ छंदो—शेषराजच्छन्दः ॥ तत् शेषराजनामक वृत्तमित्यर्थः । अन्ये तु द्वादश मात्राः त्रयः कर्णा यत्र भवतीति पृथगेव पद, हारा छक्का बंधो इति च पद, पद्यपूरणार्थमेव । यत्र कर्णत्रयं प्रतिचरणं पतति तत् शेषराजनामक वृत्तमिति त्वलम् । शेषराजमुदाहरति, जुज्झ्झतीति । उद्दामे—उद्भटे संग्रामे—संग्रामे, जुज्झ्झती—युद्ध कुर्वंती णच्चंती—नृत्यन्ती कालिक्का—कालिका हम्मारो—अस्माकं दूरित्ता—दुरितानि सहारो—सहरतु ॥ शेषराजो निवृत्तः ॥

४३–४४. अथ षडक्षरचरणस्य वृत्तस्याष्टाविंशतितम भेदं तिल्लनामकं वृत्त लक्षयति, पिअ इति । यस्य पओ—पदे छअ वण्ण—षड्वर्णाः कल अट्ठ—कलाः अष्टौ धओ—धृताः, सगणेण—गुर्वन्तगणेन जुअं—युत, तत् हे प्रिय ध्रुव विनिश्चित तिल्ल—तिल्लं तिल्लनामक वृत्तमित्तर्थः ॥ छअ वण्णेत्यनेन सगणद्वय युक्तं भवतीत्युक्त भवति, मात्राकथनं तु पादपूरणार्थमेव । तिल्लमुदाहरति, पिअ इति । पिअ भत्ति—प्रियभक्ता पतिव्रतेति यावत् पिआ—प्रिया गृहिणीत्यर्थः गुणवत—गुणवान् सुआ—सुतः । धणमंत—धनवत् घरा—गृहम् एतत्सर्वमिति शेषः बहुसुक्खकरा—बहुसुखकरम् ॥ तिल्लच्छन्दो निवृत्तम् ॥

४५–४६. अथ षडक्षरचरणवृत्तस्यैकोनविंशति(त)मं भेद विज्जोहानामकं वृत्त लक्षयति, अक्खरेति । ज यत्र पाअ पाअं—पादे पादे छआ—षट् अक्खरा-अक्खरा—अक्षराणि ठिआ स्थितानि । पचा दुण—पच द्विगुणिता दशेत्यर्थः मत्तमात्राः यत्र पादे पादे स्थिता इति पूर्वेणान्वयः, अवहट्ठभाषाया लिंगादिव्यत्यासे दोषाभावात् । अथ गणनियममाह, विणीति । विण्णि द्वौ जोहा गणा—योद्धृगणौ मध्यलघुरगणावित्यर्थः। पादे पादे स्थिताविति पूर्वेणान्वयः, तत् विज्जोहाख्यं वृत्तमि-(ति) गणनाम्नैव छन्दोनामकथनं बोध्यमिति सम्प्रदायः । विज्जोहामुदाहरति,

कसेति । कससंहरणः पक्षिसचरणः गरुडगामीत्यर्थः ॥ देवई डिंभआ—देवकीडिंभकः मे—मह्यं णिब्भआ—निर्भयं देउ—ददातु ॥ विज्जोहा निवृत्ता ॥

४७–४८. अथ षडक्षरचरणस्य वृत्तस्य षोडशतमं भेद चतुरसानामकं वृत्तं लक्षयति, ठविति । दिअवर कण्णो—द्विजवरकर्णौ द्विजवरश्चतुर्लघ्वात्मको गणः, कर्णः गुरुद्वयात्मको गणस्तावित्यर्थः यत्र प्रतिचरणं पतत इति शेषः, फुल रस वण्णोस्फुटरसवर्णां प्रकटषडक्षरामिति यावत् फणिवइ भासा—फणिपतिभाषिता तां चउरसाचतुरसां ठउ—स्थापय ॥ चतुरसानामकमेतद्वृत्त विद्धीत्यर्थः । चतुरसामुदाहरति, गवरिअ इति । अभिणउ सता—अभिनयश्रातः, अभिनयस्ताडवचेष्टाविशेषः, गवरिअ कता—गौरीकांतः । जइ—(यदा) परसण्णा—प्रसन्नः, तदेति शेपः महि—मह्यं धण्णा—धन दिअ—ददातु ॥ अथवा अभिणउ—अभिनये सता—सन् वर्त्तमान इत्यर्थः जए परसण्ण यस्य प्रसन्नः, स इति शेषः दिअ महि धण्णा—द्यावापृथिव्योः धन्यः यतस्ताडवानदितः शिवोऽदेयमपि ददातीति लोकप्रसि(द्धि)रितिभाव इति वा व्याख्येयम् । द्वितीयम् उदाहरणं । श्लोकस्तु निगदेनैव व्याख्यातः । चतुरसा निवृत्ता ।

५०–५१. अथ षडक्षरचरणस्य वृत्तस्य सप्तत्रिंशत्तम भेदं मथाननामक वृत्तं लक्षयति, कामेति । कामावआरस्स—कामावतारस्य तगणचतुष्टयनिर्मितद्वादशाक्षरचरणस्य सारगरूपकापरनाम्नइत्यर्थः अद्धेण पाएण—अर्द्धेन पादेन अंतलघुतगणद्वयेनेत्यर्थः । सुद्ध दहा मत्ता—शुद्धा दश मात्राः यत्र षडक्षरचरणे वृत्ते प्रतिचरण पतति, सो—सः मथाण—मथानः बुज्झ—ज्ञातव्यः ॥ अथवा अवहट्टभाषाया लिंगविभक्तिवचनव्यत्यासे दोषाभावात् । सो—त मथाण—मंथानं बुज्झ—विद्धीति वा व्याख्येयं, तगणद्वयचरणे मथान इति तु निष्कृष्टार्थः । वर्णवृत्ते चात्र मात्राकथन पद्यपूरणार्थमेव । मथानमुदाहरति, राआ इति । जहा यत्र राआ—राजा लुद्धलुब्धः पडीअ—हे पंडित मुद्ध—मुग्धः हो—भव । हो इति देशीय भवेत्यर्थप्रसिद्ध । कित्ती कीर्ति करे रक्ख रक्षस्व, सो वाद-(त वाद) उप्पेक्ख-उपेक्षस्व ॥ यत्र राजा कृपणस्तत्र विव दंत(दमान) जनमुपेक्ष्य पडितेनापि त्वया निजकीर्तिमिच्छता मूर्खेण भवितव्यमिति कस्यचित् पडितं प्रत्युपदेशः । मथानो निवृत्तः ॥

५२–५३. अथ षडक्षरचरणस्य वृत्तस्य दशम भेदं शखनारीनामक वृत्तं लक्षयति, खडेति । खडा वण्ण बद्धो—षड्वर्णबद्धा भुअगा पअद्धो—भुजगप्रयाताद्धं । पआ—प्राता, आदिलघुयद्वयनिर्मितैकैकचरणेत्यर्थः, पाअ चारीपादचतुष्टया शखनारी कही—कथिता ॥ अत्र पाअ चारीति पद पद्यपूरणार्थमथवाग्रे षोडशचरणस्यापि भुजगप्रयातस्य वक्ष्यमाणत्वात्तदर्द्धाष्टचरणनिषेधार्थमिति द्रष्टव्यम् ।

आदि लघुयगणद्वयचरणा शंखनारीति तु समुदायार्थः। शंखनारीमुदाहरति, गुरुेति। जस्य—यस्य गुणाः ( शुद्धाः ) दोषाखवलिताः वहू—वधूः रूअमुद्धा—रूपमुग्धा अतिसुदरीति यावत्। घरे—गृहे वित्त—वित्त धनमिति यावत् जग्गा—जाग्रत् सदा परिपूर्णमिति यावत्, तासु—तस्य मही पृथ्वी सग्गा—स्वर्गः॥ यस्यैतत्सर्वे स भूमावपि स्वर्गसुखमनुभवतीत्यर्थः। धरा वित्त जग्गेति क्वचित्पाठः, तत्र गृहा जाग्रद्वित्ता इति प्राकृते पूर्वानिपातानियमाद्व्याख्येयम्। शखनारी निवृत्ता।

५४–५५. अथ षडक्षरचरणवृत्तस्य षट्चत्वारिंशत्तम भेदं मालतीनामकं वृत्त लक्षयति, धअमिति। यत्र षडक्षरचरणे वृत्ते प्रथम धअ—ध्वजः लध्वादिस्त्रिकलो गण इत्यर्थः द्वितीयस्थाने च सर बीअ—शरद्वय लघुद्वयमित्यर्थः तीअ—तृतीये स्थाने इति शेषः लहु अत—लध्वंतः लघुरते यस्य तादृश इत्यर्थः मणीगुण—मणीगुणः हारो गुरुरित्यर्थः, दई—दीयते, इद च यथायथं योजनीय, सा कत—काता सुदरीति यावत् मालइ—मालती॥ तन्मालतीनामक वृत्तमित्यर्थः। कैश्चितु कंत इति कातासबोधनपरतया व्याख्यायते। मालतीमुदाहरति, करेति। सहि—हे सखि बहु गुणवंत—प्रासादाह्लादकत्वाद्यनेकगुणयुक्ता इत्यर्थः करा—किरणाः पसरत—प्रसरति, कुद—कुंदाः पफुल्लिअ—प्रफुल्लिताः यतः, अतः चद्र—चन्द्रः उगो—उदित इति ज्ञायतइति शेषः॥ मालती निवृत्ता।

५६–५७. अथ षडक्षरचरणवृत्तस्य चतुःषष्टितममतिम भेद दमनकनामक वृत्त लक्षयति। दिअवर—द्विजवरं चतुर्लघ्वात्मकं गणमिति यावत् किअ—कृत्वा, सू(सु)पिअ—सुप्रिय लघुद्वयात्मक गणमिति यावत् भणहि—कथय। दमणअ गुणि—दमनक गुणय जानीहीति यावत् इति फणिवइ—फणिपतिः भणि—भणति॥ न(गण)द्वययुक्तं दमनकनामकं वृत्तमिति फलितार्थः। दमनकमुदाहरति, कमलेति। कमल णअणि—कमलनयना अमिअ वअणि—अमृतवचना। तरुणि—तरुणी घरणि—गृहिणी भार्येति यावत् सू(सु) पुणि—सुपुण्येन मिलइ—मिलति॥ मिलइ ज पुणीति क्वचित्पाठस्तत्र मिलति यदि पुनरित्यनतरं तदा ता विहाय कुत्रापि न गमिष्यामीत्यध्याहृत्य व्याख्येयम्। दमनको निवृत्तः। इति षडक्षर वृत्तम्॥

५८–५९. अथ सप्ताक्षरचरणवृत्तस्याष्टाविंशत्यधिकशत भेदाः भवति, तत्र त्रिचत्वारिंशत्तम भेदं समानिकानामक वृत्त लक्षयति, चारीति। यत्र सप्ताक्षरवृत्ते हार चारि—हारचतुष्टय गुरुचतुष्टयमति यावत् किज्जि(ही)—क्रियते तिण्णि—त्रयः गध—गध लघव इति यावत् दिज्जिहि (ही)—दीयते। अतरा अन्तरे येति

शेषः। एवं विधिना सत्त अक्खरा—सप्ताक्षराणि ठिआ—स्थितानि, सा समाणिआ—समानिका पिआ—प्रिया पिंगलस्येति शेषः॥ प्रथमं गुरुस्ततो लघुः नपुर्गुरुः पुनर्लघुरेव क्रमेण यत्र प्रतिचरण सप्ताक्षराणि स्थाप्यन्ते सा समानिकेति समुदायार्थः। केचित्तु पिआ इति पदं प्रियासम्बोधनपरतया वदन्ति समानिकामुदाहरति, कुञ्जरा इति। पव्वआ—पर्व्वतान् पलतआ—प्रेरयतः कुञ्जरा—हस्ति(नः) चलतआ—चलति। कुम्म पिट्ठि—कुर्म्मपृष्ठ कपए—कपते धूलि—धू.श सूर—सूर्य्यः झपए—आच्छाद्यते॥ श्रीरामचन्द्रे प्रचलति सतीति शेषः। समानिका निवृत्ता।

६०–६१. अथ सप्ताक्षरचरणवृत्तस्यैकाशीत्युत्तर( वृत्तस्य द्वादशोत्तर ) शततम ( ११२ ) भेद सुवासकनामक वृत्तं लक्षयति, भणेति। यत्र चउ मत्तह—चतस्रः मात्राः चतुरो लघून् इत्यर्थः। अत्र मात्राशब्दो लघुपरः। रइ—रचयित्वा अतह—अन्ते चतुर्लघ्वन्ते इत्यर्थः, भ—भगणः आदिगुरुर्गण इति यावत् लइइ—लभ्यते, लहसू( सु ) विसेसउ—लघुविशिष्ट त सूवासउसू—(सु)वासक भणउ—भणत॥ सू( सु )वासकनामक तद्वृत्तमित्यर्थः। अत्र लहसू( सु ) विसेसउ इद विशेण प्रथमस्थापितचतुर्मात्राणा लघुपरत्वलाभायेति बोध्यम्। द्विजवरभगणरचितचरण सुवासकमिति प.लितार्थः। सू( सु )वासकमुदाहरति, गुर्व्विति। गुरुजण भत्तउ—गुरुजनभक्ता गुणजुत्तउ—गुणयुक्ता जसू—यस्य वहु—वधूः भार्य्येति यावत् जिअ पुत्तउ—जीवत्पुत्रा सइ—स एव पुणवत(उ)—पुण्यवान्॥ इति शेषः। सुवासक निवृत्तम्।

६२–६३. अथ सप्ताक्षरचरणवृत्तस्य पण्णवतितमं भेदं करहंचनामक वृत्तं लक्षयति, चरणेति। पढम—प्रथमे चरणे विप्प—विप्र चतुर्लघ्वात्मकमिति यावत् गण—गण लइ—गृहीत्वा थप्प—स्थापयत। तसु—तस्य विप्रगणस्येति यावत् अंत—अन्ते जगण—मध्यगुरुं थप्प इति पूर्वेणान्वयः, करहच कर (हचम्) एवं मुहण—जानीत॥ करहचनामकमेतद्वृत्तमित्यर्थः। अत्र प्रथमे इति द्वितीयादीनामुपलक्षकम्। करहचमुदाहरति, चिन्नेति। एह—एत देह—देहं गइ—गत्वा जइ—यदि तजउ—त्यजामि जिवउ—जीवामि तदेति शेषः, जइ—यदि रमण—भर्त्ता स एव होइ भवति, विरह—वियोगः जणु—मा भवत्विति शेषः। विरहानलदग्धशरीरत्याग एव मम श्रेष्ठ इति गूढाभिप्रायायाः कस्याश्चिन्मृतभर्तृकायाः सहगमन कर्त्तुमुद्यतायाः श्रीरघुनाथ प्रति प्रार्थनावाचनमिदम्, सा चोत्तरार्द्धेन प्रकटिता। करहचो निवृत्तः।

६४–६५. अथ सप्ताक्षरचरणवृत्तस्य अंतिम ( आद्य ) भेद शीर्षरूपकनामकं वृत्त लक्षयति, सत्तेति। आदौ कला ती—कर्णान् गुरुद्वयात्मकान् गणान् त्रीन्

तदनतरं गो—गुरु माणेही—मानय, एवप्रकारेण चाउद्दाहा मत्ताणा—चतुर्दश मात्राः सत्त दीहा—सप्त दीर्घान् सीसारुआ छदाणा—शीर्षरूपकच्छन्दसि जाणेही—जानीहि ॥ दीर्घसप्तकरचितचरण शीर्षरूपकमिति फलितार्थः शीर्षरूपकमुदाहरति, चदेति । चद्रः कुदः काशाः ए—एते हारः मौक्तिकदाम इति यावत् हारा—हीरक मणिभेदः हसा—हसः ए—एते । जे जे सेत्ता घण्णआ—ये ये श्वेता वर्णिताः ते ते इति शेषः तुम्ह कित्ती जिणीआ—युष्मत्कीर्त्या जिताः ॥ कच्चिद्राजान प्रति कस्यचित्कवेरियमुक्तिः । शीर्षरूपकं निवृत्तम् ।

६६–६७. अथाष्टाक्षरचरणवृत्तस्य प्रस्तारक्रियया षट्पञ्चाशदधिकशतद्वयं भेदा भवन्ति, तत्राद्य भेदं विद्युन्मालानामक वृत्त लक्षयति, विज्जुति । यत्र घ ( ख )त्ती—क्षत्रिये प्रस्तारे इत्यर्थः, पूर्वाचार्याणा क्षत्रिय इति प्रस्तारसंज्ञा, सोला मत्ता—षोडशमात्राकाः चारी—चत्वारः कर्णाः गुरुद्वयात्मका गणाः पाए—पादे लोला—लुठति, एअं रुअ—एवरूपेण चारी पाआ—चतुःपादिका विज्जूमाला—णाआराआ—नागराजेनेत्यर्थं भत्ती—भण्यते ॥ षत्ती—क्षत्रिया जातिरिति कश्चित् । अत्र मात्राकथनमनतिप्रयोजक पादपूरणार्थमेवेति बोध्यम् । विद्युन्मालामुदाहरति, उन्मत्तेति । उन्मत्त—उन्मताः ढुक्कता—ढौकमानाः परस्पर मिलता इति यावत् विप्पक्खा मज्झे लुक्कता—विपक्षमध्ये लीनाः, णिक्कता—निष्क्राता विपक्षान् हत्वेत्यर्थः, य( ज )ता—यातः प्रतिपक्षसैन्य प्रतीति भावः धावता इतस्ततो धावन कुर्वतः जेहा—योद्धारः णिब्भती—निर्भ्रान्ता नितरा त्रैलोक्यभ्रमणशीलामिति यावत् किती—कीर्ति पावता—प्रप्नुवन्ति ॥ केनचिद्वन्दिना श्रीरामचन्द्रसग्रामवर्णनपरतयेद कृतम् ।

६८–६६. अथाष्टाक्षरचरणवृत्तस्य षडशीतितमं भेद प्रमाणिकानामकं वृत्तं लक्षयति, लहु इति । लहु गुरु णिरतरा—लघुगुरूनिरतराणि अट्ठक्खरा—अष्टाक्षराणि यत्र प्रतिचरण पततीति शेषः सा पमाणिआ—प्रमाणिका तत्प्रमाणिकानामक वृत्तमित्यर्थः । लहू गुरू णिरतरेत्यनेन प्रथममेको लघुस्तदनन्तरं गुरुः पुनर्लघुः पुनर्गुरुरेवप्रकारेणाष्टावक्षराणि कर्त्तव्यानीति सूच्यते । प्रसगान्नाराचनामक षोडशाक्षरचरण वृत्त लक्षयति, पमाणोति । पमाणि—प्रमाणो प्रमाणिकेत्यर्थः नामैकदेशादपि सत्येत्यादौ नामप्रतीतेः, दूण—द्विगुणा लघुगुरूनिरतरषोडशाक्षरेति यावत् किज्जिए—क्रियते यदेति शेषः, सो—सः णराउ—नाराचः भणिज्जए—भण्यते प्रमाणिकामुदाहरति, णिसुंभेति । णि( नि )शुंभ शुभखडिनी गिरीस ( श ) गेहमडिनी महादेवगृह भूषयित्रीत्यर्थः । पअड मुड

खडिआ—प्रचंडमुडखडिही( नी ) पसण्ण होउ चंडिआ—प्रसन्ना भवतु चंडिका ॥ प्रमाणिका निवृत्ता।

७०-७१. अथाष्टाक्षरचरणवृत्तस्य द्वि( एक )सप्तत्यधिकशततमं भेदं मल्लिका नामकं वृत्तं लक्षयति, हारेति। हार गध बंधुरेण—हारो गुरुः गधो लघुस्ताभ्यां बंधुरेण—मनोहरेण दिट्ठ अट्ठ अक्खरेण—दृष्टाष्टाक्षरेण दृष्टान्यष्टाक्षराणि यत्र तादृशेनेत्यर्थः चरणेनेति शेषः। बारहाइ—द्वादशैव मात्रा यत्र जाण—ज्ञायते, तत् मल्लिकासुच्छन्दः मल्लिकाख्यं सुन्दरं वृत्तमित्यर्थः माण ( जाण )—माणय ॥ प्रमाणिकामल्लिकयोश्चैतावानेव भेदः यत्प्रमाणिकाया लघुगुरुक्रमेणाक्षराणि चरणे दीयते, मल्लिकाया गुरुलघुक्रमेणेति बोध्यम्। मल्लिकामुदाहरति। जेण—येन जिण—जितः खत्ति वंस—क्षत्रियवंशः परशुरामरूपेणेत्यर्थः, रिट्ठिमुट्ठि केसि कंस—रिष्टिकः मुष्टिकः केशी कंशः येन जित इति पूर्वेणान्वयः। बाण पाणि—बाणासुरपाणयः सहस्रबाहव इत्यर्थः ( जेण )—येन कट्टिएउ—कर्त्तिताः, सोउ—सोऽयं तुम्ह—युष्मभ्यं सूक्ख—सुखं देउ—ददातु। मल्लिका निवृत्ता।

७२-७३. अथाष्टाक्षरचरणवृत्तस्य चतुःषष्टितमभेदं तुंगनामकं वृत्तं लक्षयति, तरलेति। पढम—प्रथममादाविति यावत् रस सू( सु )रगो—रसैर्लघुभिः सू( सु ) रगो—सुन्दर इत्यर्थः, कियद्भिर्लघुभिरित्यपेक्षायां हेतुगर्भविशेषणमाह, णगणेति। णगण यु( जु )अल बद्धो—नग ( ण ) युगलबद्धः नगणस्त्रिलघ्वात्मको गणः अंते इति शेषः गुरुः यु( जु )अ( व )ल पसिद्धो—गुरुयुगलप्रसिद्धः गुरुद्वयप्रसिद्धं नगणद्वयाते यत्रे तादृशमित्यर्थः तरलणअणि—हे तरलनयने स तुंगो—तुंगः तत्तुंगाख्यं वृत्तमित्यर्थः ॥ नगणद्वयानंतरं गुरुद्वयं यत्र प्रतिचरणं पतति तत्तुंगनामकं वृत्तमिति फलितार्थः। अत्र पढम रस सू( सु )रगो इति पदं पद्यपूरणार्थमेवेति बोध्यम्। तुंगमुदाहरति, कमलेति। कमल भमल जीवो—कमलभ्रमरजीवः कमलांतःपातिनो ये भ्रमरास्तेषां बंधनमोचनाज्जीवनदातेत्यर्थः असल भुअ(व)ण दीवो—सकलभुवनदीपः प्रकाशकत्वादिभावः। दलिअ तिमिरडिंभो—दलिततिमिरोपप्लवः, डिंभस्तूपप्लवः प्रोक्तः इति देशीकोषः, एतादृशस्तरणिबिम्बः सूर्यबिम्बः उअइ—उदेति ॥ तुंगो निवृत्तः।

७४-७५. अथाष्टाक्षरचरणवृत्तस्य षण्णवतितमं भेदं कमलनामकं वृत्तं लक्षयति, पढमेति। जह यत्र विप्पआ—विप्रकः चतुर्लघ्वात्मको गण इति यावत् पढम—प्रथमः गणः, गुरु अंतिणा—गुरुसहितांतः यस्यांते गुरुरेतादृश इत्यर्थः णरिंद—नरेन्द्रः मध्यगुरुर्जगण इति यावत् बिह—द्वितीयः गण पूर्वेणान्वयः, एम भंतिणा—एवंप्रकारेण कमलनामकं वृत्तं भवत्यर्थः ॥ यद्वा अवहट्टभाषाया

लिंगविभक्तिवचनव्यत्यासे दोषाभावात् । गुरु सहिअ अतिणा—गुरुसहितातम् इति वृत्तविशेषण वाच्यम् । कमलमुदाहरति, सेति । (असु)रकुल मद्दणा—दैत्यवशमर्द्दनः गरुड़ बर बाहणा—गरुडः वर श्रेष्ठ वाहन यस्य तादृश इत्यर्थः बलि भुवण चाहणा—बलिभुवन बलिराज्य जिघृक्षुरित्यर्थः सः जणद्दणा—जनार्दनः जअइ जयति ॥ कमलं निवृत्तम् ॥

७६. अथ प्रस्तारक्रियया नवाक्षरस्य द्वादशाधिक पचशत भेदा भवन्ति, तत्राष्ट (सप्त) चत्वारिंशाधिकशततम भेद महालक्ष्मीनामक वृत्तं लक्षयति, दिट्ठेति । जा—ये रगणा णाअराएण—नागराजेन पिंगलेनेति यावत् विण्णिआ—विज्ञाता वर्णिता वा, मास अद्धेण—मासार्द्धेन मासार्द्धपरिमिताभिः पचदशभिर्मात्राभिरित्यर्थः दिट्ठ—दृष्टा उपलक्षिता इति यावत् ते एतादृशाः तिण्णिआ—त्रयः जोहा गणा—योद्धृगणा मध्यलघुरगणा इति यावत् यत्र पाअ—पादे ठिअ—स्थिताः । तां महालच्छिअ—महालक्ष्मीं जाण—जानीहीति । अत्र मात्राकथन श्लोकपूरणार्थमेव । रगणत्रयरचितचरणा महालक्ष्मीरिति तु निष्कृष्टार्थः ।

७७. महालक्ष्मीमुदाहरति, मुडेति । मुंडमाला गला कठिआ—मुडमालैव गलकठिका कठभूषेति यावत् यस्यास्तादृशीत्यर्थः सठिआ णाअराआ भु( आ )—सस्थितनागराजभुजा । प्राकृते पूर्वनिपातानियमादग्रे वर्त्तमानस्यापि सठिआशब्दस्य पूर्वनिपातः । बघ्घछाला किआ बासणा—व्याघ्रचर्मकृतवसना सिंहासणा—सिंहारूढा चडिआ—चडिका पाउ—पातु ॥ महालक्ष्मीर्निवृत्ता ॥

७८. अथ नवाक्षरचरणस्य वृत्तस्य चतुश्चत्वारिंशा ( अष्टा )धिकद्विशततम (२०८) भेदं सारगिकानामक वृत्त लक्षयति, दिअवरेति । सहि—हे सखि पअ पअ—पदे पदे दिअवर कण्णो सअण—द्विजवरकर्णसगणैः, द्विजवरश्चतुर्लघ्वात्मको गणः, कर्णो गुरुद्वयात्मको गणः, सगणोऽतगुरुगणस्तैरित्यर्थः मत्ता गणण—मात्राग(ण)न यत्र क्रियत इति शेषः, सर मुणि मत्ता लहिअ—शरमुनिमात्राश्लाघिता, शराः पच, मुनयः सप्त, तथाच प्रतिचरणं द्वादशमात्रायुक्तेत्यर्थः, सा सरगिक्का—सारगिका कहिअ—कथिता ॥ वचनलिंगव्यत्यासस्तु प्राकृते न दोषायेति पूर्वमेवोक्तम् । कियतीना मात्राणा गणन विधेयमित्यत्र हेतुगर्भं श( स )र मुणीति वृत्तविशेषणम् । केचित्तु दिअवर कण्णो—द्विजवरकर्णौ सअण—सगणः एव प्रकारेण यत्रेति शेषः मत्ता गणण—मात्रागणन क्रियत इति शेषः, कियत्यो मात्रा गणनीया इत्यपेक्षायामाह, सरेति, सर मुणि मत्ता—शरमुनिमात्राः, शराः पच मुनयः सप्त मिलित्वा द्वादशेत्यर्थः लहिअ—लभ्यन्ते यत्र, सा सहि—हे सखि सारगिका कहिअ—कथ्यतामिति योजनिकामाहुः । अत्र वर्णवृत्ते मात्राकथन पादपूरणार्थमेव । द्विजवरकर्णसगणरचितचरणा सारगिकेति निष्कृष्टार्थः ॥

७९. सारंगिकामुदाहरति। हरिणसदृशनयना कमलसदृशवदना। युवजनचित्तहरणी तरुणी हे प्रियसखि दृष्टा॥ कस्याश्चित्सख्याः काचिन्निजवयस्या प्रति वचनमिदम्। सारंगिका निवृत्ता।

८०. अथ नवाक्षरचरणस्य वृत्तस्यैकचत्वारिंशोत्तरद्विशततम भेद पवित्रानामकं वृत्त लक्षयति, कुन्तीपुत्तेति। जह—यत्र प्रथमं कुन्तीपुत्ता जुग्र लहिअ—कुन्तीपुत्रयुगलब्ध प्राप्तमिति यावत् कुन्तीपुत्रस्य कर्णस्य गुरुद्वयात्मकगणस्येति यावत् युग गुरुचतुष्टयमित्यर्थः, तीए—तृतीये स्थाने कर्णद्वयानन्तरमित्यर्थः बिप्पो—विप्रश्चतुर्लघ्वात्मको गणः ध्रुवं निश्चित कहिअं—कथितः। अन्ते विप्रान्ते हारः एकगुर्वात्मको गणः जणिअ—जनितः स्थापित इति यावत्, त—ता फणि भणिअं—फणिभणिता पइत्ता—पवित्रां विद्धीति शेषः॥ गुरुचतुष्टयोत्तरचतुर्ल्लघुकान्तरस्थापितैकगुरुरचितचरणा पवित्रेति तु निष्कृष्टार्थः।

८१. पाइत्ता (पवित्रा) मुदाहरति, फुल्लेति। भम भमरा—भ्रमद्भ्रमराः भ्रमतः भ्रमरा येषु तादृशा इत्यर्थः णीवा—नीपाः कदम्बा इति यावत् फुल्लाः पुष्पिताः, जल समला—जलश्यामलाः मेहा—मेघाः दिट्ठा—(दृष्टाः) बिज्जू—विद्युत् णच्चे—नृत्यति, अतः हे पिअ सहिआ—हे प्रियसखिके कता—कान्तः कहिआ—कदा आवे—आयस्यति तत्त्वमेवेति शेषः कहु—कथय॥ इद च प्रोषितभर्तृकायाः काचिन्निजवयस्यां प्रति वचनम्। पवित्रा निवृत्ता।

८२. अथ नवाक्षरचरणस्य वृत्तस्य षट्पञ्चाशदधिकद्विशततमं भेद कमलानामक वृत्त लक्षयति, सरसेति। गण सरस—गणश्रेष्ठ रमणिआ—रमणीय दिअवर जुअ—द्विजवरयुग द्विजवरश्चतुर्लघ्वात्मको गणस्तस्य युगल तथा चाष्टौ लघूनिति परमार्थः पलिआ—दत्वा। गुरुरेकः प(इ)पओ—प्रतिपाद यत्र धरिअ—धृतः ध्रियते वा दह कलअ—दशकलाकं तत् कमलओ—कमलक तत्कमलनामक वृत्तमित्यर्थः॥ अत्र चान्वयान्यथानुपपत्या कृतस्य गण सरस पूरितस्य निपातस्य दोषापहान नाशङ्कनीयमव (ह)ट्टभाषाया तस्य नियमाभावात्। सरसगण रमणिआ इति च पदद्वय पद्यपूरणार्थमेवेति द्रष्टव्यम्।

८३. कमलामुदाहरति, चलेति। स्पष्टार्थमग्रम्।

८४. अथ नवाक्षरचरणस्य (वृत्तस्य) षण्णवतितमं भेद बिंबनामक वृत्तं लक्षयति, रअईति। सिरहि—सि(शि)रसि पादादाविति यावत् दिअ—द्विजश्चतुर्लघ्वात्मको गण इत्यर्थः, मभझ—मध्ये राओ—राजा मध्यगुरुर्जगण इत्यर्थः यत्र पततीति शेषः, गुरु जुअल सव्व सेसो—गुरुयुगलसर्वशेष गुरुद्वय सर्वेषां पादाना शेषे अन्ते यस्य तादृशमित्यर्थः, एतत् बिंब—बिंबं बिंबनामक वृत्तमिति यावत्

गुणिए—गुणिनः गुणवतः पुरुषस्य सहाओ—सहायः गुणोपदेष्टृत्वाद्गुणवत्पुरुषस्य सहायभूत इति यावत् फणि—फणि पिंगलः रअइ—रचयति, गुणइ—गुणयत हे बुधजना इति शेषः ॥ द्वौ गुरू यत्र प्रतिचरण क्रमेण पततस्तद्विंत्रनामकं वृत्तमिति फलितार्थः । अथवा सव्वंशेषे पादान्ते गुरुयुगल सि (श')रसि द्विजः, विप्रगुरुद्वयमध्ये राजा जगण इत्यर्थः यत्र भवतीति शेषः, फणि रइअ—फणिरचितम् एसो—एतत् विंत्रं हे गुणि—हे गुणिनः शिष्याः सहाओ—स्वभावादेव गुणइ—गुणयत इति भिन्न भिन्न योजनीय। परे तु गुणिए सहाओ—हे गुणिनः सखाय इत्यर्थं कृत्वा सखिसबोधनपरमेतत्पदमिति वदति ।

८५. विंत्रमुदाहरति, चलईति। एतत् चल—चलमाशुगत्वरमिति यावत् वित्त—वित्त चलइ—चलति नश्यतीत्यर्थः, तरुणत्तवेसो—तरुणत्ववेषस्तारुण्यावस्थेति यावत् णस(इ)—नश्यति । सुपुरिस गुणेण बद्धा—सुपुरुषगुणेन बद्धा शुद्धा स्वच्छा किंत्ति—कीर्तिः थिर—स्थिरा रहइ—तिष्ठति ॥ तस्मात्सर्वमनित्य मत्वा गुणाना लंबे पुरुषैरासमुद्रातव्यापिनी कीर्तिर्भवति इति कस्य( चित् ) परमातस्य र्कश्चिन्मित्र प्रत्युपदेशः । विंत्र निवृत्तम् ।

८६. अथ नवाक्षरचरणस्य वृत्तस्य चतुःषष्ट्युत्तरत्रिशततम भेदं तोमरनामकं वृत्त लक्षयति, जस्त्रिति । जस (सु)—यत्र (आइ)—आदौ हत्थ—हस्तः गुर्वतः सगण इति यावत् विआण—विज्ञातः विज्ञायते वा, तह—ततस्तथा वा वे पओहर—द्वौ पयोधरौ मध्यगुरुकौ जगणावित्यर्थः जाण—ज्ञायेते ज्ञातौ वा तत् तोमर छद—तोमरनाम माणु—मानय, एम—एवं णाउ णरेंद—(नाग) नरेन्द्रः पभणेइ—प्रभणति। यत्र प्रथम सगणस्तदनतर च जगणद्वयं प्रतिचरण प(त)ति तत्तोमरनामक वृत्तमित्यर्थः ।

८७. तोमरमुदाहरति, चलीति। कोइल साव—कोकिलशावकाः चूअ—चूते सहकारवृक्षे चलि—गत्वा महुमास—मधुमासे वसतसमये पचम—पचम स्वरभेद गाव—गायति। अत इति शेषः मभ्भ—मम मण—मनः बम्मह—मन्मथः ताव—तापयति, अज्जवि—अद्यापि कत—कातः ण हु—न खलु आव—आगतः ॥ एतादृशेऽपि कातो नायातोऽतः किमाचरणीय मया तत्त्वमेवादिशेति गूढाभिप्रायायाः कस्याश्चित् प्रोषितभर्तृकाया प्रियसखीं प्रति वाक्यमिदम् । तोमर निवृत्तम् ।

८८. अथ नवाक्षरचरणस्य वृत्तस्य प्रथम भेद रूपमालानामक वृत्तं लक्षयति, चाआराआ इति । चारी कण्णा चत्वारः कर्णा गुरुद्वयात्मका गणा इति यावत् अते—कर्णचतुष्टयाते हाराए—हारः गुरुरित्यर्थः । एव—प्रकारेण पाआए—पादे अट्ठा-

राहा—अष्टादश मत्ता—मात्रा यत्र भवतीति शेषः, ए—एतत् सारा—सारमत्युत्कृष्टमिति यावत् रूआमाला छंदा—रूपमालाच्छंदः जपाए—जल्प्यते कथ्यत इति यावत्, इति णाआराआ—नागराजः पिंगलः जपे—जल्पति ॥ अत्र सारपदं मात्राज्ञापकश्च चरणः पद्यपूरणार्थमेव वर्णवृत्तेषु मात्राकथनानुपयोगादिति वाच्यम्।

८९. रूपमालामुदाहरति, जमिति। ज—यस्मात् कारणात् विज्जू—विद्युत् णच्चे—नृत्यति मेहधारा—मेघाधकारा दिशः जा(ता) इति शेषः, णीवा—नीपाः कदंबाः पंफुल्ला—प्रफुल्लिताः, मोरा—मयूराः सद्दे—शब्दायन्ते। मदा—मदगामिनः सीआ—शीताः वाआ—वाताः वाअंता—वाति, कंता—कांतः णाआ—नागतः, अतः गाआ—गात्र कंपता—कंपते ॥ वर्षाकालमवधिं कृत्वा गतः कांतो नाद्याप्यागतोऽतः किमाचरणीयमिति स्वयमेव विचारं कुर्वंत्याः प्रोषितभर्तृकाया वाक्यमेतत्। रूपमाला निवृत्ता।

९०. अथ दशाक्षरचरणस्य वृत्तस्य चतुर्विंशत्यधिकदशशत भेदा भवंति, तत्र चतुःषष्ठ्युत्तरत्रिशततम भेद संयुक्तनामकं वृत्तं लक्षयति, जस्विति। जसू(सु) यत्र आइ—आदौ हत्थ—हस्तः गुर्वंतः सगण इति यावत् विआणिओ—विज्ञातः, तइ—ततस्तथावा बे पओहर—द्वौ पयोधरौ मध्यगुरुकौ जगणाविति यावत् जाणिओ—ज्ञातौ। अंत—जगणद्वयांते पादांते वा गुरु—गुरुः विज्ञात इति पूर्वेणान्वयः, पिंगल जंपिओ—पिंगलजल्पितं सइ—तदेव संजुत—संयुक्त छंद—वृत्तं, थप्पिओ—स्थाप्यतां। तत्संयुक्तनामक वृत्त ज्ञायतामित्यर्थः।

९१. संयुक्तमुदाहरति, तुह इति। हे सुन्दरि सर्वावयवरमणीये विअसंत केअइ संपुडा—विकसत्केतकीसंपुटे एइ—अत्र कुंजे इति शेषः बप्पुडा—त्वदनुकंप्यो नायकः णिहु—निभृतं तूष्णीं पराज्ञातमिति यावत् यथा स्यात्तथा आविहि—आगमिष्यति, अत इति शेषः दुज्जण थप्पणा—दुर्जनस्थापना दुर्जनः श्वश्रूननान्द्रादयस्तेषां स्थापना परपुरुषनिरीक्षणं न विधेयमित्याद्यनेककौलाचारोपदेशमित्यर्थः परितेज्जि—परित्यज्य अप्पणा—आत्मना स्वयमेवेति तावत् तुह—त्वं जाहि—गच्छ संकेतस्थलं। नायकं प्रति उक्त्वा समागतायाः कस्याश्चित्सख्याः पुरा नायकाभिसारणाय कृतसंकल्पां पश्चान्निजकुलक्रमागताचारश्रवणेनाभिसरणमनभिलषमाणां काचिन्नायिकामभिसारार्थं प्रेरयंत्या इदं वाक्यम्। आत्मनेत्यनेन परमनैश्चिंत्यं, बप्पुडेत्यनेन च नायककृपणीयत्वं, विकसत्केतकीसंपुटे इत्यनेन चाभिसारस्थानस्यान्यजनाज्ञेयत्वं व्यज्यत इति मन्तव्यम्। क्वचित् णिहु एवि आविअ बप्पुडेति पाठस्तत्र निभृतमयमागत इति व्याख्येयम्। संयुता (?) निवृत्ता (?)।

९२. अथ दशाक्षरचरणस्य वृत्तस्यैकोनद्विशततम भेद चंपकमालानामक वृत्त लक्षयति। हार—गुरुः काहल दुज्जे—काहलद्वय काहल एकलध्वात्मको गणस्तद्-

द्वयमित्यर्थः, (ए) गुरु जुत्ता—एकगुरुयुक्तः, कुन्तिश्र पुत्ताए(?)—कुतीपुत्रः कर्णः गुरुद्वयात्मको गण इति यावत् ठवीजे—स्थाप्यते। ततः हत्थ—हस्तः गुर्वतः सगण इति यावत् करीजे—क्रियते, ततश्च हार—एकगुरुः ठवीजे—स्थाप्यते, तत् चम्पअमाला छद—चपकमालाच्छदः कहीजे—कथ्यते पिंगलेनेति शेषः ॥

६३. चंपकमालामुदाहरति, ओगरेति। दुध्ध सजुत्ता—दुग्ध संयुक्तम् ओगर भत्ता—ओगरभक्तम्, ओगरो धान्यविशेपस्तदोदनमित्यर्थः, गाइक घित्ता—गोघृतं मोइणि मच्छा—मद्गुरमत्स्यः, ना(णा)लिच गच्छा—नालीचवृक्षः, नालोचो गौडदेशे अनेनैव नाम्ना प्रसिद्धः शाकवृक्षविशेष इत्यर्थः, रभअ पत्ता—रभापात्रे कता—कातया दिज्जे(ज्जइ)—दीयते, पुणवंता—पुण्यवान् खा—खादति। कस्यचिद्विदूषकस्य निजप्रियवयस्य प्रति वाक्यमिदम्। चपकमाला निवृत्ता।

६४. अथ दशाक्षरचरणस्य वृत्तस्यैकोनचत्वारिंशाधिकचतुःशततम ४३९ भेद सारवतीनामकं वृत्त लक्षयति, दीहेति। यत्र प्रथम दीह—दीर्घं गुरुमिति यावत् तदनतर लहु (हू) जुअ—लघुयुग ततोऽप्यनतर दीह लहू—दीर्घलघू इति यावत्, अते—अते दीर्घलघ्वोरनतरमिति यावत् पओहर—पयोधर मध्यगुरु जगणमिति यावत् ठाइ—स्थापयित्वा (ध)आ—ध्वजः लघ्वादिस्त्रिकलो गण इति यावत् स्थाप्यत इति शेषः, कहा चउदह मत्त बिराम—कथितः चतुर्दशमात्राविरामः, सारबई—सारवतीनामक छद—छन्दः धुअ—ध्रुवं कहु (हू)—कथ्यताम्। प्राकृतभाषाया पूर्वनिपातानियमात् कहा-शब्दस्य पूर्वनिपातकरणे न दोष इति मतव्यम्।

६५. सारा(र)वतीमुदाहरति, पुत्तेति। ( पवित्त )—पवित्राः पितृभक्ता इति यावत् अथवा पवेः वज्रात् त्रायत इति पवित्राः वज्रादपि रक्षका इत्यर्थः पुत्राः बहुत्त धणा—बहुतर धन भत्ति—भक्ता प्रियभजनपरेति यावत् (सुद्ध मणाः)—शुद्धमनाः अकुटिलान्तःकरणा कुटुम्बिणी—वधूः यदि एतत्सर्वं भवतीति शेषः। भिच्च गणा—भृत्यगणः हक्क—हक्केन शब्दव्यापारमात्रेणेति यावत् तरासइ—त्रस्यति, तदा को—कः बब्बर—बर्बरः सग्ग—स्वर्गे मणा—मनः कर—करोति न कोऽपीत्यर्थः।

६६. अथ दशा (क्ष)रचरणस्य वृत्तस्य सप्तनवत्यधिकत्रिशततम भेद सू(सु) स(ष)मानामक वृत्त लक्षयति, कण्णो इति। पढमो—प्रथमः कणो—कर्णः गुरुद्वयात्मको गण इति यावत् जुअलो—द्वितीयः हत्थो—हस्तः गुर्वन्तः सगण इत्यर्थः, तिअलो—तृतीयः कण्णो—कर्णः पुनः गुरुद्वयात्मक एव गण इति यावत्,

चउथो—चतुर्थः हत्थो—हस्तः पुनः सगण इत्यर्थः यत्र भवतीति प्रतिगणानंतर-मध्याहृत्य योजनीय। सोला कलआ—षोडशकलाका षोडश कलाः मात्रा यस्या सा तादृशीत्यर्थः, छक्का वलआ—षड्वलया षट् वलया गुरवो यस्या सा तादृशीत्यर्थः षड्गुरुयुक्तेति यावत् एसा—एषा असुसमा प्राणसमा सुसमा—सुषमा दिट्ठा—दृष्टा पिंगलेनेति शेषः। सुषमानामकमेतद्वृत्त पिंगले(न) प्रकाशितमित्यर्थः। अत्र कलाज्ञापक च पदं पद्यपूरणार्थमेव, वर्णवृत्तेषु मात्रा-कथनस्यानतिप्रयोजनकतया (लघु)गुरुज्ञापकत्वाच्चेति मंतव्य। क्वचित्तु हत्थो पअलो इति पाठस्तत्र हस्तः प्रकट इति व्याख्येयम्।

९७. सुषमामुदाहरति, भो इति। यस्याः भ्रूः कविला—कपिला ललाटः (ट) उच्चा—उच्चः(च्चं) णेत्ता यु(जु)अला—नेत्रयुगल मज्झा पिअला—मध्यपीतं मार्जारनयनसदृशमित्यर्थः। वअणा—वदन रुक्खा—रूक्षं दंता विरलाः, ताका—तस्याः पिअला—प्रियः कै(के)से—कथ जिविआ—जीवति। परमकुत्सितरूपा यस्य कांता स कथं प्राणान्धारयति इति सकला-वयवरमणीयकांताकस्य कस्यचित्कुकांताकं प्रति वचनमिदम्।

९८. अथ दशाक्षरचरणस्य वृत्तस्य पण्णवत्यधिकचतुःशततम भेदम् अमृत गतिनामक वृत्त लक्षयति, दिअवरेति। दिअवर हार पअलिआ—द्विजवरहार प्रकटिता द्विजवरश्चतुर्लघ्वात्मको गणः हारो गुरुस्ताभ्या प्रकटितेत्यर्थः, अथवा प्राकृतभाषाया पूर्वनिपात कृत्वा योजनीय, पुणवि—पुनरपि तहट्ठिअ—तथैव संस्थाप्य द्विजवरहारौ दत्वेति यावत् करिआ—कृता। अथवा पूर्वोक्तप्रकारेण करिआ—शब्दस्य पूर्वनिपात कृत्वा पुणवि करिआ तहट्ठिअ—पुनरपि कृततथा-स्थितिः कृता तथा तेन प्रकारेण द्विजवरहारस्थापनप्रकारेणेति यावत् स्थितिर्यस्याः सा तादृशीति योजनीयम्। वसु लहु वे २ गुरु सहिआ—वसुलघुद्विगुरुसहिता वसवोऽष्टौ, तथा चाष्टसंख्याकैर्लघुभिर्गुरुद्वयेन च युक्तेत्यर्थः, अमिअगई—अमृतगतिः धुअ—ध्रुवं कहिआ—कथिता॥ तदमृतगतिनामक वृत्त कथितमित्यर्थः। अत्र लघुगुरुज्ञापकश्चरणोऽनतिप्रयोजनकत्वा त् पद्यपूरणार्थमिति मंतव्य, प्रथम लघुचतुष्टय तदनंतरमेको गुरुः पुनर्लघुचतुष्टय पुनरेको हार एते गणाः क्रमेण यस्य चरणे पतति तदमृतगतिनामक वृत्तमिति निष्कृष्टोर्थः।

९९. अमृतगतिमुदाहरति, सरेति। सरअ सुधाअर वअणा—शारदसुधाकर-वदना विकच सरोरुह णअणा—विकचसरोरुहनयना। मअ गल कुंजर गमणी—मदकलकुंजरगमना तरुणी हे प्रि(य)सखि दिट्ठा—दृष्टा॥ क्वचित् जिविह सुधा रस वअणेति पाठस्तत्र जीवितस्य प्राणस्य सुधारस इव वचन यस्याः सा जीवितसुधारसवचना इति व्याख्येयम्। अमृतगतिर्निवृत्ता।

१००. अथैकादशाक्षरचरणस्य वृत्तस्याष्टचत्वारिंशोत्तरं सहस्रद्वय भेदा भवति, तत्रैकोनचत्वारिंशोत्तरचतुःशततम४३९ भेद बधुनामक वृत्त लक्षयति, णीलेति। जत्थ—यत्र पाअ—पादे तिण्णि—त्रयः भआ गण—भगणाः भणीजे—भण्यन्ते—अतहि—अते भगणत्रयाते पादाते वेत्यर्थः दुग्गुरु—द्विगुरुः करीजे—क्रियते, सोलह मत्तह—षोडश मात्राश्च ठवीजे—स्थाप्यन्ते, एह—एतत् णील सिरोरुह—नीलशिरोरुहेण पिंगलेनेति यावत् बधु—बधुनामक वृत्तं कहीजे—कथ्यते ॥ यद्वा णील सरूअह—नीलस्वरूपापरनामकमिति यावत् बधु—बधुनामकं वृत्तं कथ्यत इति व्याख्येयम्। अत्र मात्राज्ञापकचरणमनतिप्रयोजनकत्वात् पद्यपूरणार्थमेवेति मंतव्यं, भगणत्रयानतरं गुरुद्वय यत्र प्रतिचरण पतति तद्बधुनामकं वृत्तमिति फलितार्थः।

१०१ बधुमुदाहरति, पण्डवेति। पण्डव वसहि—पाडववशे पाडोरयं—पाण्ड( वः )पाडवश्चासौ वस( श )श्चेति पाडववस( श )स्तस्मिन्नित्यर्थः यस्येति (शेषः) जम्म—जन्म क्रियते विधात्रेति भावः, अज्जिअ—अर्ज्जयित्वा सपअ—सपत् धम्मके—धर्म्माय दिज्जे—दीयते तेनेति शेषः। सोउ—सोऽपि जुहुट्ठिर—युधिष्ठिरः सकट—सकट पाआ—प्राप्तः, अतः दै (दे) वक—दैवस्य विधेरिति यावत् लेक्खिअ—लिखित केण—केन मेटावा—विलुप्यते ॥ न केनापीति भावः बंधुर्निवृत्तः। एतस्यैवान्यत्र दोधकसज्ञा।

१०२. अथैकादशाक्षरचरणस्य वृत्तस्याशीत्यधिकमष्टशततम भेद ८८० सुमुखीनामक वृत्त लक्षयति, दिअवरेति। दिअवर—द्विजवरश्चतुर्ल्लघ्वात्मको गणः ततो हार—हारो गुरुरिति यावत्, ततो लहू जुअला—लघुयुगल, ततश्च वलअ—वलयो गुरुः, ततश्च हत्थ अला—हस्ततल गुर्वंतः सगण इति यावत्, एव प्रकारेण यत्र चउदह (१) कल—चतुर्दश कलाः पअ—पादे परिट्ठिअ—परिस्थिताः, सो—सा (सु)मुही—सुमुखी जाणह—ज्ञायता तत्सुमुखीनामक वृत्तं ज्ञेयमित्यर्थः, इति कइवर—कविवरः अही—अहिः पिंगल इति यावत् जपइ (१)—जल्पति।

१०३. सुमुखीमुदाहरति, अईति। जोव्वण देह धणा—यौवनदेहधनानि अइचल—अतिचलानि, सोअर—सोदरा भ्रातर—इति यावत् बधु जणा—अन्ये कुटुम्बा इत्यर्थः सिविणअ—स्वप्नवत् स्वप्नेन तुल्यम् इति यावत्। यद्वा बधुजनाः सिविणअ सोअर—स्वप्नसोदराः स्वप्नतुल्या इत्यर्थः। काल पुरी गमणा—यमपुरीगमनम् अवस(उ)—अवश्यम् अतो हेतोः हे बब्बर मणा—मनः पाप—पापात् परिहर ॥ कश्चिन्मत्पापकर्म्मसिक्त प्रति कस्यचिन्मित्रस्योपदेशवाक्यमेतत्। सुमुखी निवृत्ता।

१०४. अथैकादशाक्षरचरणस्य वृत्तस्यैकोनचत्वारिंशोत्तरचतुःशततम भेद पुनरपि दोधकमेवेति नामान्तरेणाह, चामरेति। यत्र प्रथमं चामर—चामर गुरुरिति यावत् काहल जुग्ग—काहलयुग काहलो लघुस्तद्‌जु( यु )गमित्यर्थः, ठवीजे—स्थाप्यते, ततश्च हार—हारो गुरुः लहू—लघू हारानन्तर द्वौ लघू इत्यर्थः, जुअ—जु(यु)ग वारद्वयमित्यर्थः एको गुरुस्तदनन्तर लघुद्वयमिद वारद्वयमिति परमार्थः, तत्थ—तथ्य तथा वा धरीजे—ध्रियते। एव सति भगणत्रय सिध्यति, अन्यथा चामरकाहलयुगानन्तर हारलघुद्वयमात्रोक्त्या तृतीयभगणालाभाद्भ्रातप्रलपितत्वापत्तिरित्यस्मत्तातचरणोपदिष्टव्याख्योपदेशो निर्मत्सरैः सुधीभिर्विभावनीयः। पअ अत—पादाते कण्ण गणा—कर्णगणः गुरुद्वयात्मको गण इति यावत् करीजे—क्रियते फणी पिंगलः तत् दोधकच्छन्दः दोधकनामक वृत्त पभणीजे—प्रभणति॥ यत्र भगणत्रयोत्तर गुरुद्वय तद्दोधकनामक वृत्तमिति फलितार्थः। बन्धुदोधकयोश्चोद्ववनिकामात्रभेदाद्भेदः स्वरूपतस्तु न कश्चिद्विशेषः इति विभावनीयम्।

१०५. दोधकमुदाहरति, पिंगेति। येन पिंग जटावलि—ता( म्र )जटावल्या गगा ठाविअ—स्थापिता, अथवा यः पिंगजटावलीस्थापितगग इत्येकमेव पद शिवविशेषण, येन अद्धं( र्ध )गा—अर्द्धांगे नागरी स्त्रीति यावत् धारिअ—धृता। जसु—यस्य सीसहि—शीर्षे णोक्खा—रमणीया चदकला—चन्द्रकला दृश्यते इति शेषः, सो—सः सकर—शिवः तुअ—तुभ्य मोक्खा(?)—मोक्ष दुःखप्रागभावासमानाधिकरण दुःखध्वंसमिति यावत् दिज्जउ—ददात्विति यावत्॥ दोधक निवृत्तम्॥

१०६. अथैकादशाक्षरचरणस्य वृत्तस्यैकोननवत्युत्तरद्विशततमं भेद २८९ शालिनीनामक वृत्त लक्षयति, कण्णविति। यत्र प्रथम कण्णो दुण्णो—कर्णद्वयं वर्णो गुरुद्वयात्मको गणस्तद्द्वयमित्यर्थः, हार एक्को—हार एकः हारो गुरुरित्यर्थ विसज्जे—विसृज्यते, ततः सल्ला कण्णा गध कण्णा—शल्यकर्णगधकर्णाः शल्यो लघुः वर्णो गुरुद्वयात्मको गणः, गंधो लघुः, कर्णो गुरुद्वयात्मको गण एते इत्यर्थः पाए-पाए—पादे पादे प्रतिचरणमिति यावत् सुणिज्जे—श्रूयते, तथा बीसा—विंशतिः रेहा—रेखा मात्रा इति यावत् गणिज्जे गण्यन्ते, सा सप्पा राए—सर्पराजेन सालिणी—शालिनीनामकं वृत्तमिति यावत् मुणिज्जे—मन्यते॥ अत्र मात्राकथन पादपूरणार्थमेव, लिंगविभक्तिवचनव्यत्यासस्तु प्राकृतभाषाया न दोषायेति मन्तव्य। मगण-तगणत्र( द्व )योत्तरगुरुद्वयरचितचरणा शालिनीति फलितार्थः॥

१०७. शालिनीमुदाहरति, रंडेति। चडा परमकोपवती दिक्खिदा—दीक्षिता शाक्तशास्त्रोक्तविधिगृहीतमन्त्रेति यावत् रंडा—विधवा धम्मदारा—धर्मपत्नी,

मज्जं—मद्यं पिज्जिए—पीयते, मंस अ(आ)—मांसं च खज्जए—खाद्यते। भिक्खा—भिक्षा भोज्ज—भोज्य चम्मखंड च सेज्जा—शय्या। एतादृशः कोलो—कौलः वंशपरंपरापरिप्राप्तः शाक्ततन्त्रविशेषोक्त इति यावत् धम्मो—धर्मः कस्स—कस्य रम्मो—रम्यो नो भाति॥ अपि तु सर्वस्यापीत्यर्थः। कर्पूरमञ्जरीसाटकस्थ कापालिकभैरवानन्दस्य राजानं प्रति वाक्यमिदम्। शालिनी निवृत्ता।

१०८. अथैकादशाक्षरचरणस्य वृत्तस्य चतुर्विंशत्युत्तरसहस्रतम भेदं दमनक-वृत्तं लक्षयति, दिअवरेति। दिअवर जुअ—द्विजवरयुगलं चतुर्लघ्वात्मकगण-द्वयमिति यावत् लहु जुअल—लघुयुगलं वलअं—वलयं गुरुरिति यावत् यत्र पअ पअ—पादे पादे प्रतिचरणमिति यावत् पअलि—प्रकटितं। चउ पअ—चतुः पादेषु चउ वसु कलअ चतुर्वसुकलाकं दक्षिणगत्यैवाङ्कस्थापनेन ४८ चतुर्वसुशब्दे-नाष्टचत्वारिंशन्मात्रा लभ्यते, तथा चतुर्ष्वपि पादेषु मिलित्वाष्टचत्वारिंशन्मात्राक-मिति तत्त्व, दमणअ—दमनक फणी ललिअ—ललितं यथा स्यात्तथा भण—भणति॥ लघुदशकोत्तरगुरुरचितचरणो दमनक इति फलितार्थः।

१०९. दमनकमुदाहरति, परिणअ इति। परिणअ (ससहर वअण)—परिणत-शशधरवदन विमलकमलदलनयन। विहितासुर( कुल ) दमनं महुमहण—मधुमथन श्रीकृष्ण ( सिर—शिरसा ) पणमह—प्रणमत॥ दमनको निवृत्तः।

११०. अथैकादशाक्षरचरणस्य वृत्तस्य त्र्यशीत्युत्तरषट्शततमं ६८३ भेदं सेनिकानामकं वृत्तं लक्षयति, तालेति। आदौ ताल णंदए—तालनन्दाभ्यां ततः समुद्द तूरआ—समुद्रतूर्य्यां( भ्यां ) गुर्वादित्रिकलगणाभ्यामित्यर्थः ततश्च जोहलेन मध्यलघुकेन रगणेनेति यावत् एह—एतत् सेणिआ—सेनिकानामकं छंद—वृत्तं पूरआ—पूर्य्यतां। अत्र च प्रतिपदं गारहा (ह) अक्खराइ—एका-दशाक्षराणि जाणिआ—ज्ञातव्यानि, एअ—एतत् णाअ राअ—नाग राज जपि (प)—जल्पति॥ यद्वा एकादशाक्षरज्ञातेत्येकं पदं कृत्वा वृत्तविशेषणपरतया गारहाइँ इति चरणो जो( यो )जनीयः। अत्राक्षरकथनमनतिप्रयोजनकतया पद्यपूरणायेति बोध्यम्। गुरूत्तरैः पञ्चभिर्गुर्वादित्रिकलगणै रचितचरणा सेनिकेति निष्कृष्टार्थः॥

१११. सेनिकामुदाहरति, झत्तीति। झत्ति—झटिति पत्ति पाअ पदातिपादैः भूमि—भूमिः कंपिआ—कंपिता, टप्पु खुंदि खेह—टापोत्खातखेहैश्चलदश्व-खुरोद्धतरेणुभिरिति परमार्थः सूर—सूर्यः झंपिआ—आच्छादितः। गौड राअ जिण्णि—गौडराजं जित्वा माण मोडि(लि)आ—मानमोडिता कामरूअ राअ बंदि छोलिआ—का (म) रूपराजबंदी मोचिता। सेनिका निवृत्ता॥

११२. अथैकादशाक्षरचरणस्य वृत्तस्य प्रथम भेदं मालतीनामकं वृत्तं लक्षयति, कुंतीति। यत्र पाआ (पाआ)—पादे पादे प्रतिपादमिति यावत् दिण्णा—दत्ताः पञ्च कुंतीपुत्राः कर्णा गुरुद्वयात्मका गणा इति यावत् जाणीआ—ज्ञायते, अंते—कर्णपञ्चकांते पादांते वा कंता—कांतः एक्का—एकः हारा—हारः गुरुरिति यावत् मणीआ—मान्यते। बाईसा—द्वाविंशतिः मत्ता—मात्राः दिट्ठ—दृष्टा यत्र पादे पादे इति पूर्वेणान्वयः, तत् मालती छंदा—मालतीच्छन्दः णाएसा—नागेशः जपता—जल्पति ॥ अत्र कांतपदं मात्राज्ञापकं च पद्यपूरणार्थमिति मंतव्यम्, एकादशगुरुरचिता मालतीति निकृष्टोऽर्थः।

११३. मालतीमुदाहरति, ठामेति। मेरु सिंगा—मेरुशृंगे यथेति शेषः णीला मेहा—नीला मेघाः पेक्खीआ—प्रेक्ष्यते, ठामा ठामा—स्थाने स्थाने हत्थी जूहा—हस्तियूथानि ( तथे )ति शेषः देक्खीआ—दृश्यते। णीला मेहा मज्झे—नीलमेघमध्ये यथेति शेषः विज्जुत् णच्चती—नृत्यति, वीरा( आ ) हत्था अग्गे—वीरहस्ताग्रे तथेति शेषः खग्गा—खड्गाः राजता—राजति ॥ केनचिद्वन्दिना कृतं संग्रामवर्णमेतत्। मालती निवृत्ता।

११४. अथैकादशाक्षरचरणस्य वृत्तस्य सप्तपञ्चाशदुत्तरत्रिशततमं भेदं ३५७ इन्द्रवज्रानामकं वृत्तं लक्षयति, दिज्जे इति। यत्रादौ तआरा जुअला—तकारयुगलं लब्ध तगणद्वयमित्यर्थः अंते—तगणद्वयांते गुरु जुग्ग सेस—गुरुयुगशेषः गुरुद्वयं शेषेऽन्ते यस्य तादृश इति यावत् णरेंदो—नरेन्द्रो मध्यगुरुर्जगण इति यावत् पएसु ( सू )—पदेषु दिज्जे—दीयते। सा मत्ता दहा अट्ठ समा सुसज्जा—सुसज्जसमाष्टादशमात्राका सुसज्जाः सुस्थापिताः समाः पदचतुष्टये न्यूनातिरिक्ता अष्टादश मात्रा यस्यां सेति यावत् इंदवज्जा—इंद्रवज्रा इति धुअ—ध्रुवं फणिंदा—फणींद्रः जपे—जल्पति ॥ सुसज्जा—शोभनीकृत्य स्थापिताः समा—पदचतुष्टये समानाः दहा अट्ठ—अष्टादश मत्ता—मात्राः यत्र पएसुं ( सूं )—पदेषु पतंतीति शेष इति भिन्नमेव योजनीयं। अत्र मात्राकथनं पद्यपूरणार्थमेव, अवहट्टभाषायां पूर्वनिपातानियमात् पूर्वापरव्यत्यासस्तु न दोषायेति ध्येयं, तगणद्वयानंतरजगणानंतरगुरुद्वयरचितचरणा इंद्रवज्रेति फलितार्थः।

११५. इन्द्रवज्रामुदाहरति, मंतमिति। मंत—मंत्रं तंत—तंत्रं णहु—खलु निश्चयेनेति यावत् किंपि—किमपि ण—न जाणे—जानामि, झाण च—ध्यानं च किंपि—किमपि णो—न जाने इति पूर्वेणान्वयः, किंतु मज्ज पिआमो—मद्यं पिबामः महिलं रमामो—महिलां रमामहे गुरुप्पसाओ—गुरुप्रसादात् कुल मग्ग लग्गा—कुलमार्गलग्नाः मोक्खं—मोक्षं वजामो—व्रजामः ॥ अनवरतमैथुनमद्य-

पानाद्यनेककुलपरंपरागमनकुकर्मात्यासक्ता अपि वयं गुरुप्रसादान्मोक्षं प्राप्नुम इति कापालिकभैरवानन्दस्य राजानं प्रति वाक्यमिदं कर्पूरमञ्जरीसाटकस्थम्। इन्द्रवज्रा निवृत्ता।

११६. अथैकादशाक्षरचरणस्य वृत्तस्याष्टपञ्चाशदुत्तरत्रिशततम ३५८ भेदम् उपेंद्रवज्रानामक वृत्तं लक्षयति, णरिंदेति। यत्र प्रथम एक्का—एकः णरिंद—नरेन्द्रः मध्यगुरुर्जगण इति यावत् ततः तअणा—तगणोऽन्तलघुर्गण इत्यर्थः सुसज्जा—सू(सु) सज्जः शोभनीकृत्य स्थापित इति यावत्, ततश्च पओहरा—पयोधरो मध्य गुरुर्जगण इत्यर्थः कण्ण गणा—कर्णगणो गुरुद्वयमिति यावत् मुणिज्जा—ज्ञातः ता फणिराअ दिट्ठा—फणिराजदृष्टा पिंगलोपदिष्टा उपेंद्रवज्रा छेआ—छइल्ला विदग्धा इति यावत् पढति—पठति॥ अथवा नरेन्द्रैकतगण सुसज्जापयोधरकर्णगणाः मुणिज्जा—ज्ञायते यत्र प्रतिचरणमिति शेषः इत्येवमेव पद कृत्वा योजनीयम्। अत्र (सुसज्जमिति) शुभवर्णसृष्टामिति च पदं पद्यपूरणार्थमेवेति मतव्यम्॥

११७. उपेन्द्रवज्रामुदाहरति, सुधम्मेति। सुधम्म चित्ता—सुधर्मचित्त गुणमत पुत्ता—गुणवत्पुत्र सुकम्म रत्ता—सुकर्मरत पत्यादिशुश्रूषाकर्मण्यासक्तमिति यावत् विणआ—विनीतं कलत्ता—कलत्र। विसुद्ध देहा—रोगादिरहितः देहः धणमत—धनवत् गेहा—गेह, एतत्सर्वं यदि भवतीति शेषः तदा के बब्बरा—वर्बराः सग्ग णेहा—स्वर्गस्नेह कुणति—कुर्वंति, अपि तु न कोऽपीत्यर्थः॥ सर्वपदार्थविकलक-(स्य) कस्यचिदिदं वाक्यम्। उपेंद्रवज्रा निवृत्ता॥

११८. अथेंद्रवज्रोपेंद्रवज्राभ्या पादेन पादाभ्या पादैश्च मिलिताभ्यामुपजाति-च्छन्दो भवति तच्च (च)तुर्दशविधमित्याह, इदेति। इद उविंदा—इन्द्रोपेन्द्रयोः नामैकदेशेनापि नामग्रहणादिंद्रवज्रोपेंद्रवज्रयोरित्यर्थः एक्क—ऐक्यं करिज्जसु कुरुष्व, चउ अग्गल दह णाम—चतुरधिकदशनामानि मुणिज्जसु—जानाहि। सम अक्खर—सामान्यक्षराणि दिज्जसु—ददस्व, सम जाइहि—समजातिभिः तुल्याक्षरचरणजातीयैर्वृत्तैरिति यावत् उपजाइहिं—उपजातिं किज्जसु—कुरुष्व इति पिंगल—पिंगलो नागः भणति। इदं तु बोध्य समाक्षराणि दत्वा समजातीयैर्वृत्तै-रुपजातिं कुरुष्वेत्यनेन विषमाक्षरचरणजातीयैर्वृत्तैर्नोपजातिरित्युक्त भवति, तथाचेंद्र-वज्रोपेन्द्रवज्राभ्या न त्विंद्र(वज्रें द्र) वंशाभ्यामिंद्रवंशावंशस्थाभ्या वातोर्मीशालिनीभ्यां न मालिनीशालिनाभ्यामुपजातिर्भवति इति परमार्थ इति।

११९. अथासा चतुर्दशभेदानयनप्रकारमाह, चउ अक्खरेति। चउ अक्ख-रके—चतुरक्षराणा पत्थर—प्रस्तारं किज्जसु—कुरुष्व, इद उविंदा—इन्द्रोपेंद्रयोः

गुरु लहु—गुरुलघू इन्द्रवज्रायां गुरुमुपेंद्रवज्रायां लघुमित्यर्थः बुज्झसु—बुध्यस्व। मज्झेइ—मध्ये सर्वगुरु—सर्वलघुप्रस्तारयोरिति यावत् चउद्दह—चतुर्दश उवजाइ—उपजातयः हो—भवति इति किंत्ति वेलाई—वेल्लितकीर्त्तिः पिंगलः जंपइ—जल्पति ॥ अत्रेदं तत्त्व—चतुरक्षरस्य प्रस्तारक्रियया षोडश भेदा भवंति, तत्र चतुर्गुरुः प्रथमः स चेंद्रवज्रापादचतुष्टयज्ञापकस्तत्र प्रतिचरणं प्रथमगुरोरुपादानात् तत्रैकैको गुरुरिंद्रवज्राया एकैकचरणज्ञापक इति हृदयं। चतुर्लघुश्चान्तिमः स चोपेंद्रवज्रापादचतुष्टयज्ञापकस्तत्रै(कै)को लघुरुपेंद्रवज्राया एकैकचरणज्ञापक इति सहृदयैकगम्योर्थस्तत्र प्रतिचरणं प्रथमलघोरुपादानात्। एवं चावशिष्टा मध्ये चतुर्दशभेदास्तदनुसाराच्च चतुर्दशोपजातयो भवंति। तथाहि चतुरक्षरस्य द्वितीयप्रस्तारे प्रथममेको लघुस्तदनन्तरं च त्रयो गुरवो भवन्ति, तथा चोपेंद्रवज्रायाः प्रथमश्चरणः त्रयश्चेंद्रवज्राया एवं मिलित्वा प्रथमो भेदः। चतुरक्षरस्य तृतीयप्रस्तारे प्रथममेको (गुरुस्तत एको) लघुस्तदनन्तरं गुरुद्वयं, तथा चेंद्रवज्रायाः प्रथमश्चरणो द्वितीयश्चोपेंद्रवज्रायाः तृतीयचतुर्थौ च पुनरिंद्रवज्राया मिलित्वा द्वितीयो भेदः।चतुरक्षरस्य चतुर्थप्रस्तारे प्रथमं लघुद्वयं तदनन्तरं गुरुद्वयं भवति, तथाच प्रथमद्वितीयौ चरणौ उपेंद्रवज्रायाः तृतीयचतुर्थौ चेंद्रवज्राया एवं मिलित्वा तृतीयो भेदः। एवमग्रेपि सुधीभिरवधेयमित्यस्मत्तातचरणोपदिष्टः पथाः।

१२०. उपजातिमुदाहरति, बाल इति। कुमारः कार्त्तिकेयः बालः स छमुडधारी स च षण्मुण्डधारी, उप्पाउ हीणा—अर्ज्जनापायविकला एक्क—एका अपरा असहाया णारी—स्त्री हउ—अहं, भिषा(खा)री—भिक्षुकस्त्वम् अहन्निशं विस खाहि—विषं भक्षयसि, अतः हमारी—अस्मदीया का गतिरवस्था किल निश्चयेन भवित्री। षड्मुखधारिणो बालस्य बहुतरमत्यावश्यकं च भक्ष्यमपेक्षितमहं च निस्सहाया अर्ज्जनासमर्था स्त्री त्वं चाहर्न्निशं विषभोजनेनैव स्वस्य तृप्तिमुत्पादयस्यतोऽस्मदीया का गतिर्भविष्यति तन्न जाने इति महादेवं प्रति पार्वतीवाक्यं। पूर्वार्द्धे इंद्रवज्राया उत्तरार्द्धे चोपेंद्रवज्राया लक्षणसत्वाद्रामाख्या द्वादशीयमुपजातिः।

१२१. अथासां नामान्याह, किचीति। निगदेनैव व्याख्यातं। अथासामस्मत्तातचरणनिर्मितानि क्रमेणोदाहरणानि यथा—

दृढं धनुर्वामकरे दधानो वामे शरं स्वर्णविचित्रपुंखं।
पृष्ठप्रदेशेऽक्षयि तूणयुग्मं बिभ्रत्स रामः शरणं ममास्तु ॥१॥

यस्यानुकम्पायुतदृष्टिपद्म-कटाक्षसप्रेक्षित एव लोकः।
सर्वापदब्धिं तरति प्रतूर्णं श्रीरामचन्द्रः शरणं ममास्तु ॥२॥

यदीयपादाब्जपरागपातात् शिलामयी गौतमयोषिदाशु।
कामस्त्रियोऽपि स्पृहणी(य)रूपं लेभे स रामः शरणं ममास्तु ॥३॥

सुग्रीववातात्मजमुख्यकीशै-र्बद्धाजलीकैरुपसेव्यमानः ।
सुवर्णसिंहासनसंस्थितः स श्रीरामचंद्रः शरण ममास्तु ॥४॥
त्रिलोकसंपालनबद्धसंधः कारुण्यपीयूषमहाम्बुराशिः ।
स्वभक्तदुःखोद्धरणैकवीरः श्रीरामचंद्रः शरण ममास्तु ॥५॥
आजानुबाहुद्वितयः प्रबद्धयमासनस्थो धृतपीतवासाः ।
प्रफुल्लराजीवपलाशनेत्रः श्रीरामचंद्रः शरण ममास्तु ॥६॥
समस्तपृथ्वीपतिमौलिरत्न-प्रभाभिनीराजितपादपद्म ।
अशेषगीर्वाणगणप्रगीताकीर्ति तमीश प्रणतोऽस्मि राम ॥७॥
नानाविभूषामणिरश्मिजाल-प्रच्छन्ननीलाश्मसमानगात्रः ।
सौंदर्यसनाशितकामगर्वः स रामचंद्रः शरण ममास्तु ॥८॥
अरातिनारीहृदय प्रविष्टस्तत्र स्थितान्दग्धुमिवारिवर्गान् ।
यस्य प्रतापप्रबलानलस्तु स रामचंद्रः शरण ममास्तु ॥९॥
स्वाकप्रसुता धृतकाचनाब्जा समीक्ष्य सीता कनकप्रभाङ्गी ।
आनंदितातःकरणः स पायादपायतो मा रघुवंशकेतुः ॥१०॥
अनन्यसाधारणकीर्त्तिचंद्रकरावधूताष्टदिगंधकारः ।
पौलस्त्यवंशद्रुमकालवह्निः स जानकीशः शरण ममास्तु ॥११॥
मत्वा भवत त्रिजगद्विपत्तिसनाशक देवगणान् विहाय ।
भवत्पदाब्ज शरणं गतोऽस्मि प्रसीद राम त्वमतोऽतिशीघ्रम् ॥१२॥
भवत्समानोऽपि यदा नरेंद्रः श्रीराम कार्प्पण्यमुरीकरोति ।
तदाश्रयेत्कः खलु दातृभावमतस्त्वमीश त्यज निष्ठुरत्व ॥१३॥
वीरासनाध्यासित उग्रवीर्यो नवाम्बुदश्यामरुचिर्जितारिः ।
समस्तविद्याम्बुधिपारगश्च स रामचंद्रः शरण ममास्तु ॥१४॥

१२२. अथ द्वादशाक्षरचरणस्य वृत्तस्य षण्णवत्युत्तरं सहस्रचतुष्टयं भेदाः ४०९६ भवति, तत्राद्यं भेद विद्याधरनामक वृत्त लक्षयति, चारीति । यत्र पाए—पादे सव्वा सारा—सर्वसारान् सर्वसारं वा चारी कण्णा—चतुरः कर्णान् कर्णचतुष्टय वा गुरुद्वयात्मकगणचतुष्टयमिति यावत् दिण्णा—दत्वा, पाआ अते—पादाते कता—कांताः चारी हारा—चत्वारो हारा गुरवः दिज्जे—दीयते । तं छण्णावेआ मत्ता पत्ता चारी पाआ—षण्णवतिमात्राप्रातचतुष्पाद प्रतिपाद चतुर्विंशतिमात्राणा विद्यमानत्वात् षण्णवतिमात्रा प्राताश्चत्वारः पादा यस्य तत्ताद्दशमिति यावत् सारा—द्वादशाक्षरचरणवृत्तमध्ये आदिभूतत्वात् सा( र )भूत श्रेष्ठमिति यावत् तं विज्जाहारा—विद्याधरं विद्याधरनामक वृत्त णाआ राआ—नागराजः जपे जल्पति ॥ अत्र वर्णवृत्ते मात्राकथनस्यानतिप्रयोजनकत्वान्मात्राज्ञापकश्चरणः सव्वा-

सारेति कर्णं( वि )शेषणं ( च ) पद्यपूरणार्थमेवेति मतव्यं, द्वादशगुरुरचितचरणो विद्याधर इति फलितार्थः ।

१२३. विद्याधरमुदाहरति, जासू इति । जासू—ज( य )स्य कंठा—कंठे चे सा—विप दीसा—दृश्यते, सीसा—शीर्षे गंगा दृश्यते, अगा—अंगे अर्द्धांगे इति यावत् गोरी—गौरी पार्वतीत्यर्थः दृश्यते, येन णाआराआ—नागराजः हारः कंठभूषा किज्जे—क्रियते कृतो वा । गते—गात्रे चामा—चर्म करिकृत्तिरिति यावत् धृतमिति शेषः, येन च कामा—काम मारु—मारयित्वा दग्ध्वेति यावत् कित्ती—कीर्तिः लिज्जे—गृहीता, सोई—स एव देओ—देवः शशिकलाभरण इत्यर्थः भत्ती—भक्त्या तुम्हा—युष्मभ्य सुक्ख—सुख निरतिशयानन्दमिति यावत् देओ—ददातु । विद्याधरो निवृत्तः ।

१२४. अथैका (यद्वा) दशाक्षरचरणस्य वृत्तस्य षडशीत्युत्तरपचशततम ५८६ भेदं भुजगप्रयातनामकं वृत्तं लक्षयति, धओ इति । हे मुद्ध—हे मुग्धे यत्र धओ—ध्वजो लघ्वादिस्त्रिकलः चामरो—चामर गुरुः एव चउ—चत्वारः रूअओ—रूपकाः गणा इति यावत् पए—पदे प्रतिचरणमित्यर्थः किज्जे—क्रियते तत्पदे इत्यनुषजनीय बीस रेहं—विंशतिरेखं विंशतिः रेखाः मात्रा यत्र तादृशमित्यर्थः शुद्धदेह भुअगापआअ—भुजंगप्रयात छंद—छन्दः सेस—शेषेण पिंगलेन जत्थ—यथा हारो—हारः मुक्तादाम तहा—तथा कंठए—कंठे ठए—स्थाप्यते । केचित्तु धओ—ध्वजः लघ्वादिस्त्रिकल इति यावत् ततः चामरो—चामर गुरुरिति यावत् रूअओ—एवं रूपेण चउ—चतुर्भिर्गणैर्यत्र चरण इति शेषः सारो—सारः श्रेष्ठ इति यावत् सेस—शेषः संपूर्ण इत्यर्थः तहा—तथा किज्जे—क्रियते पूर्यते इति यावत् , पए बीस रेह—पदे विंशतिरेख शुद्धदेह तुल्यवनिकया समीकृतगण तत भुअगापआअ—भुजगप्रयात छन्दः, तथा कथमित्याह, ठए इति, जत्थ—यथा मुद्धए—मुग्ध( या ) कंठए—कंठे हारः मुक्तादाम ठए—स्थाप्यते इत्याहुः । अत्र ठए इति द्वितीयश्चरणः मात्राकथन च पद्यपूरणार्थमेवेति मतव्यं, यग( ण )चतुष्टयरचितचरण भुजंगप्रयातमिति फलितोऽर्थः ॥

१२५. अथास्यैव प्रकारांतरं गाथया वदति, अहिगणेति पसिद्धा—सर्वत्र छन्दोग्रन्थे प्रसिद्धाः चारि—चत्वारः अहिगण—अहिगणाः पञ्चकलाः यगणा इति यावत् यत्र प्रतिचरणे पततीति शेषः, वीसग्गल—विंशत्यधिकानि तीणि सअ—त्रीणि शतानि समग्गाई—समग्रा मत्ता सखा—मात्रासख्या यत्र भवतीति शेषः पिंगलो—पिंगल इति भणइ—भणति ॥ श्लोकचतुष्टयस्यैकः श्लोकः कर्त्तव्य इति फलितार्थः ।

१२६. भुजंगप्रयातमुदाहरति, महामत्तेति। यस्याः पाए—पादे महामत्त-मातंगः ठवीआ—स्थापितः, तहा—तथा यस्याः कडक्खे—कटाक्षे तिक्ख बाणा—तीक्ष्णबाणाः धरीआ—धृताः। यस्याः भुआ—भुजयोः फास—पाशो धृत इति पूर्वेणान्वयः, यथा च भोहा—भ्रुवोः धणूआ—धनुः धृतमिति पूर्वेणान्वयः सेय नागरी अहो इत्याश्चर्ये कामराअस्स—कामनृपतेः ( समाणा )—समाना त्रिभुवनविजयेनातिगर्विता सेणा—सेनैव सेनेति भावः॥ यद्वा पादस्थापितमहा-मातंगा कटाक्षा एव धृतास्तीक्ष्णबाणा यथा वेत्यर्थः भुजपाशा भुजैव पाशो यस्याः सेत्यर्थः, धनुःसमानभ्रूका नागरी कामनृपतेः सेनेव यातीति शेषः इति योजनीय। पूर्वापरशब्दव्यत्यासस्तु प्राकृतभाषायां न दोषायेति मतव्यम्। भुजगप्रयात निवृत्तम्।

१२७. अथ द्वादशाक्षर( चर )णवृत्तस्यैकसप्तत्युत्तरैकादशशततम ११७१ भेदं लक्ष्मीधरनामक वृत्त लक्षयति, हार गंधेति। हार गंधा—हारगंधौ गुरुलघू इति यावत् तहा कण्ण गंधा—तथा कर्णगन्धौ कर्णो गुरुद्वयात्मको गणः गंधो लघुस्ता-वित्यर्थः उणो—पुनः कण्ण सद्दा——कर्णशब्दौ गुरुद्वयात्मकगणलघू इति यावत् तहा तो—तथा तो तलघुस्तगण इत्यर्थः गुरुआ गणो—गुरुकगणः। हए रूएण—एवं रूपेण एतावदुपादानविधिनेति यावत् चारि जोहा गणा—चत्वारो योद्धृगणा रगणा इति यावत् यत्र प्रतिचरण पततीति शेषः, सो—सः लच्छीहरो—लक्ष्मीधरः मुणो—ज्ञातव्यः, इति णाअराआ—नागराजा पिंगल इति यावत् भणो—भणति॥ रगणचतुष्टयरचितचरण लक्ष्मीधरनामक वृत्तं ज्ञातव्यमिति फलितार्थः। अत्र रगण-चतुष्टयोट्टवनिकाप्रकारः पूर्वार्द्धेणोक्तमिति ध्येयम्।

१२८. लक्ष्मीधरमुदाहति, भंजिआ इति। मालवा—मालवदेशाधिपतयो राजानः भंजिआ—भंजिता भग्ना इति यावत् कण्णला—कर्णाटाः कर्णाटदेशीया राजान इति यावत् गंजिआ—गंजिता मारिता इति यावत्, लुंठिआ कुंजरा—लुंठितकुञ्जराः लुण्ठिताः बलाद्गृहीताः कुञ्जरा हस्तिनो येषां तादृशा इत्यर्थः गुज्जरा—गुर्ज्जरदेशीया राजानो जिण्णिआ—जिताः। बंगला—वंगाः भगला—पलायिताः, ओड्डिआ—ओड्रदेशीया राजानः मोड्डिआ—मोटिताः मेच्छआ—म्लेच्छाः कंपिआ—कंपिताः, कित्तिआ—कीर्त्तयः थप्पिआ—स्थापिताः॥ स रामो जयतीति प्रबंधेन युज्यते। लक्ष्मीधरो निवृत्तः॥

१२६. अथ द्वादशाक्षरचरणस्य वृत्तस्य पंच( षट् )पचाशदधिकसप्तदशशततमं ( १७५६ ) भेदं तोटकनामकं वृत्तं लक्षयति सगणेति। जही—यत्र चारि चत्वारि सगणा गुर्वंतगणाः धुव—ध्रुव पलति—पतति, सोलह मत्त विराम कही—षोड-

शमात्राकथितविराम षोडशमात्रासु कथितो विरामो विच्छेदो यस्मिंस्तदित्यर्थः। तह—तथा रइअ—रचित पिंगलेनेति यावत् छद वरं—छदःश्रेष्ठं इअ—एतत् तोटअ—तोटक भण—कथय इति पिंगलिअ—पिंगलीयैः पिंगलप्रयुक्तच्छंदःशास्त्राभिज्ञैरिति यावत्, उचिअं—उचित भणिअं—भणित ॥

१३०. तोटकमुदाहरति, चलेति। हे बब्बर—बर्बर गुज्जर—गुर्जराधीश तुअ—तव जीअ(व)ण—जीवन अज्जु—अद्य णही—नास्ति, अतः कुञ्जर—कुंजरान् मही—महीं तेज्जि—त्यक्त्वा चल—गच्छ त्वमिति शेषः। कथ जीवन नास्तीत्यत आह जईति। कण्ण णरेंद वरा—कर्णनरेंद्रवरः जइ—यदि कुप्पिअ—कुपितस्तदेति शेषः रण—रणे को हर—को हरः हरि को—हरिः कः वज्जहरा—वज्रधरः ॥ गुर्जरजयार्थं प्रयातकर्णनरपतिप्रतियुद्धाय समुपस्थितं गुर्जरदेशाधिपतिं प्रति कस्यचिद्वंदिजनस्यैतद्वचनम्। तोटकं निवृत्तम्।

१३१. अथ द्वादशाक्षरचरणस्य वृत्तस्य एकचत्वारिंशोत्तरत्रयोविंशतिशततमं २३४१ भेद सारंगरूपकनामक वृत्तं लक्षयति, जा चारीति। यत् चारि तक्कार संभेअ उक्किट्ठ—चतुस्तकारसंभेदोत्कृष्टं चतुस्तकाराणा चतुर्णामतलघुतगणाना यः संभेदः सवाधस्तेनोत्कृष्टं सुश्राव्यत्वादुत्कर्षयुक्तमित्यर्थः, यत् पाएहि—पादेषु तीअ वीसाम सजुत्त—तृतीयविश्रामसयुक्तं तत्र तृतीयाक्षरे यतिस्तादृशमित्यर्थः अण्णोण्ण भाएहि—अन्योन्यभागैः परस्परविच्छेदैरिति यावत् यस्येति शेषः कति—काति न ज्ञायते, सो—तत् पिंगले दिठ्ठ—पिंगले दृष्ट सारंगरुअक्क—सारंगरूपक तत्सारंगरूपकनामकं वृत्तमित्यर्थः। अत्र चतुर्थश्चरणः पद्यपूरणार्थमेवेति मन्तव्यम्।

१३२. सारंगरूपकमुदाहरति, रे गोडेति। रे गोड—रे गोडदेशाधीश ते हत्थि वूहाइ—हस्तिव्यूहानि( ? ) थक्कंति—श्राम्यंति, अत इति शेषः पाइक्क वूहाइ—पदातिव्यूहानि पल्लट्टि—परावृत्य जुम्भ्भतु—युध्यंतु( ताम् ) नाम, तथापीति शेषः कासीस राआ सराशार अग्गे—काशीश्वरराजशराऽऽसाराग्रे दिवोदासत्राणधाराग्रे इति पाठश्च, ण—ननु निश्चयेन की हत्थि—किं हस्तिभिः की पत्ति—(किं) पत्तिभिः की वीर वग्गेण—किं वीरवर्गेण ॥

१३३. अथ द्वादशाक्षरचरणस्य वृत्तस्य षड्विंशत्युत्तरैकोनत्रिंशशततम २९२६ भेद मौक्तिक( दाम )नामक वृत्त लक्षयति, पओहरेति। यन्मध्ये ति तेरह मत्तह—त्रित्रयोदशमात्राभिः षोडशभिर्मात्राभिरिति यावत् उपलक्षिताः चारि—चत्वारः पओहर—पयोधरा मध्यगुरुकाः जगणा इति यावत् प्रसिद्धा भवंतीति शेषः, यत्र च अंत—अंते पादान्ते इत्यर्थः पुव्वहि—पूर्वं पादादावित्यर्थः हार—हारो गुरुः ण दिज्जे—न दीयते, जिहू सअ अग्गल छप्पण मत—द्विशता-

धिकषट्पंचाशन्मात्राक तत् मोत्तिअदाम—मौक्तिकदामनामक वृत्तमित्यर्थः ॥ ननु यत्र पयोधरचतुष्टय पततीत्युक्त्यैव पादाद्यतयोर्गुरुदानाप्रसक्तेः कथ ण पुव्वहीरयनेन तत्र तत्प्रतिषेधः साधु सगच्छत इति चेत्, यत्र एवं चत्वारो जगणाः पततीत्यत एव पूर्व्वम् अते वा हारो न दीयत इति पूर्वोक्तस्यैव विवरणमेतदित्याहुः। षट्पंचाशदुत्तरशतद्वयमात्राकथन षोडशचरणाभिप्रायेण, जगणमात्राज्ञापकं तद्विशेषणपदं पादपूरणार्थमेवेति मतव्यम् ॥

१३४. मौक्तिकदामोदाहरति। गरास—ग्रासं भोजनमिति यावत् तेज्जि—त्यक्त्वा कआ—कायः दुव्वरि—दुर्बलः भउ—जातः, खणे खणे ( ण )—क्षणे क्षणे अच्छ—स्वच्छः णिसास—निश्वासः रोदनकालीनश्वास इत्यर्थः जाणिअ—ज्ञायते। तार—तारेण कुहू रव—कोकिलारावेण दुरंतः दुष्टः मरणादिजनकः अतो यस्य तादृशो वसंतनामा ऋतुः, तस्मात् कि णिद्दअ काम—किं निर्दयः कामः कि णिद्दअ कन—किं निर्दयः कांतः ॥ एतादृशेऽपि समयेन आगतः सः प्रियो निर्दयः, प्राणेश्वरप्राणा मा ज्ञात्वा येऽतिदुःख प्रयच्छति स कामो वा निर्दय इति कस्याश्चित्प्रोषितपतिकायाः सखीं प्रति वचनमेतत्। मौक्तिकदाम निवृत्तम्।

१३५. अथ द्वादशाक्षरचरणस्य वृत्तस्यैकादशोत्तरपञ्चत्रिंशत्शततमं ३५११ भेदं मोदकनामकं वृत्त लक्षयति, तोलेति। तोलअ छंद—तोटकच्छदः बिरीअ—विपरीतं ठविज्जसु—स्थापयस्व, अतएव चारि गणा—चत्वारो गणाः भअणा—भगणा आदिगुरुकाः गणा इति यावत् सुप्रसिद्धउ—सुप्रसिद्धा यत्र प्रतिचरण पततीति शेषः, तस्य छंदह—छंदसः मोदअ—मोदकं नाम अभिधान करिज्जसु—कुरुष्व इति कित्तिहि लुद्धउ—कीर्तिलुब्धः पिंगलः जंपइ—जल्पति ॥ इदमत्र तत्त्वं, चतुर्भिर्गुर्वंतगणैस्तोटकच्छदो भवति तद्विपरीतस्थापनेनादिगुरुकैश्चतुर्भिर्गणैर्मोदक भवति। वक्रोक्तिस्तु पद्यपूरणयेति मंतव्यम्।

१३६. मोदकमुदाहरति। गज्जेति। मेह—मेघः गज्जउ—गर्ज्जंतु, कि—किंवा अंबर—अंबरम् आकाशमिति यावत् सावर—श्यामल भवत्विति शेषः णीव—नीपः कदम्बः फुल्लउ—विकसतु, कि—किंवा भम्मर—भ्रमराः बुल्लउ—गुंजतु अम्मह—अस्माकं पराहिण—पराधीनमन्यायत्तमिति यावत् एक्कउ—एकमेव जीवं किंवा पाउस—प्रावृट् लेउ—गृह्णातु ॥ अत्र लेउ इति एकारो ह्रस्वो बोध्यः। वर्षागमेऽप्यनागतं विदेशिनं पतिं ज्ञात्वा अतिकामार्तायाः कस्याश्चित्प्रोषितभर्तृकायाः काचित्प्रियसखीं प्रति वचनमेतत्। मोदकवृत्त निवृत्तम्।

१३७. अथ द्वादशाक्षरचरणस्य वृत्तस्यातिमं भेदं तरलनयनानामकं वृत्त लक्षयति, णगणेति। हे कमलमुखि णगण—प्रथम नगणः सर्वलघ्वात्मको गणः पुनः

नगणः स एव, एवंप्रकारेण चउ गण—चतुरः गणान् नगणचतुष्टयमित्यर्थः कइ—कृत्वा सव—सर्वान् द्वादशापि पादस्थान् वर्णान् लहु—लघून् कुरु, जवउ—यावंतः सव गुरु—सर्वगुरवो गुरुयुक्ता यावंतो द्वादशाक्षरभेदा इत्यर्थः तावत इति शेषः णिवरि—निराकृत्य भिन्नीकृत्येति यावत् तरलणअणि—तरलनयना एतन्नामक वृत्तमित्यर्थः कइ—कथय इति सुकइ—सुकविः फणि—फणी पिंगलः भण—भणति ॥ अत्र गुरुयुक्तयावद्भे(द)कथन पद्यपूरणार्थमेवेति मतव्यं नगणचतुष्टयरचितचरणा तरलनयनेति निकृष्टोर्थः ॥

१३८. तरलनयनामुदाहरति, कमलेति । कमल वअण—कमलवदनः तिणअ(ण)—त्रिनयनः गिरि वर सअण—गिरिवरशयनः तिसुलधर—त्रिशूलधरः । ससहर तिलअ—शशधरतिलकः गल गरल—कठस्थितविषः हर—हरः महादेवः मह—मह्यं अभिमत वर—समीहितवरं वितरउ—वितरतु ॥ तरलनयना निवृत्ता ॥

१३९. अथ द्वादशाक्षरचरणस्य वृत्तस्य चतुःषष्ट्युत्तरशतचतुष्टयाधिकसहस्रद्वया(सहस्रा)त्मक भेदं (१४६४) सुदरीनामक वृत्त लक्षयति, णगणेति । हे सुमुखि यत्र पूर्वं णगण चामर गधजुआ—नगणचामरगंधयुगानि नगणस्त्रिलघ्वात्मको गणः चामरम् एकोगुरुः गधजुआ—गधयुग लघुद्वयमिति यावत् तानीत्यर्थः ठवे—स्थाप्यते, ततः जइ—यदि चामरम् एको गुरुः सल्लजुआ—शल्ययुग शल्यो लघुस्तद्वयमित्यर्थः संभवे—सभवति । पअभ त)हि—पादान्ते एक्क—एकः रगग—मध्यलघुर्गणः लेक्खिआ—लिखितः सा पिंगलदर्शिता पिंगलेन उपदर्शितेति यावत् सुदरी सुदरीनामक तद्वृत्त पिंगलेनोपदिष्टमित्यर्थः ॥ तस्यैव ग्रथातरे द्रुतविलम्बिते(तमि)ति नाम, अतएव द्रुतविलम्बितमाह नभौ भराविति लक्षणमपि तत्रैव कृतमिति ॥

१४०. सुंदरीमुदाहरति । काचित्सखी कलहातरिता महामानवर्ती काचिन्नायिकामाह, बहईति । हे सुन्दरि सर्वावयवरमणीये माहव समवा—माधवो वसन्तस्तत्रोत्पन्न इत्यर्थः सीअला—शीतः दक्खिण मारुअ—दक्षिणमारुतः वहइ—वाति, कोइला—कोकिलः पचम कोमल—पचमं कोमल यथा स्यात्तथा गवइ—गायति । महु पाण बहू सरा—मधुपानबहुस्वरा मधु मकरंदस्तस्य पानेनातिगभीरस्वरा इत्यर्थः महुअरा—मधुकरा भ्रमराः भमइ—भ्रमति ॥ अतस्त्वमपि मान विहाय कातमभिसरेत्याशयः । सुमुखी (-सुदरी) निवृत्ता ।

१४१. अथ त्रयोदशाक्षरचरणस्य वृत्तस्य द्विनवत्युत्तरैकशतोत्तराष्टसहस्र ८१९२ भेदा भवति, तत्र द्वा(त्रयः) त्रिंशोत्तरषोडश(शत)तमं भेदं (१६३३)

मायानामक वृत्त लक्षयति, कण्णेति। जं—यत्र पूर्वं कण्णा दुण्णा—कर्णद्वय गुरुद्वयात्मकगणयुगमिति यावत्, ततः चामर—चामर गुरुस्ततश्च सल्ला जुअला—शल्ययुगल शल्यो लघुस्तद्द्वयमित्यर्थः, ततोऽपि बीहा दीहा—द्वौ दीर्घौ गुरुद्वयमिति यावत्, ततश्च गधअ जुग्गा—गधयुगं गधो लघुस्तद्द्वयमित्यर्थः, अन्ते लघुद्वयान्ते पादाते वा कता—कातौ चामर हारा—गुरुद्वयमित्यर्थः, एते गणा इति शेषः पअला—प्रकटिताः, त—ता सू( सु )हकाआ—शुभकाया बाईसा मत्ता—द्वाविंशतिमात्राका गुणजुना—गुणयुक्ता माआ—माया भणू—कथय॥ केचित्तु शुभकायाः शुद्धशरीराः गुणजुता—गुणयुक्ताः द्वाविंशतिर्मात्राश्च पतंतीति मात्राविशेषणतया पदद्वयं योजयति। मात्राकथन सुहकाआ गुणजुत्तेति च पदद्वयमत्र पादपूरणार्थमेवेति ध्येयम्॥

१४२. मायामुदाहरति। ए—एतत् शरीरा—शरीर अत्थीरा—अस्थिरं देखु—पश्य, घरु जाआ वित्ता पुत्ता सोअर मित्ता—गृहजायावित्तपुत्रसोदरमित्राणि एतत्सर्वं माया मिथ्याभूतमित्यर्थः। अतः हे बब्बर—बर्बर काहे लागी—किमर्थं मुज्झे—विमुह्य वेलावसि—विलम्बयसि जइ सुज्झे—यदि जानासि, तदा जुत्ती—युक्त्या कित्ती—कीर्तिं किज्जहि कुरु। अतिसंसारासक्तं कुकर्मिणं कंचित्प्रति कस्यचिन्मित्रस्योपदेशवाक्यमेतत्। माया निवृत्ता॥

१४३. अथ त्रयोदशाक्षरचरणस्य वृत्तस्य षट्पंचाशदुत्तरसप्तदशशततम भेदं (१७५६) तारकनामक वृत्त लक्षयति, टईति। यत्र पाअ—पादे आइ—आदौ—लहू जुअ—लघुद्वय ठइ—स्थापयित्वा गुरु सल्ल जुआ—गुरुशल्ययुगे करीजे—क्रियेते एको गुरुः लघुद्वयं च क्रियत इत्यर्थः, ततो भअणा जुअ—भगणो गुर्वादिर्गणस्तद्युगं दीजे—दीयते। पअ अंतह पाइ गुरु जुअ—पादांतःपातिगुरुयुगं किज्जे—क्रियते, सहि—हे सखि तस्य छंदह—छंदसः तारअ—तारकम्—इति णाम—अभिधान भणिज्जे—भण्यते॥ सगणचतुष्टयोत्तरगुरुरचितचरण तारकमिति फलितार्थः॥

१४४. तारकमुदाहरति, णवेति। चूअगाछे—चूतवृक्षेण णव—नवा मंजरि—मंजरिः लिज्जिअ—गृहीता, केसू( सु ) णअ वण—किंशुकनूतनवनं आछे सम्यक् यथा स्यात्तथा परिफुल्लिअ—परिपुष्पितं। जइ—यदि एत्थि—अत्र वसंतसमये इत्यर्थः कंता—कांतः दिगंतर—दिगंतर जाइहि—यास्यति, तदा किअ—किं वम्मह—मन्मथः णत्थि—नास्ति, कि—किंवा नास्ति वसतः॥ कांतं देशांतरजिगमिषु ज्ञात्वा विमनायमाना काचिन्नायिका (प्र) ति—यद्यस्मिन्नपि कान्तो गमिष्यति तदा तस्य निवारकः कामः वसंतो नास्ति किंतु विद्यत एवेति त्व मा विषीदेति गूढाभिप्रायायाः कस्याश्चित् सख्या वाक्यमेतत्। तारक निवृत्तम्।

१४५. अथ त्रयोदशाक्षरचरणवृत्तस्य द्व्यशीत्युत्तरषट्शताधिकचतुःसहस्रतमं ४६८२ भेदं कंदनामकं वृत्तं लक्षयति, धआ इति। यत्र पूर्वं धआ—ध्वजो लघ्वादिस्त्रिकल इति यावत् ततः तूर—तूर्यं गुर्वादिस्त्रिकल इति यावत् हारो—गुरुः उणो—पुनः हारेण—गुरुणा सह तूर—तूर्यं गुर्वादिस्त्रिकलः पुरःस्थित-गुरुर्गुर्वादिस्त्रिकल इति यावत् अ—पुनः एक्का तआरेण—एकतकारेण लब्ध तगणेनेति यावत् गुरु—गुरुः सद्द—शब्दो लघुः पुरःस्थिततगणो गुरुर्लघुश्चेति यावत् किज्जे—क्रियते, इदं च क्रियापदं यथायथं योज्यं। यत्र च सव्व पाएण—पादेन पादचतुष्टयेनेति यावत् चउ अग्गला—चतुरधिका असी—अशीतिः कला—मात्राः होई—भवति, तत् कईसा—कवीशेन णाएण—नागेन पिंगलेन जपिज्ज—जल्पितं कंदु—कंदः॥ तत्कंदनामकं वृत्तमित्यर्थः। अत्र मात्राकथनं पद्यपूरणार्थमिति ध्येयं। गुरु(लघू)त्तरयगणचतुष्टयेन कंद इति फलितार्थः।

१४७. कंदमुदाहरति, ण रे इति। रे कंस तो वंस कालाइ—त्वद्वंशकालः देअई पुत्त—देवकीपुत्रः एक्क—एकः अद्वितीय इति यावत् बाला—बालकः हो—भवामि इति मुद्दे—मा ण जाणेहि—न जानासि। इत्युक्त्वेति शेषः जणाणंद कंदेण—सकलजीवानंदहेतुना श्रीकृष्णेनेत्यर्थः तथा कंसो—कंसः गएहु—गृहीतः यथा णिआ णारि विंदेण—निजनारीवृन्देन हति—हतः दिट्ठ—दृष्टः। कंदो निवृत्तः।

१४८. अथ त्रयोदशाक्षरचरणस्य वृत्तस्यैकोनचत्वारिंशोत्तर(सप्त)सहस्रतमं ७०३९ भेदं पंकावलीनामकं वृत्तं लक्षयति, चामरेति। पढमेहि—प्रथमं चामर—चामरं गुरु ततः धुत्र—(ध्रुव) निश्चितमिति यावत् पापगणं—पंचकलस्याष्टमभेदं सर्वलघ्वात्मकमिति यावत् जुअ—युगं ठाअहि—स्थापय। इदं च क्रियापदं यथायथं योज्यं। पअप्पअ—पादे पादे प्रतिचरणमित्यर्थः यत्रेति शेषः सोलह—षोडश कलअ—कलाश्च जाणिअ—ज्ञायंते, त—ता पंकअआलिअ—पंकावली तत्पंकावलीनामकं वृत्तमित्यर्थः पिंगल—पिंगलः पभणइ—प्रभणति। अत्र मात्राकथनं पद्यपूरणार्थमिति मंतव्यं। भगण-नगण-लघूत्तरजगणद्वय-रचितचरणा पंकावलीति निष्कृष्टोऽर्थः॥

१४९. पंकावलीमुदाहरति, सो जणेति। सो—सः जण—जनः जणमेउ—जातः सजन्मेति यावत्, सः गुणमंतउ—गुणवान्, जे—यः हसंतउ—हसन् सन् पर उवआर—परोपकारं विरुभभइ—विरुणद्धि तासू—तस्य जणणि—जननी वंभभइ—वंध्येव किं न थक्कइ—तिष्ठति। व्यर्थमेव प्रसूयते इत्यर्थः॥ किंचित् स्वमित्रं प्रति कस्यचिदुपदेशवाक्यमेतत्। पंकावली निवृत्ता॥

१५०. अथ चतुर्दशाक्षरचरणस्य वृत्तस्य चतुरशीत्यधिकशतत्रयोत्तरषोडश-सहस्र भेदा भवति, तत्रैक( त्र त्रयः )त्रिंशोत्तरन( व )शताधिकाद्विसहस्रतम भेदं (२९३२) वसततिलकानामक वृत्त लक्षयति, कण्णविति। पढमे—प्रथमे स्थाने कण्णो—कर्णः गुरुद्वयात्मको गण इति यावत् अ—च पुनः बीए—द्वितीये स्थाने जअगो—जगणो मध्यगुरुगणः, अते—जगणाते तुरग—तुरगश्चतुर्मात्राकः सगण इति यावत्, ततश्च सगणो—पुनः सगण एवं गुर्वंत इति यावत्। क्वचिच्च दुअम्मि सतगो इति पाठस्तत्र दु(अ)म्मि सगणो—उगणद्वयमपि गुर्वंतगण-द्वयमिति यावदित्यर्थः कर्त्तव्यः, अवहट्टभाषाया पूर्वापरव्यत्यासे दोषाभावात् अ—च पुनः पाअ गणो—लघ्वादिर्गण इत्यर्थः जत्थ—यत्र पाए—पादे ठविज्ज—स्थाप्यत इति यथायथ योज्यताम्। फणिणा—पिंगलेन उत्ता—उक्ता उक्किट्ठा—उत्कृष्टा सु कइद दिठ्ठा—सुतरा कवींद्रदृष्टा सरसा—प्रेमाविष्टाः छेआ—विदग्धाः बसततिलआ—वसततिलका पठति ॥ तगणभगणगुरुद्वयोत्तरय(ज) गणद्वयरचितचरणा वसततिलकेति फलितार्थः।

१५१. वसततिलकामुदाहरति। (जे—) ये लोकाः तीअ—तस्याः तिक्ख चल चक्खु तिहाअ दिट्ठा—तीक्ष्णचलचक्षुस्त्रिभागदृष्टाः, ते काम चद महु पचम मारणिज्जा—कामचद्रमधुपचममारणीया जाता इति शेषः। जेसु—येषु उणो—पुनः तस्याः (स)अला वि दिट्ठी—सकलापि दृष्टिः णिवडिआ—निपतिता, ते तिल जलाजलि दाण जोग्गा—तिलजलाजलिदानयोग्याः चिठ्ठंति—तिष्ठंति। कर्पूरमजरीवर्णनपर विदूषक प्रति राज्ञो वाक्यमेतत्। वसततिलका निवृत्ता ॥

१५२. अथ चतुर्दशाक्षरचरणस्य वृत्तस्यैक(नवत्युत्तरैक)शताधिकाष्टसहस्रतमं ८१९१ भेद चक्रपदनामक वृत्त लक्षयति, सभणिअ इति। मुहो—मुखे प्रथममिति यावत् पलिअ—पतित चरणगण गुर्वादिभगणमित्यर्थः सभणिअ—सभण्य, पुणवि—पुनरपि दिअवर जुअलो—द्विजवरजुगल चतुर्लघ्वात्मकगणद्वयमिति यावत् सठविअ—सस्थाप्य। ज—यत्र पअ पअ—पादे पादे प्रतिचरणमिति यावत् करअल गण—करतलगणः गुर्वंतः सगण इति यावत् मुणिओ—ज्ञातः, तत् फणिवइ भणिओ—फणिपतिभणित चक्कपअ—चक्रपद प्रभण ॥

१५३. चक्रादमुदाहरति, खजणेति। अत्रावहट्टभाषाया पूर्वनिपातानियमात् उपमा शब्दस्य पूर्वनिपात कृत्वा योजनीय, तथाच खजनजु(यु)गलोपमनयनवरा खजनयुगलस्य उपमा ययोः तादृशे अपि नयने ताभ्या वरा रमणीत्येत्यर्थः, चारु कणअ लइ भुअजुअ सु(सु)समा—चारुकनकलताभुजयुगसुषमा चार्व्वी कनकलताया इव भुजयुगस्य सुषमा यस्यास्तादृशीत्यर्थः, फुल्ल कमल मुहि—

फुल्लकमलमुखी गअवर गमणी—गजवरगमना रमणी ललना कस्स सु (सु) किअ फल—कस्य सुकृतफलेन विधिना गढु—सृष्टा ॥ एतादृशी बाला कान्तिभाविता कस्य पुण्येन ब्रह्मणेय निर्मितेत्यर्थः ॥ चक्रपद निवृत्त ॥

१५४. अथ पचदशाक्षरचरणस्याष्टषष्ट्युत्तरसप्तशताधिकद्वात्रिंशत्सहस्रं ३२७६८ भेदा भवति, तत्र त्रय(चतु)श्चत्वारिंशोत्तरचतुर्दशसहस्रतम (१४०४४) भेद भ्रमरावलीनामक वृत्त लक्षयति। यत्र पसिद्ध—प्रसिद्धैः पच—पचभिः कर—करैः गुर्वंतसगणैरिति यावत विलद्ध वर—विलद्ध(ब्ध)वरमतिरमणीयमिति यावत् रअण—रचनं किअ—कृत, गुरु पंच—पच गुरवः दहा लहू—दश लघवः पसिद्ध—प्रसिद्धास्तत मणोहर—मनोहरं छंदवर—छन्दःश्रेष्ठ रअण—रत्न रत्नप्रायमिति यावत् रइअ—रचितं ठइअ—स्थापितं पिंगलेनेति भावः, परिसिअं—एतादृश भमरावलि छंद—भ्रमरावलीच्छन्दः पभणति—प्रभणति पडिता इति शेषः ॥ अत्र छन्दोविशेषण भिन्नतया लघुगुरुकथन च पद्यपूरणार्थमिति मतव्य, सगणपचकरचितचरणा भ्रमरावलीति फलितार्थः।

१५५. भ्रमरावलीमुदाहरति, तुअ देवेति। हे चन्द्रकलाभरण देव दुरित गणा हरणा—दुरितगणहरणौ तुअ—तव चरणौ जइ—यदि सरणा—शरणे पाबउ-प्राप्नोमि, तदो (दा) (लो)भमण—लोभे मनः भवण—भवन च तेज्जिअ—त्यक्त्वा परिपूजइ—परिपूजयामि, हे सोक तिणास मणा—त्रिभुवनतलवर्त्तियावज्जीव-शोकनिवारणमना इत्यर्थः, हे समणा—हे शमन मह—मह्य सूख—सुख त्वच्चरणाराधनोद्भूतनित्यानदमिति यावत् दे—देहि ॥ कस्यचिद्भक्तस्य महादेव-प्रार्थनावाक्यमेतत्। भ्रमरावली निवृत्ता।

१५६. अथ पचदशाक्षरचरणस्य वृत्तस्य प्रथम भेद सारंगिकानामक वृत्तं लक्षयति, कण्णेति। सत्ता कण्णा—सप्त कर्णाः गुरुद्वयात्मका गणा इति यावत् दिण्णा—दीयते दत्ता दत्वा वेत्यर्थः, अंते—सप्तकर्णांते एक्का हारा—एको हारः गुरुरित्यर्थः माणिआ—मान्यते, एवप्रकारेण यत्र पाए—पादे पण्णाराहा—पंचदश हार—गुरवः मत्ता—मात्राश्च तीसा—त्रिंशत् पत्ता—प्राप्ताः जाणीआ—ज्ञायंते, यत्र सूणी—श्रुत्वा मथा—मस्तक कपता—कपते श्लाघते इति भावः, तत् सारंगिक्का छंदा सारंगिकाच्छन्दः इति भोई राआ—भोगिराजः पिंगलः जपत—जल्पति, किं च एतत् छंदा—छंदः किज्जे—क्रियते कित्ती—कीर्तिः लिज्जे—गृह्यते ॥ अत्र मात्राकथन चतुर्थश्चरणश्च पद्यपूरणार्थमिति ध्येय, पचदशगुरु-रचितचरणा सारंगिकेति निष्कृष्टोर्थः ॥

१५७. सारंगिकामुदाहरति। मत्ता—उन्मत्ताः अप्पा अप्पी गव्वीआ—अहमहमिकया गर्विताः बद्धे कोहा—वर्द्धितक्रोधाः रोसारत्ता सव्वा गत्ता—रोषा-

रक्तसर्वगात्राः जोद्दा—योद्धारः ज्ञाताः, सल्ला—शल्यानि भल्लाश्च आयुधविशेषाः उठ्ठीआ—उत्थिताः। हत्थी जूहा—हस्तियूथानि सज्जा—सज्जितानि हूआ—जातानि, तेषां पाए—पादैः भूमी—भूमिः कपता—कंपिता, लेही—गृहाण दे(हि) छड्डो—त्यज ओड्डो—प्रतीक्षध्वमिति सव्वा सूरा—सर्वे शूराः जपंता—जल्पति यत्र सग्रामे इति शेषः यथायथ योजनीयः। साग्गित्ता निवृत्ता।

१५८ अथ पचदशाक्षरचरणस्य वृत्तस्यैक (स्य त्रयो) विंशत्युत्तरनवशताधिकदशसहस्रतम ( १०९२३ ) भेद चामरनामक वृत्त लक्षयति, चामरस्सेति। हे कामिनि ठाइ ठाइ—स्थाने स्थाने अतरेति यावत् णिम्मला—निर्मलाः अट्ठ हार—अष्टौ हारा गुरवः सत्त सा( र )—सप्त सारा लघवः, एवप्रकारेण दहाइ पच—दशपच पचदशेत्यर्थः अक्खरा—अक्षराणि तीणि मत्त अग्गला—त्रिमात्राधिकाः बीस मत्त—विंशतिर्मात्राश्च चामरस्स—चामरस्स चामराख्यवृत्तस्येति यावत् पादे पततीति शेषः, आइ अत—आद्यतयोः पादाद्यतयोरित्यर्थः हारो गुरुः सारः श्रेष्ठः मुणिज्जए—मन्यते, पादादौ अते च गुरुर्देय इति भावः, इति पिंगले भणिज्जए—पिंगलेन भण्यते ॥ अथमाशयः—प्रथम गुरुस्तदनतर लघुः पुनः गुरुः पुनस्तदनतर लघुरेवप्रकारेण पचदशा( क्षरा )णि कर्त्तव्यानि, तथा च रगण जगण रगण-जगण-रगण-रचितचरण चामरमिति फलितार्थः।

१५९. चामरमुदाहरति, झत्तीति। त खणा—त (त्) क्षणे वज्ज—वाद्यानि डिंडिमप्रभृतीनि गज्ज—गर्जति, हक्क—हक्का सिंहनादमिति यावत् दिज्ज—ददाति, चलतओ—चलति च, बीर पाअ—वीरपादैः भूतलतगा—भूतलातर्गतः णाअराअ—नागराजः शेषः कप—कपते जे जोह—हे योधाः झत्ति—झटिति सज्ज—सज्जिताः कृतसन्नाहा इत्यर्थः होह—भवत ॥ दैत्यसेनाजयाय प्रस्थितस्य शक्रस्य देवान् प्रति वाक्यमेतत्। चामरं निवृत्तम् ॥

१६०. अथ पचदशाक्षरचरणस्य ( वृत्तस्य ) पचदशोत्तरनवशताधिकैकादश ( पचदशोत्तरद्वादश) ( १२०१५ ) सहस्रतम भेद निशिपालनामक वृत्त लक्षयति, हारिति। हारु—हारः गुरुरित्यर्थः तिण्णि सरु—त्रयः शरा लघव इत्यर्थः हित्थि परि—अनया परिपाट्या तिग्गणा—त्रिगणान् धरु—स्थापय त्रीन् गुर्वादीन् पंचकलान् गणान् स्थापयेत्यर्थः, ( अं )ते गणत्रयाते रग्गणा—रगण मध्यलघु गणमित्यर्थः करु—कुरु, एव प्रकारेण यत्र पदे इति शेषः पच गुरु—पच गुरवः दुण्ण लहु—द्विगुणिता लघवः पच द्विगुणिता दश लघव इति भावः वीस लहु—विंशतिर्लघवः मात्रा इति यावत् आणआ—आनीताः आनीयते वा, हे चदमुहि सहि—हे चन्द्रमुखि सखि एत्थ—एतत् णिसिपालआ—निशिपालक छदः इति कव्ववर—काव्यवरः काव्ये लोकोत्तरवर्णनानिपुणे कविकर्मणि वरः श्रेष्ठ इत्यर्थः

सप्प—सर्पः पिंगलः भण—भणति ॥ अत्र पृथक्तया गुरुलघुकथनं मात्राकथनं च पद्यपूरणाय । भगण जगण-सगण-नगण-रगण-रचितचरणं निशिपालनामकं वृत्त-मिति फलितार्थं इति ध्येय ।

१६१. निशिपालमुदाहरति, जुभभेति । जुभभ—युद्धे भूमि—भूमौ पड—पतिताः पुणु—पुनः उठ्ठि—उत्थाय लग्गिआ—लग्नाः युद्धायेति भावः, सग्ग मण—स्वर्गमनसः भट—भटाः खग्ग हण—खड्गेन ह(घ्न)ति, तथापि कोइ णइ—कोऽपि नहि भग्गिआ—भग्नः । तिक्ख—तीक्ष्णः बीस—विंशतिः सर—शराः कण्ण—कर्णेन गुण अप्पिआ—गुणार्पिताः प्रत्यचा(पतजिका) युक्ता इति यावत् कर—कृताः तह—तथा पत्थ—पार्थेन दह—दश बाणान् इति शेषः जोलि—योजयित्वा चाउ सह—चापेन सह कप्पिआ—कत्तिताः, कर्णबाणा इति भावः ॥ निशिपालो निवृत्तः ॥

१६२. अथ पञ्चदशाक्षरचरणस्य (अष्टा)विंशत्युत्तरषट्शताधिकैकादश-सहस्रतम (११६२८) भेद मनोहंसनामकं वृत्तं लक्षयति, जहीति । जहि आइ हत्थ—यत्र आदौ हस्तः गुर्वंतः सगण इत्यर्थः णरिंद बिण्णवि—नरेन्द्रद्वयमपि मध्यगुरुजगणद्वयमपीत्यर्थः दिज्जिए—क्रियते । अतहि—अते लघुद्वयाते इत्यर्थः गुरु गाइ—गुरुमुच्चार्य गध अ हार—गधः लघुश्च पुनः हारो गुरु थप्पिआ—स्थापितः, तत् पिंगल जपिआ—पिंगलजल्पित पसिद्ध—प्रसिद्धं मणहंस छंद—मनोहंस (च्छन्दः) ॥

१६३ मनोहंसमुदाहरति, जहीति । जहि—यत्र मंजुला—(मजुला)नि केसु असोअ-चपअ किंशुकाशोकचंपकानि फुल्ल—पुष्पितानि, भम्मरा—भ्रमराः सहकारकेशरगधलुब्धा जाता इति शेषः । माणइ भंजणा—मानस्य भंजनः अनरव दक्ख—दक्षः मानिनीमानभंजने इति शेषः दक्खिण बाउ—दक्षिणवातः वहइ—वहति, सः लोअ लोअण रंजणा—लोकलोचनरंजनो महुमा(स)—मधुमासः वसंतसंबंधी मास इत्यर्थः आविअ—आगतः ॥ मनोहंसो निवृत्तः ॥

१६४. अथ पञ्चदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरषट्शताधिकचतुःसहस्रतमं (४६७२) भेदं मालिनीनाम वृत्तं लक्षयति, पढमेति । यत् पढम—प्रथम रस सहित्त—रससहित रसाभ्या सहितमित्यर्थः, 'भाजा रस लाडवअ णारीअइ कुल भामिणिअं । तिलहु गणहस कइअरो इअ णामं पिंगलो भणइ ।" इति पूर्वं रसपदस्य त्रिलघुनामसूपात्तत्वाद्रसशब्दस्त्रिलघुकगणवाची, बीअ ठाणे—द्वितीयस्थाने चरमे (चमर) तिअ णिबद्धं—चमरत्रयनिबद्धं, चमरो गुरुत्रयेण मगणेनेति यावत् निबद्ध यत्र चेति शेषः, अंत—अंते मगणाते इत्यर्थः सर—शरः लघुः गुरुजुअ—गुरुयुग गध—गधा लघुः कण्णा—कर्णः द्विगुरुको गणः णिबद्ध—निबद्धः तत्

चित्त मभ्भे णिहित्तं—चित्तमध्ये निहित पसिद्धं—प्रसिद्धं मालिणी णाम वुत्त—मालिनीनाम वृत्त ज्ञातव्यमिति शेषः, इति सरस कव्वो—सरसकाव्यः सरसं काव्यं यस्य स तादृशः पिंगल इत्यर्थः भणइ—भणति ॥

१६५. मालिनीमुदाहरति, बहईति। हे हञ्जे—चेटिके मलअ बाआ—मलयवातः बहइ—( वह)ति, हंत इति खेदे, काआ—कायः कपत—कंपते, कोइलालाव बधा—कोकिलालापबन्धः सवण रंधा—श्रवणरंध्रं हणइ(—ह)ति। भिंग झंकार भारा—भृगझंकारसमूहः दह दिहासु—दशदिक्षु सुणिअ—श्रूयते, चड चडाल मारा—चडः चंडालमारः चडो महाक्रोधी चडालइव चडालस्तद्वन्निष्ठुरः मारः कामः हणिअ—हत मल्लक्खण जन हणइ—हति ॥ मलयवातादिभिर्हता मा यदय कामो हति कोऽयमस्य पुरुषार्थः, मत्प्रिय हत्वा मद्वश यदि नयति तदैन परमपुरुषार्थिन मन्ये इति गूढाभिप्रायायाः कस्याश्चिद्वाक्यमेतत्। मालिनी निवृत्ता।

१६६. अथ पचदशाक्षरचरणस्य वृत्तस्य चतुरशीत्युत्तरद्वि(त्रि)शताधिकषोडशसहस्रतम ( १६३८४ ) भेदं सरभनामक वृत्त लक्षयति, भणिअ इति। यत्रादौ सर लह सहिओ—सरलघुसहित सर—सरः एकलघ्वात्मको गणः अथच लघुस्ताभ्या युक्तमित्यर्थं सू( सु ) पिअ गण सुप्रियगण सुप्रियो द्विलघ्वात्मको गणस्तमित्यर्थः भणिअ—भणित्वा, दिअवर जुअ ( करअ )ल—द्विजवरयुगकरतलौ द्विजवरश्चतुर्लघ्वात्मको गणस्तद्युग करतलो गुर्वन्तसगणस्तमित्यर्थः लहिओ—लब्धौ, एवप्रकारेणेति शेषः जह—यत्र चउ चउकल गण—चत्वारश्चतुःकला गणाः पअ पअ—पादे पादे प्रतिपादमिति यावत् मुणिओ—ज्ञाताः हे सुपिअ—सुप्रिय शिष्य तत् फणिवइ भणिओ—फणिपतिभणित सरभ—सरभ कह—कथय सरभनामक तद्वृत्तमित्यर्थः ॥ अत्र पुनश्चतुष्कल-चतुष्टयकथन पद्यपूरणार्थमेव, नगणचतुष्टयोत्तरसगणरचितचरण सरभनामक वृत्तमिति फलितार्थं इति ध्येयम् ॥

१६७. सरभमुदाहरति, तरलेति। तरल कमलदल सरि जुअणअणा—तरलकमलदलसदृशनयनयुगा, सरअ समअ ससि सू(सु)सरिसवअणा—शरत्समयशशिसुसदृशवदना मअ गअ गल करिवर सअलसगमणी—मदकलकरिवरसालसगमना एतादृशी रमणी कमण सू(सु) किअ फल—केन सुकृतफलेन विहि—विधिना स्रष्ट्रेति यावत् गढु—निर्मिता। सरभो निवृत्तः।

१६८. अथ षोडशाक्षरणस्य वृत्तस्य षट्त्रिशदुत्तरपंचशताधिकपञ्चषष्टिसहस्रं (६५५३६) भेदा भवति, तत्र षट्चत्वारिंशोत्तरा(ष्टशता) धिकैकविंशतिसहस्रतम (२१८३६ ) भेदं नाराचनामकं वृत्त लक्षयति, णरिंदेति। जत्थ—यत्र

सव्वलो— सबलः णरिंद—नरेन्द्रः मध्यगुरुर्जगण इति यावत् सुपण्ण चक्क— सुपर्णचक्रम् अन्त--अन्ते पादान्ते चारुः सुंदरः सारः पादपूरकत्वात् श्रेष्ठ इति हार—हारः गुरुः वट्टए—वर्त्तत, यत्र च पश्रा—पादे चउवीसए—चतुर्विंशतिः मात्रा इति शेषः, मध्यलघुरगणश्चेति यावत् दीसए—दृश्यते पंचमे ठाम—पंचमे स्थाने पइक्क—पदातिः मध्यगुरुर्जगण इति यावत् दृश्यते इति पूर्वेणान्वयः, जस्स—यस्य अट्ठए—अष्टौ गध--गधा लघव इति यावत् वक—वक्रा गुरवश्चेत्यर्थः पलत—पतति, पसिद्ध—प्रसिद्धः ए--एषः णराउ--नाराचः जऋ—जल्पत, इहाप्यत्र तत्र पचमस्थाने पदातिर्दृश्यत इत्युक्त्या तृतीयचतुर्थस्थाने पुनरपि जगणरगणावेव देयाविति लभ्यते, अन्यथा प्रथमद्वितीयस्थाने जगणरगणयोः पचमस्थाने पदातेरेवत्रचनात्स्योक्तत्वात् तृतीयचतुर्थस्थाने को गणो देय इत्याकाङ्क्षाया अनिवृत्त्यापत्तिः, तथाच जगण-रगण-जगण-रगण-जगण-गुरुरचितचरणः नाराच इति फलितार्थः। यद्यपि अष्टोत्तर-(ष्टाक्षर) प्रस्तारे पमाणि इत्यनेन प्रागेवैतल्लक्षित, तथापि प्रकरणानुरोधात्तस्यैव पुनरनुवादः कृत इत्यसमत्तातचरणोपदेशसरणिः। अत्र मात्राकथन पृथक्त(या) गुरुलघुकथन च पद्यपूरणार्थमिति ध्येयम् ॥

१६९. नाराचमुदाहरति, चलतेति। किवाण बाण सल्ल भल्ल चाव चक्क मुग्गरा—कृपाणबाणशल्यभल्लचापचक्रमुद्गरैः रण कम्म अग्गरा—रणकर्मण्यग्राः दक्षा इति यावत् मत्त कोह—क्रोधमत्ताः पहारे बार धीर—प्रहारवारणधीराः शत्रुकृतशस्त्रप्रहाररक्षणे कृतधैर्या इति यावत् वीर वग्ग मज्झ—वीरवर्गमध्ये पंडिआ—पंडिताः कृतशास्त्रविद्याध्ययना इत्यर्थः पअट्ठ ओट्ठ कत दत--प्रदष्टौष्ठकातदताः प्रदष्ट ओष्ठो यैस्तादृशाः कांताः दता येषा ते तादृशा इत्यर्थः जोह योद्धारः चरति, तेन योधचलनेन सेण—सेना मंडिआ—मडिता ॥ नाराचो निवृत्तः ॥

१७०—अथ षोडशाक्षरचरणवृत्तस्य सप्ताशीत्युत्तरसप्तशताधिकसप्तविंशति २७७८७ (अष्टाविंशति २८०८७) सहस्रतम भेद नीलनामकं वृत्त लक्षयति, णीलेति। हे रमणि प्रिये जहि—यत्र येषा वा अत—अते हार--हारो गुरुरिति यावत् ठिआ--स्थितः मुणिज्जइ—ज्ञायते एरिसही—एतादृशैः पचउ भगण—पचभगणैरादिगुरुकैर्गणैरिति यावत् पाउ(अ) पआसिअ—पादे प्रकाशित प्रकाशि(त)पाद वा, अवहट्टभाषाया पूर्वनिपातानियमात् बाइसही—द्वाविंशत्या मत्त—मात्राभिः उपलक्षित णीलसरूअ—नीलस्वरूप नीलनामकस्य छंदसः स्वरूपमिति यावत् विआणहु--विजायताम्, अत्र च बावण अग्गल—द्विपचाशदधिकानि तिण्णि सआ—त्रीणि शतानि मत्त—मात्राः धुअ—ध्रुव निश्चितमित्यर्थः मुणी--ज्ञायतां। इद च चतुः(छद,करणाभिप्रायेणेति बोध्यं ॥

१७१. नीलमुदाहरति, सज्जिअ इति। विअट्ठिअ कोह—विवर्द्धितक्रोधाः धणू—धनूंषि चलाउ—चालयतः धनुर्भ्यो बाणान् क्षिपत इति भावः जोह—योधाः सज्जिताः कृतसन्नाहाः जाताः, पुरंत तणू—फुरत्तनुः सण्णाह—रणनाथः सेनापतिरित्यर्थः पक्खर वाह—कवचिताश्वेन चलितः, करे पाणौ कुतान् पाशान् धरि—धृत्वा सुखग्गकरा—सत्सरुकराः पत्ति—पत्तयः चलत—चलिताः, एवक्रमेण कण्ण णरेंद—कर्णनरेन्द्रे सज्जितवृन्दे सति धरा पृथ्वी चलत—चलिता। नीलो निवृत्तः ॥

१७२. अथषोडशाक्षरचरणस्य वृत्तस्यैकनवत्युत्तरषट्शताधिकत्रिचत्वारिंशत्सहस्रतम ४३६९१ भेदं चचलानामकं वृत्त लक्षयति, दिज्जिए—दीयते तो—ततः एक्क—एकः पओहराइ—पयोधरः मध्यगुरुर्जगण इति यावत् दीयते इत्यनेन पूर्वेणान्वयः, हिण्णि रूअ—अनेन रूपेण मणोहराइ—मनोहराणि सव्वलो—सबलानि पंच चक्क—चक्राणि गणा इत्यर्थः क्रियतइति शेषः। अत्र चक्रशब्दो गणवाची, तथा च रगण-जगण-रगणाः अनेन रूपेण पंचगणाः कर्त्तव्याः इत्यर्थः। अत—अते पदाते गणपचकाते वा वधु—वधुः निर्वाहकत्वात् गधः लघुरिति यावत् दिज्ज—दीयते, यत्र च सोलहाइ अक्खराइ—षोडश अक्षराणि पादे पततीति शेषः, फणिंद—फणींद्रेण पिंगलेनेति यावत् विणिम्मिआ—विनिर्मिता बल्लहाइ—वल्लभा पिंगलस्येति भावः, एउ—एषा चचला—तच्चचलानामक वृत्तमित्यर्थः ॥

१७३. चचलामुदाहरति। कण पत्थ—कर्णपार्थौ राधेयफाल्गुनाविति यावत् ढुक्कु—युद्धार्थं मिलितौ, बाण सहएण—बाणसंघेन सूर—सूर्यः लुक्कु—निलीनः, जासु—यस्य घाउ—घातः प्रहारनिपातजात इति शेषः तासु तस्य अधकारजालप्रविष्ट इव जात इति भावः, एत्थ—एतस्मिन्नवसरे इत्यर्थः कण धूरि—वर्ण पूरयित्वा आकर्णपर्यन्तमाकृष्येति यावत् पत्थ—पार्थेन छड्डुएण—मुक्तान् सट्ठि बाण—षष्टिबाणान् पेक्खि—प्रेक्ष्य कित्ति धण्ण—कीर्तिधनेन कण्ण—कर्णेन सव्व बाण—सर्वे बाणाः कट्टिएण—वर्त्तिताः ॥ चचला निवृत्ता ॥

१७४. अथ षोडशाक्षरचरणवृत्तस्य प्रथमं भेदं ब्रह्मरूपकनाम वृत्तं लक्षयति, जो लोआणमिति। जो—यत् लोआणं—लोकाना विबुठ्ठे—विश्रोष्ठे विज्जुट्ट—विद्युत्स्थाने विद्युत्सायत्र विद्युत्पदेन दता लक्ष्यते, तथाच दतस्थाने) इत्यर्थः, णास ठ्ठाणे—नासिकास्थाने वट्टे—वर्त्तते, यच्च वुत्तो—वृत्त छदु गाअतो—छन्दोगायद्भिः सव्वे—सर्वैः समाणीओ—समानित, सो—तत् कतो—कात हस ठ्ठाणो—हसस्थानं हसस्येव स्थानं स्थितिर्गतिर्यस्य तत्तादृशमित्यर्थः बह्माण रूपक छदो—( ब्राह्मरुपकं ) छंदः वण्णठ्ठे—वर्णाष्टकेन गुरुद्वयात्मकगणाष्टकेन

सुज्जाणो णाओ—सुज्ञानो नागः पिंगलः उट्ठावे—उत्थापयति, एसो—तत् छंदो—छंदः लोआण—लोकाना निकटे मयेति शेषः बक्खाणीओ—व्याख्यातम् ॥ अत्र षोडशगुरुरचितचरणं ब्रह्मरूपकनामकं वृत्तमिति फलितार्थः ॥

१७५. ब्रह्मरूपकमुदाहरति, उम्मत्तेति । उट्ठे कोहा—उत्थितक्रोधाः उम्मत्ता-उन्मत्ताः अप्पा अप्पी—आत्मानमात्मानं परस्परमित्यर्थः मेणक्का रंभा णाह—मेनकारंभानाथं दंभा—दंभात् बुज्झंता—बुध्यमानाः धावंता सल्ला छिन्ने (ण्णे) कंठा—धावन्तः शल्यच्छिन्नकंठाः मत्था पिट्ठी पेल्ता—मस्तकानि पृष्ठे पातयन्तः ओत्था ओत्थी—उत्थायोत्थाय जुज्झंता—युध्यमानाः ण सग्गा मग्गा जाए—ननु निश्चयेनेत्यर्थः स्वर्गमार्गं गच्छंतः लुद्धा—लुब्धाः मेनकादिप्राप्त्यर्थमिति भावः जोहा—योद्धारः अग्गा—अग्रे उद्धा ऊर्द्धवं हेरंता—अन्विष्यति मेनकादिसुखमित्यर्थः ॥

१७६. अथ सप्तदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरैकत्रिंशत्सहस्रोत्तरैकलक्षं १३१०७२ भेदा भवति, तत्र पञ्चाशदधिकसप्तशताधिकषट् (अष्ट) त्रिंशत्सहस्रतम (३८७५०) भेदं पृथ्वीनामकं वृत्तं लक्षयति, पओहरेति । यत्र मुह—मुखे आदाविति यावत् पओहर—पयोधरः मध्यगुरुर्जगण इति यावत् ठिआ—स्थितः, तहअ—तथाच एक्क—एकः हत्थ—हस्तो गुर्वन्तः सगणइत्यर्थः दिआ—दत्तः, पुणोवि—पुनरपि तह सठिअ—तथा सस्थितौ पुनरपि ज(ग)ण सगणौ कर्त्तव्यावित्यर्थः, तहअ—तथाच गंध—गधः लघुः सज्जा किआ—सज्जीकृतः । उणो—पुनः वलआ जुआ विमल सद्द हारा—वलययुगविमलशब्दहाराः वलयो गुरुस्तद्द्वयं शब्दो लघुः हारो गुरुरेते इत्यर्थः पलति—पतति, चउग्गलआ—चतुरग्राश्च वीसआ—विंशतिर्मात्रा इति शेषः पततीति पूर्वेणान्वयः, तत् पुहवि णाम छंदो—पृथ्वीनामछंदः मुणो—ज्ञायताम् । अत्र मात्राकथनं पादपूरणार्थमेव, जगण-सगण-सगण यगण लघुगुरुरचितं पृथ्वीच्छंद इति निष्कृष्टोर्थः ।

१७७. पृथ्वीमुदाहरति, झणझ्झणिअ इति । झणझ्झणिअणेउर—(झण) झणेतनूपुरं झणझणेति रवं कुर्वन्नूपुराख्यं भूषणं यस्य तत्तादृशमित्यर्थः, रणरणंत कांची गुण—अतिगभीरशब्दायमानः कांचीगुणो यस्य तदित्यर्थः, सहास मुह पंकअ—सहासं मुखमेव पंकजं यस्य तत्तादृग्विधमित्यर्थः, अगुरु धूम धूपुज्जल—अगुरुधूपधूपोज्ज्वल । जलंत मणि दीवअं—ज्वलन्मणिदीपकं ज्वलद्देदीप्यमानभूषणमणिरेव दीपको यत्र तादृशमित्यर्थः, मअण केलि लीलासर—मदनकेलिलीलासरः णिसामुह मणोहरं—सन्ध्याप्रादुर्भावातिरमणीयमित्यर्थः, जुअइ मंदिरं—तरुणीलक्षण मंदिरं राजते शोभते । पृथ्वी निवृत्ता ॥

१८०—अथाष्टदशाक्षरचरणस्य वृत्तस्य चतुश्चत्वारिंशोत्तरैकशताधिकद्विषष्टि-सहस्रोत्तरलक्षद्वयं २६२१४४ भेदा भवन्ति, तत्र द्वि( त्रि ) सतत्युत्तरषट्शताधिकद्वादशसहस्रतमं ( १२६७३ ) भेदं मजीरनामकं वृत्त लक्षयति, कुतीपुत्तेति। यत्र मथा—मस्तके प्रथममिति यावत् तिण्णा—त्रीन् कुतीपुत्रान् गुरुद्वयात्मकान् गणानिति यावत् दिण्णउ—दत्वा एक्का—एकः पाए—पादः गुर्वादिर्भगणमि(इ) त्यर्थः सठवि—सस्थाप्यते, ततश्च एक्का हारा—एकोहारः गुरुः ककण दुज्जे—कवणद्वययं गुरुद्वमिति यावत्, अवहट्टभाषाया पूर्वव्यत्यासदोषाभावात् दुज्जे इत्यस्य व्यत्यासे अपि न दोषः, गधा—गंधस्य लघोरित्यर्थः जुगगाए—जुगलं सठवि—सस्थाप्यते। पाआ अन्ते(—पादाते) भव्वा कारउ—भव्याकाराः चारी हारा—चत्वारो हारा गुरवः सज्जीआए—सज्जिताः, ए—एतत् मजीरा—मजीर-नामक वृत्तमिति यावत्, इति सुद्धकाअउ—सुद्धकायः शुद्धो निष्कलकः कायो यस्य स तादृश इत्यर्थः सप्पा राआ— सर्पराजः पिंगलः जंप—जल्पति ॥

१८१. मजीरमुदाहरति, (णीला कारउ)—नीलाकारा मेहा—मेघाः गज्जे-गर्जति उच्चा रावा—उच्चस्वराः मोरउ—मयूराः सद्दे—शब्दायन्ते, ठामा ठामा—स्थाने स्थाने पिंगा देहउ—पिंगदेहा पीतवर्णेति यावत् विज्जू—विद्युत् रेहइ—राजते हाराश्च किज्जे—क्रियते मेघैरिति भावः। फुल्ला णीवा—पुष्पितान् नीपान् कदंबपुष्पाणि भम्मरु—भ्रमराः पीवे—पिबति, दक्खा—दक्षः मानिनीमान-भजने इति भावः मारुअ—मारुतः वीअताए—वीजयति, हहो हजे—चेटिके काहा किज्जउ—किं क्रियता किं विधीयतामिति यावत्, कीलताए—क्रीडती पाउम—प्रावृट् आओ—आगता ॥ मान त्यक्त्वा कातमुपगच्छेति चेटीमुखा-न्निष्कासयितुं कस्याश्चिन्मानिन्याः प्रावृडागमनात् किं विधीयतामिति चेटीं प्रति वाक्य। मजीरो निवृत्तः ॥

१८२. अथाष्टादशाक्षरणस्य वृत्तस्यैक(स्य) पचाशदुत्तरशतत्रयमा (चतु)शता-धिकसप्तत्रिंशत्सहस्रतम भेद (३७४५०) क्रीडाचक्रनामक वृत्त लक्षयति, ज इदा-सणेति। ज इंदासणा—यत्र इद्रासन लघ्वादिर्यगण इति यावत् तदग्रे एवकारः पूरणीयस्तथा—चेंद्रासनमेवेत्यर्थः, एक्क—एकः नान्यगणमिलित इति यावत् गणा—गणः पाएहि पाए—पादे पादे सु( सु ) हावेइ—शोभते यत्र पादे यगणा-तिरिक्तो गणः न पततीत्यर्थः, सुदडा—सु शोभना दडा लघवो ज( य )गणा-दिभूता इति भावः येषु तादृशा इत्यर्थः दहा अट्ठ—अष्टादश वण्णा—वर्णा यत्र सुठाए—सुस्थाने णिबद्धाइ—निबद्धाः सोहे—शोभते, जहा—यत्र दहा तिण्णि गुणा—दश त्रिगुणिताः त्रिंशदिति यावत् मत्ता—मात्राः सुपाए—सुपादे सठआ—संस्थिताः होंति—भवति, तत् किलाचक्क छदा—

क्रीडाचक्र छंदः जाए—जायते इति फणिंदा—फणींद्रः पिंगलः भणंता—भणति ॥ यगणपड्विंचिनचरणं क्रीडाचक्रमिति फलितार्थः।

१८३. क्रीडाचक्रमुदाहरति, जहा इति। जहा—यत्र कन्धा—कन्न्धान् खाए—भक्षयित्वा भूत वेताल—भूता वेतालाः णच्चत गावन—नृत्यति गायति, सिआ फार फेक्कार हक्का रवंता—शिवाः स्फारफेत्कारहक्का रुवत्यः कण रधा फुरे—कर्णरंध्र स्फुटति। कआ टुट्ट—कायस्तुटति, मथा—मस्तक फुट्टेइ—स्फुटति, कवंधा णचंता हसंता—(कबंध) नृत्यति हसंति, तहा—तत्र सगाम मज्जे—सग्राममध्ये वीर—हम्मीरः तुलंता त्वरितः सन् जुझता—युध्यते॥ क्रीडाचक्र निवृत्त॥

१८४. अथाष्टादशाक्षरचरणस्य वृत्तस्यैकोनविंशत्युत्तरत्रिनवतिसहस्र (६३०१९) तम भेद चर्च्चरीनामक वृत्त लक्षयति, आईति। आइ—आदौ रगण—(रग) णो मध्यलघुर्गण इत्यर्थः ताल—तालो गुर्वादिस्त्रिकल इति यावत् दिज्जइ—दीयता मज्झआ—मध्ये एतदनतरमित्यर्थः सद्द हार—शब्दहारयोः लघुगुर्वोरिति यावत् त्रिण्णत्रि—द्वयमपि पलत—पतति शब्दहारौ वारद्वय (प)ततः, वेत्रि काहल—द्वावपि काहलौ लघू हार—हार गुरुमित्यर्थः पूरह—पूरय ततश्च सोहणा—शोभने सख ककण—शखककणे लघुगण (गुरु) इति यावत् पूरयेति पूर्वेणान्वयः, हे सुदरि सव्व लोअहि बुज्झआ—सर्वलोकैर्बुद्धा मोहणा—मोहिनी चित्तस्येति भावः चर्च्चरी भण—कथय इति णाअ राअ—नागराजः पिंगलः भणत—भणति। रगण सगग-जगणद्वय-भगण(रगण)रचितचरणा चर्च्चरीति फलितार्थः।

१८५. चर्च्चरीमुदाहरति, पाअ णेउरेति। हस सद्द सुसोहणा—हसशब्दवत् सुशोभन णेउर—नूपुर यया इति शेषः यथायथ योजनीयः पाअ—पादयोः झझणक्कइ—झझणायते, थोर थणग्ग—विस्तीर्णस्तनाग्रे थूलस्थूल मणोहर—मनोहरं मोत्तिदाम—मौक्तिकदाय णच्चइ—नृत्यति, तिक्खचक्खु क(टक्ख) आ—तीक्ष्णचक्षुःकटाक्षः बाम दाहिण—वामदक्षिणयोर्भागयोरिति भावः॥

१८६. अथैकोनविंशत्यक्षरचरणस्य वृत्तस्य पचलक्ष चतुर्विंशतिसहस्रमष्टाशीत्युत्तर शतद्वय ५२४२८८ भेदा भवति, तत्र सप्तत्रिंशोत्तरशतद्व(त्र)याधिकैकोनपचाशत्सहस्रोत्तरैकलक्षतम(१४६३३७) भेद शार्दूलविक्रीडित(?) नामक वृत्त लक्षयति, मविति। ज—यत्रैकोनविंशत्यक्षरचरणे वृत्ते प्रथम मो—मगणस्त्रिगुरुर्गणः ततः सो—सगणो तगुरुः, ततश्च जो—जगणः मध्यगुरुः ततश्च समतगुरत्रो—सम्यगते गुरुर्यत्रा तादृशाः स त तो—सततः सगण तगण तगणा इत्यर्थः सगणेऽनगुरुस्तगणोऽनलघुः पुनश्च तगण इत्यर्थः,

एवप्रकारेण पादे एऊण विंसा बणो—एकोनत्रिंशतिर्वर्णाः पतति, यत्र च चउ पस्रो—चतुःपादे पिंडीस्र—पिण्डीभूताः पुनाः बत्तीस रेहे—द्वात्रिशद्रेखाः लघव इत्यर्थः, अठ्ठासि जोणी—अष्टाशीतियोनयः अष्टाशीतिमात्राणा कारणानीति यावत् चौ(चो) श्राली ( सह ) हार—चतुश्चत्वारिंशित् हारा गुरवः येषामष्टाशीतिमात्रा भवति तादृशाश्चतुश्चत्वारिंशद्गुरव इत्यर्थः, एवप्रकारेण छेहत्तरि वण्णश्रो—षट् ( सप्ततिवर्णा ) प्रतिचरण सउ बीस मत्त—विंशत्यधिकशतमात्राश्च भणिश्र—भणिताः, तत् सद्दूलसट्टा—शार्दूलसाटक मुणो—जानीत इति पिंगल भणे—पिंगलो भणति ।

१८७. शार्दूलसाटकमुदाहरति, जे लकेति । जे—ये लका गिरि मेहलाहि—लकागिरिमेखलायाः त्रिकूटाचलकटकादित्यर्थः खलिआ—स्खलिताः ततश्च सभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनेन दरिद्दत्तण—दरिद्रत्व पत्ता—प्राप्ताः । ते इण्हि—इदानीं मलयानिलाः विरहिणीनिःश्वाससपर्किणः सतः शिशुत्वेऽपि तारुण्यपूर्णा इव बहला जाता । कर्पूरमजरीसाटके देवीनियुक्तविचक्षणायाः वाक्यमेतत् ॥

१८८. पुनरपि शार्दूलविक्रीडित प्रकारातरेण लक्षयति, प थारे इति । जह—यत्र पत्थारे—प्रस्तारे वण्णुज्जल—वर्णोज्ज्वलानि तिण्ण चामर बरे—त्रीणि चामरवराणि गुरूणि दीसति—दृश्यते, ततश्च उक्किट्ठ—उत्कृष्टं लह बिणि—लघुद्वय चामर—चमर गुरुरित्यर्थः तहा—तथा गंधग्गुरो—गंधो लघुः गुरुश्च उट्ठोश्र—उत्थापितः दत्त इत्यर्थः । तहा—तथा तिणो त्रयस्त्रीणि वा सु ( सु )गध—सुगधाः शोभना लघव इत्यर्थः चामर—चामराणि गुरवः दिउ—दीयते, ततश्च गधा—गधो लघुः जुआ चामरं—द्वे चामरे गुरु अत—अते पादाते चामरद्वयाते चेत्यर्थः रेहतो—राजमानः धअपट्ट—ध्वजपटो लघ्वादिस्त्रिकल इति यावत् कहिश्रं—कथित तत्सद्दूलविक्कीडिश्र—शार्दूलविक्रीडित ॥

१८९ शार्दूलविक्रीडितमुदाहरति, जमिति । जं धोश्रजण लोल लोअण जुश्र—यस्मात् धौताजनलोललोचनयुगं धौतमजन यस्य तादृश लोचनयुग यस्मिस्त तादृद-मित्यर्थः लबालअग्गं—लबालकाग्र लंबान्यलकान्यग्रे यस्य तत्तादृशं मुहं—मुखमित्यर्थः तथा ज—यतः हत्थालबिश्र केस पल्लव चए—हस्तालबितकेशप-ल्लवचये विंदुणो—बिंदवो घोणति—घूर्णंति परितो भ्रमतीति । यावत् । तथा ज—यस्मात् एक्क सिश्रश्रंचल णिवसिअ—एक सिचयाचल निवसित ण्हाणकेलिठ्ठिआ तं—तस्मात् हेनोः स्नानकेलिस्थिता अब्भुदेक्क जणणी—अद्भुतैकजननी आश्चर्यमुखोत्पत्तिभूमिरिति यावत् इअ—इयं कर्पूरमजरी अमुना जोईसरेण—योगीश्वरेण कापालिकभैरवानंदेन आणीदा—आनीता । यतो नेत्रयोरजनं धौत

विंदवश्च केशपा (शा) श्च्योतति एकमेव च वस्त्र धृत, ततः स्नानकेलिस्थेयमानितेत्यर्थः। भैरवानदाकृष्टा कर्पूरमंजरीं प्रेक्ष्य विदूषक प्रति राज्ञो वाक्यमेतत्। शार्दूलविक्रीडितं निवृत्त।

१६०. अथैकोनविंशत्यक्षर (चर)णस्य वृत्तस्य चतुःसप्तत्यु (षट्यु)त्तरशतद्वयाधिकत्रयोविंशतिसहस्राधिकपंचलक्ष (५२३२६४) तमं भेदं चंद्रमालानामक वृत्त लक्षयति, ठइवीति। दिअवर जुअल—द्विजवरयुगल चतुर्लघ्वात्मकगणद्वयमिति यावत् करअल—करतल गुर्वंत सग (ण)मित्यर्थः करहि—कुरुष्व पुणवि—पुनरपि हे बुहअण—बुधजन दिअव (रयु) अल—द्विजवरयुगलं सज्ज—सज्ज करहि—कुरुष्व। एवं च विमलाः सरसगणाः पंचेति शेषः जह—यत्र नितरा स्थाप्यते बिमल मइ—विमलमतिः तुरिअ कइ—त्वरित कविः उरग वइ—उरगपतिः सइ—ता चंदमलु—चंद्रमाला (कहइ) कथयति॥ अत्र पुणवि दिअवर जुअल मज्झ करअल करहीति क्वचित्पाठः, मज्झ करअल—मध्यकरतलं मध्ये करतलं यस्य तादृश द्विजवरयुगलं पुनरपि कुरुष्वेत्यर्थः, परंतु अत्र पूर्वोक्तात् मध्ये करतल कुरुष्वेत्यत्र मध्यपदसमभिव्याहारान्देवाग्रिमद्विजवरस्य मध्यकरतलत्वप्राप्त्या पुनर्मध्यकरतलमिति द्विजवरविशेषण पद्यपूरणायैवेति सप्रदायविदः, द्विजवर(द्वय)सगणोत्तरद्विजवर(द्वयः)रचितचरणा चद्रमालेति निष्कर्षः।

१६१. चंद्रमालामुदाहरति, अमिअ करेति। अमिअ कर—अमृतकरः किरण—किरणान् धरु—धरति, वण—वन फुल्लु णव कुसुम—फुल्लनूतनपुष्प ज्ञातमिति शेषः, काम—कामः कुविअ भ(इ)—कुपितो भूत्वा सर ठवई—शरान् स्थापयति णिअ धणु—निजधनुः धरइ—धरति। पिक—पिकः कोकिलः समअ—समये वसंतकाले णिक—समीचीनं यथा स्यात्तथा रवइ—रौति, तुअ—तव कंत—कांतः प्रिय इत्यर्थः थिर हिअलु—स्थिरहृदयः, गमिअ दिण—गमितानि दिनानि पुनः ण मिलु—न मिलति, सहि—हे सखि तस्मात् त्वं पिअ णिअलु—प्रियनिकटे जाहि—गच्छ॥ कलहातरिता कांचिन्नायिका प्रति सखीवाक्यमेतत्॥

१९२. अथैकोनविंशत्यक्षरचरणवृत्तस्य चतुश्चत्वारिंशदुत्तरैकशताधिकद्विषष्टिसहस्रोत्तरद्विलक्षतमं भेदं धवलनामकं वृत्त लक्षयति, करिअ इति। हे राजसमानसे सुमुखि रमणि जसु—यस्य पअ पअ अले—(पादे) पादे पतितान् सरस गण—श्लाघ्यगणान् दिअवर चउ—द्विजवरान् चतुर्लघुकगणान् चतुरः ठइअ ठइ—स्थापयित्वा स्थापयित्वा कमलगणः सगणोऽतगुरुरित्यर्थः, कर पाणि कमल हत्थमिति सगणनामसु कमल शब्दस्योपात्तत्वात्, चउ पअहि—चतुर्षु पदेषु प्रतिचरणमित्यर्थः करिअ—क्रियते तत् धवलकं वृत्तमित्यर्थः, महिअले—महीतले

कहि—कथ्यते इति सुगुणजुत्र—सुगुणयुक्तः विमलमइ—विमलमतिः फणिपतिः पिंगलः सही सत्य भणति ॥ यत्राष्टादशलघुरनतरमेको गुरुः पतति तत् धवलनामकं वृत्तमिति फलितार्थः।

१९३. धवलमुदाहृति, तरुणेति। तरुण तरणि—तरुणः माध्याह्निकः तरणिः सूर्य्यः तवइ धरणि—तापयति धरणीं, पवण वह खरा—पवनो वाति खरः, लग णहि जल—निकटे नास्ति जलं, जण जिअण हरा—जनजीवनहर बड मरुथल—महत् मरुस्थल विद्यते इति शेषः। दिसइ चलइ—त्विषोऽपि चलति तरुणतरणिकिरणा अर्क्कत्विषोऽपि चलंतीवेत्यर्थः, हिअअ डुलइ—हृदयं कपते, हम इकलि वहू—अहमे (क)ला वधूः घर णहि पिअ—गृहे नास्ति पतिः, सुणहि पहिअ—शृणु हे पथिक कहु—कुत्रापि तव मनः स्थातुमिति शेषः इछइ—इच्छति ॥ कस्याश्चिद्वाग्विदग्धाया इद वाक्यम्, अत्र पथिकपद निवासस्थलकथनार्हत्व मार्गप्रातग्रामवासयोग्यत्वं च व्यजयति, तरुणतरणिपदाभ्या चंडाशुकिरणभीत्या निखिलपथिकसचारअ( शू )न्यतयाग्रिममार्गस्यातिदुर्गमत्व व्यज्यते, एकलेति पदमन्यजनावलोकनीयतया यथेच्छक्रीडाकारित्वं व्यजयति, सर्वथात्रैव त्वया स्थेयमिति व्यजयति। धवलो निवृत्तः।

१९४. अथैकोनविंशति(त्यक्षर)चरणस्य वृत्तस्य द्विसप्तत्यधिकैकशताधिकत्रिसहस्रतमं भेद शंभुनामक वृत्त लक्षयति, अवलोआअमिति। सुच्छदं—सुच्छंदः एतदिति शेषः (भणि—) भणित्वा ( मण ) मभ्भे—मनोमध्ये सुक्खं—सुख सवुत्तं—सवृत्त त्वम् अवलोआअ—अवलोकय कुतीपुत्ते सजुत्तं—कुतीपुत्रेण संयुक्तम् अग्रस्थितगुरुद्वयात्मकगणयुक्तमिति यावत् हत्था—हस्त गुर्वंतसगणमिति तावत् दिज्जसु—ददस्व अग्गे—अग्रे कर्णाग्रे इति यावत् एव( अं ) गण दिज्जसु—एवं प्रकारेण गणं ददस्व, पुनरपि सगणकर्णौ देहीत्यर्थः, अंते—सगणकर्णान्ते सुपिअं—सुप्रियं लघुद्वयात्मकं गण ठवि—स्थापयित्वा अते—पादाते सत्ता हारा—सप्त हारान् गुरून् किज्जसु—कुरुष्व इअ—इति प्रकारेणेति भावः बत्तीसा णिअ मत्ता—द्वात्रिंशन्निजमात्राः जं—यत्र पाअह—पादेषु पतंतीति शेषः सभू णामाअ—शभुनाम्ना छंदो—छदः जानीहीति शेषः।

१९५. शभुमुदाहरति, सिअ विठ्ठीति। सिअ विठ्ठी—शीतवृष्टिः किज्जइ—क्रियते जीआ लिज्जइ—जीवो गृह्यते देवेनेति शेषः, बाला वुड्ढा—बाला वृद्धाः कंपता—कपते पच्छा वाहअ—पश्चिमवाताः वह—वाति, काअइ—काये लग्गे—लगंति, सव्वा दीसा—सर्वा दिशः झपंता—आच्छन्ना भवतीत्यर्थः। जइ जड्डा रोसइ—यदि शीतं रुष्यति, तदा चित्ता हासइ—चित्त हसति, पेटे—उदरे

अग्गी—अग्निः थप्पीआ—स्थाप्यते, कर पाआ स( भरि ) करपादौ संकोच्य भित्तरि—मध्ये किज्जे—क्रियते अप्पा अप्पी—आत्मा आत्मनि लुक्कीआ—गाप्यते। कस्यचिद्दरिद्रस्यैतद्वाक्यं। शंभुनिर्वृत्तः ॥

१९६. अथ विंशत्यक्षरचरणस्य वृत्तस्य षट्सप्तत्युत्तरपंचशताधिकाष्टचत्वारिंशत्सहस्रोत्तरं दश लक्ष भेदा भवति, तत्राष्टोत्तरशताधिक (षट्सप्तत्यधिक) द्विसप्ततिसहस्रोत्तरत्रिलक्षतम ( ३७२०७६ ) भेद गीतानामकं वृत्तं लक्षयति, जहीति। हे मुद्धि—मुग्धे जहि—यत्र आइ—आदौ हत्थ—हस्तः गुर्वंतः सगण इति यावत् णरेंद विण्णवि—नरेंद्रद्वयमपि मध्यगुरुजगणद्वयमपीति यावत् , ततः पाअ—पादः आदिगुरुर्भगण इत्यर्थः, पंचम—पंचमः जोहलो—मध्यलघुरग( ण ) इति यावत्, जहि यत्र छट्ठहि—षष्ठे ठाइ—स्थ(स्था)ने हत्थ—हस्तः गुर्वंतः सगणः अंतहि—अंते सगणान्ते पादांते वा सल्ल—शल्यं लघुः णेउरो—नूपुरं गुरुः दीसइ—दृश्यते। इदं च क्रियापदं सर्वैः प्रथमांतैर्गणवाचकैः पदैः सह योजनीयं। सोइ—तत्तत् णीअउ—समीचीनं सव्व लोअहि जाणिओ—सर्व्वलोकैर्ज्ञातं त्रैलोक्यप्रसिद्धमिति यावत्, कवि सिठ्ठि सिट्ठउ—कविसृष्टया सृष्टं दिट्ठ दिठ्ठउ—दृष्टया दृष्टं पिंगलेण वखाणिओ—पिंगलेन विख्यापितं गीअ छंद—तद्गीतानामकं वृत्तमित्यर्थः। वृत्तविशेषणानि पद्यपूरणायेति मतव्यं ॥

१९७. गीतामुदाहरति, जहेति। जह—यत्र केअइ चारु चपअ चूअ मञ्जरि वञ्जुला—केतकिचारुचपकचूतमंजरीवञ्जुलानि ( केतकी ) चारूणि चंपकानि चपकपुष्पानि चूतस्य मजर्य्यः नवपल्लवानि वञ्जुलानि चैतानीत्यर्थः फुल्लु—पुष्पितानि विकसितानीति यावत् , केसु काणण—किंशुककाननं सव दीस दीसइ—सर्वस्यां दिशि दृश्यते, भम्मरा—भ्रमराः पाण वाउअ(ल)—पानव्याकुला मकरंदानुपानप्रमत्ता इत्यर्थः जाता इति शेषः। पम्म गंध विबंधु—पद्मगंधविबंधुः क( म )लसौरभस्य विशिष्टो बधुरित्यर्थः, बंधुरः विचक्षणो मानिनीमानभंजने इति भावः। मंद मंद—मन्दमन्दः समीरणा—समीरणः वातः वह—वाति, तरुणीजनाः णिअकेलि कौ (को)तुक लास लग्गिम लग्गिआ—निजकेलिकौतुकलास्यलंगमलग्नाः ॥

१९८. अथ विंशत्यक्षरचरणस्य वृत्तस्यैकपंचाशदधिक(नव)नवतिसहस्रोत्तरपंच( षट् )लक्षतमं (६९९०५१) भेदं गड( क )नामकं वृत्त लक्षयति, रग्गणेति। रग्गणा—रगणः मध्यलघुर्गण इति यावत् पलंतआ—पतति पुनः कतआ—कांतः णरंद—नरेंद्रो मध्यगुरुर्जगण इति यावत् पततीति पूर्वेणान्वयः एवं सुसक्कएण—स्वशक्त्या निजकवित्वसामर्थ्येन सुछक्कएण—सुषट्केन भण गणषट्केनेत्यर्थः सह एक्क—एकं हारु—हारं गुरुं मंतही—आमंत्रयस्व स्थापयस्वेत्यर्थः, पाअ अंतही—

पादाते सुसद्द—सुशब्दः शोभनो लघुर्देय इति शेषः। यत्र संख—संख्याया बीसए—विंशतिः सुवण्ण—सुवर्णाः तीस मत्त—त्रिंशन्मात्राः पाअ पत्त—पादे प्राप्ताः तीअ भाअएण—तृतीयभागेन त्रिंशत्तृतीयभागो दश (त)त्संख्येति यावत् हार (गुरुः) स दश लघुः आउ—आयाति पततीति यावत्, ए—एनं गडआ—गडकं गणेह—गणयस्व बुध्यस्वेत्यर्थः, इति फणिंद—फणींद्रः गाउ—गायति ॥ प्रथमं गुरुस्तदनतर लघुरेवंक्रमेग यत्र विंशत्यक्षराणि चरणे पतति तद्गंडकनामकं वृत्तमिति फलितार्थः।

१९९. गडकमुदाहरति, तावेति। जाव—यावत् हत्थ—हस्ते विज्जु रेह रंग णाइ—विद्युद्रेखारंगवत् अतिचचलमिति भावः एक्क—एक दव्व—द्रव्यं णच्च—नृत्यति, ताव बुद्धि—तावद्बुद्धिः तावत् शुद्धिः तावत् मानः तावत् दान तावत् गर्वः। एत्थ अंत—एतदन्ते सोइ—तत् द्रव्य अप्प दोस—आत्मदोषेण देव रोस—दैवरोषेण यदीति शेषः णठ—नष्ट होइ—भवति तदेति शेषः, कोइ बुद्धि—(कुत्र बुद्धिः) कुत्र शुद्धिः कुत्र मानः कुत्र दान कुत्र गर्वः ॥

२००. अथैकविंशत्यक्षरचरणस्य वृत्तस्य त्रि(द्वि)पचाशदक्षरैकशताधिकसप्तनवतिसहस्रोत्तरं विंशतिर्लक्षं भेदा (भ)वति, तत्र पचोत्तरशतत्रयाधिकनवाधिकनवतिसहस्रोत्तरैकलक्षतमं (त्रिनवत्युत्तरनवशताधिकद्विसहस्रोत्तरत्रिलक्षतमं ३०२९९३) भेदं स्रग्धरानामकं वृत्तं लक्षयति, वे कण्णेति। यत्र प्रथमं वे कण्णा—द्वौ कर्णौ गुरुद्वयात्मकगणावित्यर्थः, ततो गंध हारा—गंधहारौ लघुगुरू इति यावत्, ततश्च वलअ दिअगणा—वलयद्विजगणौ गुरुलघुचतुष्टयात्मकगणाविति यावत्, ततः हत्थ हारा—हस्तहारौ सगणगुरुकावित्यर्थः यत्र पलंता—पततः, ततश्च एक्कल्ला—एकलं शल्य लघुः कण्णा—कर्णौ गुरुद्वयात्मको गण इत्यर्थः अत—अते कर्णगणाग्रे इत्यर्थः धअपअ सहिआ—ध्वजपटसहितः लघ्वादित्रिकलगणसहित इत्यर्थः कंता—कातः कंकणा—कंकण गुरुरित्यर्थः यत्र पततीति शेषः। जं—यत्र एक्कग्गला—एकाधिका बीसा—विंशतिःएकविंशतिरिति यावत् लहु गुरु—लघुगुरवः पलइ—पतंति बारहा—द्वादश दीहा—दीर्घाः होहि—भवति, पिंडा—पिंडिताः बत्तीस अग्गा सउ—द्वात्रिंशदधिकशतं मात्रा इति शेषः यत्र भवतीति पूर्वेणान्वयः, सा फणि भणिआ—फणिभणिता मुद्धा—मुग्धा मनोज्ञेति यावत् सद्धरा—स्रग्धरा होइ—भवति ॥ स्रग्धरानामक तद्वृत्तं भवतीत्यर्थः ॥

२०१. स्रग्धरामुदाहरति, ईसेति। ईसा रोस प्पसाद प्पणदिसु—ईर्ष्यारोष(प्र)सादप्रणतिषु ईर्ष्यया यो रोषस्तन्निवृत्तये यः प्रसादस्तन्निमित्तं याः प्रणतयस्तास्वित्यर्थः बहुसो सग्ग गंगा जलेहिं—बहुशः स्वर्गंगाजलैः आमूलं पूरिदाए—

आमूलं पूरितया तुहिण कर कला रुप्प सिप्पीअ—तुहिनकरकलारौप्यशुक्त्या गी( गिरि )सुआ पाअ पंकेरुहाण—गिरिसुता( पाद )पंकेरुहयोः दोहि—द्वाभ्या णद मौ( मउ )लि णिहिताग्ग हत्थेहिं दोहिं—नतमौलिनिहिताग्रहस्ताभ्या द्वाभ्या जोओ( ण्हा )मोत्ताहलिल्लं—ज्योत्स्नायुक्त ( मुक्ता ) फल्युक्तम् अग्घ सिग्घ देत्तो व( अर्घ्यं शीघ्रं ) ददिव रुद्दो—रुद्रः जअइ—जयति ।। स्रग्धरा निवृत्ता ।।

२०२. अथैकविंशत्यक्षरचरणस्य वृत्तस्य विंशत्युत्तरशतद्वयाधिकचत्वारिंश ( एकोनविंशत्युत्तरपचशताधिकपंचा( श )त्सहस्रोत्तरचतुर्लक्षतमं ( ४५०५१६ ) भेदं नरेन्द्रनामक वृत्त लक्षयति, आइहीति। जत्थ—यत्र आइहि—आदौ पाअ-गण—पादगणो गुर्वादिर्भगण इति यावत् पअलिअ—प्रकटितः, अंत—अंते भगणावसाने इति यावत् जोहल—जोहलो मध्यलघुरगण इत्यर्थः धरीजे—ध्रियते स्थाप्यत इति यावत्, ततः काहल सद्द गध—काहलशब्दगधाः एकलघव इत्यर्थः इअ—एते मुणि गण—मुनिगणाः सप्त गणा इति यावत् देया इति शेषः, तथाच रगणानतर सप्त लघवः स्थाप्या इति भावः, ताह—ततः सप्तलघ्वनंतरमिति यावत् कक्कण—कक्कण गुरुरित्यर्थः करीजे—क्रियते। ततश्च एक्क भेरी ( रि )—एका भेरी लघुरित्यर्थः सद्दइ—शब्दायते स्थाप्यत इत्यर्थः णरवइ—नरपतिर्मध्य-गुरुर्जगणः चल—चलति तिष्ठतीत्यर्थः, सुभव्वा—सुभव्यः संख—लघ्वात्मकोगणः फुक्कइ—फुत्क्रियते उच्यते इत्यर्थः, जह—यत्र अत—अंते पादान्ते चामर जुग—चामरयुग गुरुद्वयमित्यर्थः, पअलिअ—प्रकटितम् एह—एतत् णरिंदउ छंदा—नरेन्द्रच्छंदः ।।

२०३. नरेन्द्रमुदाहरति, फुलिअ इति। केसु—किंशुक फुलिअ—पुष्पित तह—तथा चद—चन्द्रः पअलिअ—प्रकटितः ।।

× × ×

२१२. अथ सालू (र) नामक वृत्तं ल(क्षयति), कण्णेक्केति। यत्र पढम—प्रथ(म) दिअ—दत्तः स्थापित इति यावत पअहि—पादेषु कण्णे(क्क)—कर्णं एकः पलइ—पतति, विलअ—विलये पादाते इति यावत् करअल—करतल गुर्वतः सगण इति यावत दिअ—दत्तः, तह मह—तन्मध्ये गुरुद्वयात्मकगण सगण-योर्मध्ये इति यावत् मत्ता वण्ण सुल (लि) अ—मात्रावर्णसुललिताः छह चउक्कल-षट्चतु(कला) किअ—कृताः, एवं च पअ—पदे पअलिअ (उ)—प्रकटिताः बत्ती(स)ह कल—द्वात्रिंशन्मात्राः ठवह—स्थापय, हे मणहरणि—मनोहरणि रअणि,पहुवअणि—(र)जनीप्रभुवदने कमलदलनयने सरस सूपअ—सरससुपद रसैः लघुभिः सहितानि शोभनानि पदानी यस्य तत्तथा तह तथा वर सम्यक्

यथा स्यात्तथा ठइअ—स्थ पित तत् धुअ—ध्रुव निश्चित वर—वृत्तश्रेष्ठ सालूर—सालूरनामक वृत्त भण—कथय इति कइ दिणअर—कविदिनकरः भुअअ पए—भुजगपतिः भणि—भणति ॥ कर्णानन्त( रष )ट्चतुःकलोत्तरसगणरचितचरणः सालूर इति फलितार्थः ॥

२१३. शालूरमुदाहरति जमिति। ज—यत् यस्मात् फुल्लु—( पुष्पितं ) कमलवन वहइ लहु पवण—वाति मन्दपवनः सव दिशि विदिस—सर्वत्र दिक्षु विदिक्षु भमरकुल—भ्रमरकुलस्य झङ्कारः पतति वण रवइ कोइलगण—वने रौति कोकिलगणः विरहि हिअ अ—विरहिहृदयं दरविरसं—भयविगतरसं हअ—जात। उलसि उठिअ मण—उल्लासोत्थितमनाः सरस णलिणिदल किअ सअणा—सरसनलिनीदलकृतशयनः आणदिअ—आनन्दितः, पल्लट्ट—प्रत्यावृत्तः निवृत्त इति यावत् सिसिर रिउ—शिशिरऋतुः, दिअस दिहर भउ—दिवसा दीर्घाः जाताः, अतो हेतोः कुसुम समअ अवतरि (अ) वणा—कुसुमसमयः वसतकाल इति यावत् अवतीर्णो वने ॥ शालूरो निवृत्तः ॥

२१५. त्रिभगीमुदाहरति । वलइअ विसहर—वल( यि )तवि( ष )धरः तिलइअ सुदर चद—तिलकितसुन्दरचन्द्रः मुणि आणद—मुन्यानदः मुन्यानदस्वरूपः लज्जकेत्यर्थः जण कंद—जनकदः त्रैलोक्यमूलमिति यावत् वरदगमणक (र)—वृषभगमनकरः तिसुल डमरु धर—त्रिशूलडमरुधरः णअणहि डाह अणंग-नयनाभ्या दग्धानगः सिरगग—शिरोगंगः गोरिअधंग—गौर्य्यर्द्धांगः हर—हरः जअइ जअइ—जगति जयति। भुअयुगधृतगिरिः दहमुह कंस विणासा—दशमुखकशविनाशः पिअ वासा—पीतवासाः सुदर हासा—सुभगहास्यः, बलि छलि—वलिं छलयित्वा (महि हरु—) महीहरः—पृथ्वीोद्धारक इति यावत्, असुरविलयकरः मुणिजण माणसहसा—मुनिजनमानसहसः, अवहट्टभाषाया व्यत्यासे दोषाभावात् सुह भासा—सुभाषः मधुरवचन इति यावत् उत्तमवशः हरिः श्रीकृष्णः जअइ—जगति जअइ—जयति ॥ त्रिभगी निवृत्ता ॥

क्षोणीपालकमौलिरत्नकिरणस्फूर्जत्प्रभाराजिताम्,
अम्भोजद्वितयः परास्तगणनान्तेवासिससेवितः ।
सद्विद्याकवितालताश्रयतरुस्तेजस्विनामग्रणी-
र्जातः श्रीजगदीश इत्यभिहितो नाम्ना तदीयः सुतः ॥११॥
स्फूर्ज्जद्ब्राह्मण्यतेजःकरनिकरसमुद्भूतदिग्जालपूज्यः
श्रीकृष्ण (?) जपनियमविधिध्वंसिताशेषपापः ।
आयुर्वेदार्थदीक्षागुरुरतिसुमतिः शब्दविद्यानुरक्तो,
जातः पुत्रस्तदीयो विमलतरयशाः कृष्णदेवाभिधानः ॥१२॥

